म० म० रुद्रधरकृतं

# वर्षकृत्यम्

(मीमांसकशिरोमणि जगद्धर झा शर्मपरिवर्धितम्)

सम्पादकेन

**डॉ० पं० श्री शशिनाथ झा विद्यावाचस्पतिना**

**संशोध्य पुनः परिवर्धितम्**



प्रकाशकः

उर्वशी प्रकाशनम्

पटना

प्रकाशक :—

**उर्वशी प्रकाशन**
किसान कोल्ड स्टोरेज लेन
मुसल्लहपुर, पटना–६



प्रथम संस्करण–१००० प्रति

प्रकाशनवर्ष–१९९८ ई०

मूल्य–५०/– (पचास टाका मात्र)

*फोटो टाईप सेटेड : राजा प्रिंटेक्स,* मुसल्लहपुर, पटना–६
*मुद्रक : पूर्णिमा प्रिन्टर्स,* मुसल्लहपुर, पटना–६

# भूमिका

प्रतिवर्षं नित्य–नैमित्तिकानि अनेकानि व्रत–पूजा–स्नान–दानादि–कृत्यानि भवन्ति, विविधपर्वसमारोहाश्च क्रियन्ते । तत्र प्रतिप्रान्तं पर्वायोजनरीति र्भिन्ना भिन्ना भवति । तदर्थं तत्तद्देशीय–निबन्धकारैः पूजादिपद्धति र्विरचिता । मिथिलायां धीरेश्वर–विद्यापति–रुद्रधराणां वर्षकृत्यानि प्रचलितानि आसन् । किन्तु साम्प्रतं रुद्रधरकृतस्यैव सर्वत्र प्रचारो वर्तते । वर्षमध्ये समागम्यमानानां व्रतादीनां विधिः कथादयश्च वर्षकृत्ये सन्ति ।

म० म० लक्ष्मीधरसुतोऽयं वर्षकृत्यकारो रुद्रधरो दरिहरावंशीयः १३५० ई० वर्षे मिथिलामलञ्चकार । व्रतपद्धति–श्राद्धविवेकाष्टाध्यायीवृत्ति–व्याकरणवार्तिकसंग्रहाद्यनेके ग्रन्था एतस्य प्रसिद्धाः सन्ति । अस्य वर्षकृत्यं विशुद्धस्मार्त्तसम्प्रदायानुसारं (स्मृतिग्रन्थानुसारं) वर्तते ।

वर्तमानशताब्दस्यारम्भे मिथिलायां तन्त्राचारस्य (दक्षिणतन्त्रस्य) प्रभावः समागतः । स्मार्त्तकृत्येन सहैव क्वचित् तन्त्रानुसारं पूजनं प्रारब्धम् । अनेके विधयः, अनेकानि पर्वाणि च पूर्वमप्रचलितान्यपि प्रारब्धानि । अतएव आवश्यकता जाता वर्षकृत्ये तत्समावेशस्य, परिवर्धनस्य च । ततस्तत्रभवता गङ्गौली–ग्रामाभिजनेन पल्लीवंशावतंसेन मन्त्रार्थसंग्रह–दुर्गापूजापद्धतिप्रभृतिग्रन्थकारेण मिथिलेश–महाराजाधिराज–रमेश्वरसिंहाश्रितेन मीमांसकशिरोमणिना जगद्धरझाशर्मणा रुद्रधर–कृतवर्षकृत्ये प्रचुरं जनोपयोगि परिवर्धनं कृतम् । अनेनैव बहुत्र म० म० महेशठक्कुरकृततिथितत्त्वचिन्तामणिग्रन्थस्य प्रामाण्यं वर्षकृत्ये निवेशितम् । तस्य प्रकाशनं बहुपूर्वमेव जातं, साम्प्रतं तद्दुर्लभप्रायं वर्तत इति खिद्यते मैथिलमनीषिमनः । पुरातनमुद्रितपुस्तकं गयापद्धत्यादिग्रन्थकर्त्तुः **पं० चिरञ्जीव झा शर्मणः** शुभङ्करपुर वास्तव्यस्य

पुत्रेण, **पं० रघुनाथ झा शर्मणः** पुत्रेण, **श्री शम्भुनाथ झा** महोदयेन परमकृपया प्रकाशनाय प्रदत्तम् । तदनु मया वर्षकृत्ये बहुत्रापेक्षितं संशोधनं परिवर्धनञ्च कृतं, येन साम्प्रतिकजनानां सर्वप्रकारेणेदं वर्षकृत्यं परमोपयोगि भवेदिति । तिथिद्वैधाद्यावश्यकविचारात्मिका टिप्पणी अपि मयैव कृता । आशासे, एतस्य उपयोगितया समादरं विधाय सामाजिकाः श्रद्धालवः स्वागतं करिष्यन्ति । इति ।

*१.१.१९९८ ई०*
*स्नातकोत्तर व्याकरणविभागः,*
*का० सिं० द० संस्कृत विश्वविद्यालयः,*
दरभङ्गा

*निवेदक :–*
***पं० श्री शशिनाथ झा***
*विद्यावाचस्पतिः*
*(दीपग्रामवास्तव्यः)*

# विषयानुक्रमणिका

■

# पारिभाषिकाः शब्दाः

| | | |
|---|---|---|
| **तैजसपात्र** | : | धातुनिर्मित पात्र (तमघैल) । |
| **त्रिदेव** | : | ब्रह्मा, विष्णु, महेश । |
| **त्रिवर्ग** | : | धर्म, अर्थ, काम । |
| **त्रिकर्म** | : | अध्ययन, यजन, दान । |
| **त्रिक** | : | वंशानुक्रमात् मृतास्त्रयः पुरुषास्त्रयो वा मातरः । यथा–पिता-पितामह-प्रपितामहाः । मातामह प्रमातामह–वृद्धप्रमातामहाः । माता–पितामही-प्रपितामही |
| **त्रिसंध्य** | : | प्रातः, मध्याह्न, सायम् । |
| **चतुर्वर्ग** | : | धर्म, अर्थ, काम, मोक्ष । |
| **पञ्चाङ्ग** | : | तिथि, वार, नक्षत्र, योग, करण निर्देशकं तिथिपत्रम् । |
| **" प्रणाम** | : | बाहुभ्याञ्चैव जानुभ्यां शिरसा वक्षसा दृशा । |
| **पञ्चामृत** | : | गोदुग्धं शर्करा चैव धृतं दधि तथा मधु । |
| **पञ्चगव्य** | : | गोशकृद्, द्विगुणं मूत्रं, पयःस्यात् तच्चतुर्गुणम् । धृतं तद्द्विगुणं प्रोक्तं पञ्चगव्ये तथा दधि । ताम्रपात्रे पलाशपत्रपुटके वा गोमयं पलं, गोमूत्रं पलं, दुग्धं-४ पलं, घृतं-२ पलं, दधि-२ पलम् (कपिलायाः गोः) । |
| **पञ्चपल्लव** | : | अश्वत्थोदुंम्बरप्लक्षचूतन्यग्रोधसम्भवाः । (आम्र, पिप्पल, वट, प्लक्ष, उदुम्बर वृक्षाणाम्)। |
| **पञ्चपर्व** | : | अमावस्या, पूर्णिमा, सूर्यसंक्रान्तिः, अष्टमी, चतुर्दशी । |
| **पञ्चपात्र** | : | पाद्य, अर्ध्य,आचमनीय, मधुपर्क, पुनराचमनीय पात्राणि । *अथवा* पञ्चानामपि कार्याणां समपादकमेकमेव पात्रम् । |
| **पञ्चभूत (तत्त्व)** | : | पृथ्वी, जल, वह्नि, वायु, आकाश । |
| **पञ्चभगिनी** | : | त्रिपुरा, कालिका, दुर्गा, भवानी गिरिजा तथा । एताः पञ्चभगिन्यस्तु भवन्ति कुलदेवताः ।। |
| **पञ्चलोकपालाः** | : | विनायकादिपञ्चकम्–विनायक, अम्बिका, वायु, आकाश, अश्विनौ । |
| **पञ्चरत्न** | : | नीलकं वज्रकं चेति पद्मरागश्च मौक्तिकम् । प्रवालं चेति विज्ञेयं पञ्चरत्नं मनीषिभिः ।। |
| **पञ्चमहायज्ञ** | : | अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृपज्ञोऽतिथिपूजनम् ।। |
| **पञ्चोपचार** | : | गन्ध, पुष्प, धूप, दीप, नैवेद्य । |

| | | |
|---|---|---|
| **दशोपचार** | : | अर्घ्यपाद्याचमनीय-मधुपर्काचमनानि च । गन्धादिपञ्चकञ्चेति उपचारा दशोदिता: ।। |
| **षोडशोपचार** | : | आसनं स्वागतं चार्घ्यंपाद्यमाचमनीयकम् । मधु पर्काचमन-स्नान-वसनाभरणानि च ।। गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा ।। |
| **पञ्चदेवता** | : | शिवं भास्करमग्निं च केशवं कौशिकीमपि । मनसानर्चयन् यति देवलनोकादधोगतिम् ।। (सूर्य,अग्नि, विष्णु, दुर्गा, शिव इति पञ्चदेवता,रात्रौ तु सूर्यस्थाने गणपति: । मैथिलमते तु पञ्चदेवतायां विष्णो: स्थाने गणपति: । विष्णो: पृथगेव पूजा भवति । द्रष्टव्यम्-देवषट्क शब्दे । |
| **देवषट्क** | : | गणेशं च दिनेशं च वह्निं विष्णुं शिवं शिवाम् । सम्पूज्य देवषट्कन्तु सोऽधिकारी तु पूजने ।। (तदनुसारं पञ्चदेवतां विष्णुं च सम्पूज्य कर्म समारभेत) । |
| **षट्कर्म** | : | अध्ययनाध्यापने, यजन-याजने, दान-प्रतिग्रहे । |
| **षड्रस** | : | मधुराम्ल-लवण-कटु-कषाय-तिक्ता: । |
| **षडङ्ग** | : | हृदयं, शिर:, शिखा, कवचम्, नेत्रम्, अस्त्रम् । (जङ्घे बाहू शिरो मध्यञ्चेति षडङ्गानि ।) |
| **षड्ऋतु** | : | हेमन्त, शिशिर, वसन्त, ग्रीष्म, वर्षा, शरद इति। अग्रहणादारभ्य मासद्वयस्यैको ऋतु: । |
| **षट्पुरुष** | : | (१) पिता-पितामह-प्रपितामह-वृद्धप्रपितामह अति-वृद्धप्रपितामह-वृद्धातिवृद्धप्रपितामहा: ।<br>(२) पिता-पितामह-प्रपितामहा:, मातामह-प्रमातामह-वृद्धप्रमातामहा: । |
| **सप्तपुरुष** | : | पितृत उपरि षट्पुरुषा: स्वयं चेति । |
| **सप्तमृत्तिका** | : | अश्वस्थानाद् गजस्थानाद्वल्मीकात् संगमाद् हृदात् । राजद्वाराच्च गोष्ठाच्च मृदमानीय नि:क्षिपेत् ।। |
| **सप्तधन्य** | : | यव-गोधूम-धान्यानि तिला: कङ्गुस्तथैव च । श्यामाकं चीनकश्चैव सप्तधान्यमुदाहृतम् ।। यव, गोधूम, धान्य, तिल, कङ्गुकओन (नीवार), श्यामक=साम, चीनक वा मुद्गाव्रीहि-यव-तिल-गोधूम-नीवार-श्यामाक-मुद्गा: । सप्तधान्यानि'' । |
| **अष्टाङ्गप्रणाम** | : | जानुभ्यां च तथा पद्भ्यां पाणिभ्यामुरसा धिया । शिरसा वक्षसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरित: ।। |
| **नवपत्रिका** | : | रम्भा कचुर्हरिद्राच जयन्ती विल्व-दाड़िमौ । अशोको मानकं चैव धान्यादिर्नव पत्रिका ।। समूला पत्रिका ग्राह्या हरिद्रा-धान्यकं विना ।। |

**नवग्रहाः** : रवि, सोम, मङ्गल, बुध, बृहस्पति, शुक्र, शनि, राहु, केतु ।

**नवसमिधः** : अर्कः पलाशः खदिरो ह्यपामार्गोऽथ पिप्पलः । औदुम्बरशमी-दूर्वा कुशाश्च समिधः क्रमात् ॥

**मूल्य** : द्वात्रिंशत्पणिका गावः, चतुःकार्षापणोऽवरः । वृषे षट् कार्षापणकाः,चाष्टावनडुहि स्मृताः ॥ दशकार्षापणं धेनोः, अश्वे पञ्चदशैव तु । हिरण्ये कार्षापणकः पणा नव तथाधिकाः । वस्त्रे कार्षापणश्छागेऽष्टौपणाः द्वादशाविके । वृषल्यामथ पञ्चाशन्मूल्यं कांषापणाः स्मृता ॥ निष्के पञ्चाशदेव स्याद् गजे पञ्चाशतानि वै । पञ्च कार्षापणाः प्रोक्ता दोलायां षड्रथे तथा ॥ गृहेऽष्ट कार्षापणकाः ताम्रकर्षः पणः स्मृतः । कार्षापणाःषोडश ते इति मूल्यप्रकल्पना ॥ पञ्चकार्षापणी दासी दासः स्यात् पञ्चमाषकः । अधिकं प्रकल्पयेन्मूल्यं न्यूनं वित्तानु-सारतः ॥

कर्षः = पणः = ताम्रमुद्रा (पैसा) = $\frac{१}{६४}$ रजतरूप्यकम् ।
कार्षापणः = १६ कर्षः = $\frac{१}{४}$ रजतरूप्यकम् (चौअन्नी)।
आणकः = ४ कर्षः (एक आना) $\frac{१}{१६}$ रजतरूप्यकम् ।
माषकः = ६४ कर्षः (एक रुपया)–१ ,, ,,

| देयं वस्तु | मूल्यम् | मूल्य-व्याख्या | |
|---|---|---|---|
| गौः | ३२ पणाः अष्ट आणकाः | $\frac{१}{२}$ रु० | रजतमयम् । |
| तरुणोवत्सः (बाछा) | ४ कर्षापणाः | १ रु० | ,, |
| वृषः (बड़द) | ६ कार्षापणाः | १ $\frac{१}{२}$ रु० | ,, |
| महिषी | ,, | ,, | ,, |
| अनड्वान् (महावृषः) | ८ कार्षापणाः | २ रु० | ,, |
| धेनुः (दुग्धवती सवत्सा) | १० कार्षपणाः | २ $\frac{१}{२}$ रु० | ,, |
| अश्वः | १५ ,, | ३२ $\frac{३}{४}$ रु० | ,, |
| हिरण्यम् | २७ पणाः | $\frac{२७}{६४}$ रु० | ,, |
| वस्त्रम् | १ कार्षापणाः | $\frac{१}{४}$ रु० | ,, |
| छागः | ८ पणाः | $\frac{१}{८}$ रु० | ,, |
| मेषः | १२ पणाः | $\frac{१}{८} + \frac{१}{१६}$ रु० | ,, |
| वृषली | ५० कार्षापणाः | १२ $\frac{१}{४}$ रु० | ,, |

| | | |
|---|---|---|
| निष्कः (१ पणमितं हिरण्यम्) | " | १२ १/४ रु० रजतमयम् । |
| गजः | ५०० " | १२५ रु० " |
| दोला | ५ " | १ १/४ रु० " |
| रथः | ६ " | १ १/२ रु० " |
| गृहम् | ८ " | २ रु० " |
| दासी | ५ " | १ १/२ रु० " |
| दासः | ५ माषकाः | ५ रु० " |

**नवरत्न** : मुक्ता-माणिक्य-वैदूर्य-गोमेदान् वज्र-विद्रुमौ । पद्मरागं मरकतं नीलं चेति यथाक्रमम् ।। (मोती, लाल, लहसुनियाँ, गोमेद, हीरक, मूँगा, पद्मराग, पन्ना, नीलम) ।

ग्रहक्रमानुसारम्–माणिक्य, मुक्ता, विद्रुम, पन्ना, पद्मराग, हीरक, नीलम, लहसुनियाँ, गोमेद ।

**अधिदेवता** : त्र्यम्बक, उमा, स्कन्द, विष्णु, ब्रह्म, इन्द्र, यम, काल, चित्रगुप्ताः–ग्रहाणां दक्षिणे भागे ।

**प्रत्यधिदेवता** : अग्निः, आपः, पृथिवी, विष्णुः, इन्द्रः, इन्द्राणी, प्रजापतिः, सर्पः, ब्रह्म, ग्रहाणां वामभागे ।

**दशधर्मलक्षण** : धृतिर्दमः क्षमाऽस्तेयं शौचमिन्द्रियनिग्रहः ।

धी विंद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।। (मनुः–१– ११४) ।

**दशपापलक्षण** : पारुष्यमनृतंचैव पैशुन्यं चापि सर्वतः । असम्बद्धप्रलापश्च वाङ्मयंस्याच्चतुर्विधम् ।। अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं मतम् ।। परद्रव्येष्वभिध्यानं मनसानिष्टचिंन्तनम् । वितथाभिनिवेशश्च मानसं त्रिविधं मतम् ।।

**दशकर्म** : विवाह, गर्भाधान, सीमन्तोन्नयन, पुंसवन, जातकर्म, अन्नप्राशन, चूड़ाकरण, उपनयन, वेदारम्भ, समावर्तन । (छन्दोगानां **नामकरणं** जातकर्मतोऽतिरिक्तः संस्कारः, **वेदारम्भश्च** उपनयन एवान्तर्भूतः) ।

**दश महाविद्या** : काली, तारा, षोडशी, भुवनेश्वरी, भैरवी, छिन्नमस्ता, धूमावती, बगलामुखी, मातङ्गी, कमलात्मिका ।

**दश दिशा** : पूर्व, आग्नेय, दक्षिण, नैर्ऋत्य, पश्चिम, वायव्य, उत्तर, ईशान, ऊर्ध्व, अधः ।

**दश दिक्पाल** : इन्द्रो वाह्निः पितृपतिः नैऋतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।। ऊर्ध्वं ब्रह्मा ह्यधोऽनन्तो दिक्पाला दशकीर्तिताः ।।

| | | |
|---|---|---|
| **दिशां ग्रहाः** | : | रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः । बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः ।। (रवि, शुक्र, मङ्गल, राहु, शनि, सोम, बुध, बृहस्पति, एते पूर्वादीनां क्रमशो ग्रहाः सन्ति ।) |
| **षोडश मातृका** | : | गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा, मातरो लोकमातरः ।। हृष्टिः पुष्टिस्तथा तुष्टिरथात्म-कुलदेवताः ।। |
| **मधुपर्क** | : | दधि, घृत, जल, मधु, सिता । |
| **सर्वौषधि** | : | कूढ, मांसी, हरिद्रा, वच, शैलेय, चन्दन, मुरा, कर्पूर, मुस्त । |
| **हस्ते तीर्थानि** | : | कनिष्ठा-देशिन्यङ्गुष्ठामूलान्यग्रे करस्य च । प्रजापति-पितृ-ब्रह्म-देवतीर्थान्यनुक्रमात् ।। कनिष्ठामूले प्रजापतितीर्थं कायतीर्थं वा, तर्जनीमूले पितृतीर्थं, अङ्गुष्ठमूले प्रजापतितीर्थं, अङ्गुलीनाम् अग्रभागे देवतीर्थम् । ब्राह्मणाचमनं शस्तं पित्र्यं पैत्रेण सर्वदा । देवतीर्थेन देवानां प्राजापत्यं निजेन च ।। आवाहन-पूजनादिकमधोमुखकरेण, दानादिकंमुक्तहस्तेनोत्तानकरेण । |
| **प्रदक्षिणा** | : | देवपरिक्रमा । एकं चण्ड्यां रवौ सप्त शिवे चार्धं प्रदक्षिणम् । नारायणे चतुर्वारं त्रिवारं तु विनायके ।। |
| **साकल्यम्** | : | हवनद्रव्यविधानम्–तिलार्धं तण्डुलं प्रोक्तं तण्डुलार्धं यवाः स्मृताः । यवार्धं शर्करादेया सर्वार्धं च घृतं स्मृतम् ।। (आज्यं भाग चतुष्टयम्) । सर्वार्धं सर्ववस्तूनामर्धं, सर्वतः यथाक्रमार्धं वा । तेन शर्करार्धमप्यायाति । पाठान्तरपक्षे तु भगचतुष्टयं चत्वारो भागाः (चतुर्थांशाः) चतुर्णां तिल-तण्डुलयव-शर्कराणां चेति व्याख्यानेन, भगो यथोचितांश इत्यपि । तिलाः १ कि० ग्रा० + तण्डुलाः ५०० ग्रा० + यवाः २५० ग्रा० + शर्करा १२५ ग्रा० = १ कि० ८७५ ग्रा० ÷ २ गोधृतम्-९४० ग्रा० ।। |
| **प्रदोषः** | : | त्रिमुहूर्त्तः प्रदोषःस्याद् भानावस्तङ्गते सति । (६ दण्डाः) । अथवा–प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते । (२ दण्डाः) तत्र प्रथमः त्रिमुहूर्त्तः २ घं० २४ मि० सूर्यास्तानन्तरं प्रदोषो प्रदोषत्वेनविहितकर्मार्थः । द्वितीयो घटिकाद्वयम् २ मुहूर्त्तः १ घं० ३६ मि० प्रदोषो निषिद्धकर्मणि ज्ञातव्यः । |
| **नक्तव्रतम्** | : | सम्पूर्णं दिनं निराहारः सायं तारादर्शनानन्तरं भुञ्जीतेति नक्तव्रतम् । |
| **सौर नक्तव्रतम्** | : | दिनस्य तृतीय प्रहरात् पूर्वमेवोपवासो रविवासरव्रते, ततो भोजनम् । |
| **निशीथः** | : | निशीथो घटिका युग्मं रात्रेर्मध्यमयामयोः । रात्रौ १२ वादनतः |

पूर्वं २४ मि० यावत् तथैव तत्परमपि । अथवा ४८ मि० पूर्वं, तथैव परमपि । अथवा अर्धयाम: ($१\frac{१}{२}$ घं० पूर्वं, तथैव परमपि)।

**मुहूर्त्त:** : दण्डद्वय-व्यापक: समय: ४८ मि० इति । मूहूर्त्तो घटिकाद्वयम् । दिनस्य पञ्चदशोविभागो मूहूर्त्त: ।

**घटी ( घटिका )** : (१) दण्डात्मक: काल: २४ मि० ।
(२) मुहूर्त्तात्मक: काल: ४८ मि० ।

**प्रात:** : पञ्च-पञ्च उषाकाल: सप्तपञ्चारुणोदय: । अष्टपञ्च भवेत् प्रात: शेष: सूर्योदय: स्मृत: ।। (अहोरात्रमानस्य ५५ दण्डात् ५७ यावद् उष:काल:, तत: ५८ यावद् अरुणोदयकाल:, तत: ६० यावत् प्रात:काल:, तत्र सूर्योदय:, तत: परंदिनम् ) ।

**प्रात:काल:** : 'प्रात: कालो मुहूर्त्तास्त्रीन्' ।

**ब्राह्ममुहूर्त्त:** : सूर्योदयात् पूर्वं द्विमुहूर्त्तयो: प्रथमो मुहूर्त्त: । दिनमानस्य ५६ दण्डात् ५८ दण्डं यावत् । १२ घण्टात्मकरात्रिमाने सूर्योदयात् ४८ मि० पूर्ववर्त्ति ४८ मिनटात्मक: कालो ब्राह्ममुहूर्त्त: । रात्रौ १५ मुहूर्त्ता भवन्ति, तत्र १४ तममुहूर्त्तस्य नाम ब्राह्ममुहूर्त्त: ।

**पूर्वाह्न** : दिनस्य पूर्वभाग: । दिनस्य पञ्चदशो भागो मुहूर्त्त इति कथ्यते ४८ मि० । तत्र सूर्योदयात् प्रारभ्य– प्रात: कालो मुहूर्त्तास्त्रीन्, संगवस्तावदेव हि । मध्याह्नस्त्रिमुहूर्त्ता: स्यादपराह्नस्तत: परम् । सायाह्नस्त्रिमुहूर्त्त: स्याद् यावदस्तं गतो रवि: ।।
प्रात: काल: ३ मुहूर्त्ता: । संगवकाल: (पूर्वाह्नि:)- ३ मु० ।
मध्याह्न: ,, । अपराह्न:– ,,
सायाह्न:– ,, ।

**कुतुप:** : दिनस्याष्टमो मुहूर्त्त: (१२ वादनत: पूर्वं परं च २४-२४ मिनट काल: ) कुतुप इति कथ्यते ।

**सपिण्डा:** : बीजिपुरुषत: सप्तम पुरुषपर्यन्ता: सर्वेसन्तानिन:, सर्वाश्च सन्ततय: परस्परं सपिण्डा: । अष्टम-नवम-दशम पुरुषा: सकुल्या:, तदूर्ध्वं गोत्रजा: ।

**मातृसपिण्डा:** : मातृकुले बीजिपुरुषत: पञ्चपुरुषा: स्त्रियो वा सपिण्डा: सामान्यत: । अशौच विषये तु त्रिपुरुषमेव सापिण्ड्यम् । विवाहादौ पञ्चपुरुषं सापिण्ड्यम् ।

*–पं० श्री शशिनाथ झा*

■

॥ श्री गणेशाय नमः ॥



# वर्षकृत्यम्

म० म० रुद्रधरकृतम्



## अथ बहुलापूजा

तत्रादौ[१] भाद्रकृष्ण तुर्थ्यां बहुलां पूजयेत्। तद्यथा–जलाशये पूर्वदिने एकभुक्तादिसंयमं कृत्वा पूजा-दिने प्रातरेव कृतनित्यक्रियो व्रती सूर्यायाऽर्घं दत्वा कुशत्रयतिलजलान्यादाय पूर्वाभिमुखः, 'ॐ भगवन्सूर्यभगवत्योदेवता अद्यादि–चतुर्दशबर्षं यावत् प्रतिभाद्रकृष्णचतुर्थि साङ्गसपरिवार-बहुला-पूजनमहमाचरिष्यामी' ति व्रतं निवेद्य, पूजास्थानमागत्य कुशादिकमादाय 'ॐ अद्य भाद्रे मासि कृष्णे पक्षे चतुर्थ्यां तिथौ अमुकगोत्रस्यामुकशर्मणः (अमुकगोत्राया अमुकदेव्या इति वा) मम ऐहिकचिरजीविपुत्रपौत्रादि सकल सौभाग्य धनधान्यादि समृद्धिसकलसुखभोगावाप्तिपूर्वक–स्वर्गाधिकरणकाकल्पान्तिक-सकलदिव्यसुख-सम्भोगावाप्तिकामोऽद्यादिचतुर्दशवर्षं यावत् प्रतिभाद्रकृष्ण-चतुर्थि साङ्गसपरिवार श्रीबहुला–पूजन–व्रतमहङ्करिष्ये इति संकल्प्य, प्रतिमायां स्वशाखोक्तमन्त्रेण[२] प्राणप्रतिष्ठां विधाय; अक्षतमादाय ॐ सवत्सबहुले-इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यार्घाचमनीयस्नानीयंपुनराचमनीयानि ॐ सवत्स बहुलायै नमः। एवम् इदमनुलेपनम् । इदं सिन्दूरम् रक्तानुलेपनं वा। इदमक्षतम्। एतानि पुष्पाणि। इदं वस्त्रम् बृहस्पतिदैवतम्। एतानि विल्वपत्राणि। एतानि दूर्वादलानि। एतानि गन्ध पुष्पधूप-दीपताम्बूलनानाविध-नैवेद्यानि। इदमाचमनीयम् एष पुष्पाञ्जलिः ॐ सवत्स-बहुलायै नमः। इति संपूज्य एवं गोभिलगोप, कामरूपव्याघ्र, रोहिपर्वतादीनावाह्य पाद्याद्युक्तोपचारैः संपूज्य कथां शृणुयात्॥

१. इयं चतुर्थी तृतीयायुता ग्राह्या। मध्याह्नात् परं पञ्चमीप्राप्तौ परेन। पूर्वाह्णे गोपूजा।

२. ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टय्यँज्ञथ्ठ समिमन्दधातु विश्वेदेवास इह मादयन्तामोम्प्रतिष्ठ ॐ सवत्सबहुले इह सुप्रतिष्ठिता भव।

# अथ कथा

**वैशम्पायन उवाच**–शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम्। मूर्ध्ना प्रणम्य धर्मात्मा पप्रच्छेदं युधिष्ठिरः ।।१।। **युधिष्ठिर उवाच**–भगवन् श्रोतुमिच्छामि सत्यवाक्यस्य यत्फलम्। यत् प्राग् बहुलया प्रोक्तं तन्मे व्याख्यातुमर्हसि ।।२।। **भीष्म उवाच**–सौम्य! धर्मं प्रवक्ष्यामि सत्यार्जवगुणान्वितम्। कामरूपस्य व्याघ्रस्य धेन्वाः संवादमुत्तमम् ।।३।। माथुरे विषये रम्ये धनधान्यसमाकुले। नानाजनसमाकीर्णे यज्ञोत्सवविभूषिते ।।४।। तत्र सा नगरी रम्या यमुनातीरमाश्रिता। अर्धचन्द्रप्रतीकाशा विद्वज्जननिषेविता ।।५।। इन्द्रयष्टि-समाकीर्णा वापीभिरुपशोभिता। बहुद्विजसमाकीर्णा बहुभाण्डसुविक्रया ।।६।। सुप्रमाणा सुरम्या च स्वातीनक्षत्रनिर्मिता। प्राकाराद्यप्रतोलीभि-र्दुर्जया परिखादिभिः ।।७।। देवतायतनै-र्दिव्यैः कदलीखण्डमण्डिता। हंसमालाप्रतीकाशैः शोभिता धावलैर्गृहैः ।।८।। पनसैर्वकुलैस्तालैः प्रियालै र्नारिकेलकैः। आम्रातकैः कपित्थाद्यै रसवृक्षैश्च शोभिता ।।९।। मल्लिकाकुन्दजातीभिः पद्मोत्पलकुरुण्टकैः सुवर्णश्वेतयूथीभिः किङ्किरातैस्सकुब्जकैः ।।१०।। करवीरैः कर्णिकारैः पाटलाशोकचम्पकैः। पुन्नागनागवकुलै-रुद्यानै-रुपशोभिता ।।११।। संपूर्ण-धानधान्येन गोधनै-रुपशोभिता। वेदाध्ययन-निर्घोषैः पवित्रीकृत-मण्डपा ।।१२।। वेदि-शृङ्गाटकै रम्यै-स्तृण-चत्वर-भूषिता। आरामखण्डसंकीर्णा तड़ागोद्यान-संकुला ।।१३।। धनदस्य हि रत्नाढ्या अलकेव महापुरी। चन्द्रसेनो नृपो यस्यां ऋषिव्रतसमन्वितः ।।१४।। धर्मे ह्यभिरतो नित्यं देवतातिथिपूजकः। क्षत्रधर्मरतः श्रीमान् प्रजापतिसमः क्षितौ ।।१५।। तेन सा नगरी रम्या राजसिंहेन पालिता। नित्योत्सवप्रमुदिता शङ्खवादितत्रनिस्वना ।।१६।। सङ्गीतकविदग्धैश्च प्रेक्षणीयैः समाकुला। सुरूपैश्च सुवेशैश्च नरनारीजनैर्वृता ।।१७।। पुरी चन्द्रावतीनाम दृष्टा वा यदि वा श्रुता। तस्यां पुर्य्यां यथा वृत्तं तच्छृणुष्व युधिष्ठिर ।।१८।। कस्यचिद् द्विजमुख्यस्य कल्याणीधेनुरुत्तमा। हृष्टा पुष्टा सपुत्रा च बहुलानाम-नामतः ।।१९।। गोमण्डलस्य मुख्या सा हंसवर्णा-घटस्रवा। दीर्घघ्राणा विभक्ताङ्गी बंधुरा सुतनुत्वचा ।।२०।। विस्तीर्णजघना दिव्या पीनोन्नतपयोधरा। सर्वलक्षण-संपन्ना सर्वावयव-सुन्दरी ।।२१।। नीलकंठा-शुभग्रीवा घंटाली मधुरस्वना। सा तु यूथस्य सर्वस्य चचाराग्रे सुनिर्भया ।।२२।। वनान्तादचिरोद्भूतं गत्वैकैव यथासुखम् । सान्द्रं सकामं सुरभि-मच्छित्रं चरते तृणम् ।।२३।। रोहितो नाम तत्रास्ति पर्वतो-यमुनातटे। अनेक-कन्दर-दरी-गुहानिर्झर-सेविते ।।२४।। तस्य पूर्वोत्तरे भागे घोरे तृणसमाकुले। संकटे विषमे दुर्गे भैरवे रोम-हर्षणे ।।२५।। मृगसिंहसमाकीर्णे बहुश्वापद-सेविते। वल्मीवृक्षादिगहने शिवाशतनिनादिते ।।२६।। दुर्गेऽस्मिन् वसते रौद्रः

कामरूपीति-नामतः। व्याघ्रः शोणितमांसाशी महादंष्ट्रो महाबलः ।।२७।। महापर्वत-संकाशो मेघगर्जित-निस्वनः। महागुहादरीवक्त्रः तीक्ष्णदंष्ट्रो नखायुधः ।।२८।। गोभिलो नाम धर्मात्मा स गोपो गोहिते रतः। अच्छिन्नाग्रै-स्तृणैर्य्यत्र गोधनं परिरक्षति ।।२९।। तस्य यूथात्परिभ्रष्टा बहुला तृण-तृष्णया। चरन्ती व्याघ्रपुरतः सा धेनुः समुपस्थिता ।।३०।। अभिद्रवंश्च तां व्याघ्रस्तिष्ठ तिष्ठेति चाब्रवीत्। **व्याघ्र उवाच**--मयाद्य विहिता भक्ष्या स्वयं प्राप्तासि धेनुके ।।३१।। अद्य त्वां भक्षयिष्यामि दुर्ल्लभं तव जीवितम्। निस्नेहश्च क्षुधार्त्तश्च षष्ठे काले बुभुक्षितः ।।३२।। अद्य तृप्तिं करिष्यामि मांसेन रुधिरेण ते ।। **भीष्म उवाच**-व्याघ्रस्य वचनं श्रुत्वा निष्ठुरं रोम-हर्षणम् ।।३३।। भद्ररूपान्वितं बालं चन्द्रबिम्ब-समप्रभम्। द्रष्टुकामा सुविभ्रांतं तृष्णया परिपीडितम् ।।३४।। वत्सं स्मरन्ती सा धेनुः स्नेहार्त्ता गद्गदोन्मुखी। दह्यन्ती पुत्रशोकेन बहुला पुत्र-वत्सला ।।३५।। रुदन्ती करुणादीना निराशा पुत्रदर्शने। दृष्टा तु बहुलां व्याघ्रः क्रन्दमानां सुदुःखिताम् ।।३६।। उवाच वचनं घोरं बहुले किं प्ररुद्यसे। दैवादद्य प्रपन्नासि भक्ष्या त्वम्मे यदृच्छया ।।३७।। न रुदंत्या हसंत्या वा तथा ते जीवितं भवेत्। विहितं भुज्यते लोके स्वयं प्राप्तासि धेनुके ।।३८।। मृत्युस्ते विहितोऽद्यैव वृथा किमनुशोचसि। पप्रच्छ च पुनर्व्याघ्रः किमर्थं रुदितं त्वया ।।३९।। कौतुकं मेऽत्र संजात-मशेषं कथयस्व नः । व्याघ्रस्यवचनं श्रुत्वा बहुला वाक्यमब्रवीत् ।।४०।। **बहुलोवाच**-क्षन्तुमर्हसि मे नाथ कामरूप नमोस्तु ते। त्वां समासाद्य लोकेऽस्मिन् परित्राणं न विद्यते ।।४१।। जीवितार्थं न शोचामि प्राप्तव्यं मरणं मया। जातस्य हि ध्रुवं मृत्युर्ध्रुवं जन्म मृतस्य च ।।४२।। तस्मादपरिहार्य्येऽर्थे न शोचामि मृगाधिप। देवैरपि सदा सर्वै-र्मर्तव्यमवशै-र्ध्रुवम् ।।४३।। तस्मात्तदहमेवैका व्याघ्र ! शोचामि वै कथम्। किं तु स्नेहवशाद् व्याघ्र ! दुःखेन रुदितं मया ।।४४।। अस्ति मे हृदि संतापः तं च त्वं श्रोतुमिच्छसि। अग्रे वयसि वर्तन्ती प्रसूताऽहं मृगाधिप ।।४५।। इष्टः प्रथमजातश्च सुतस्तु मम बालकः। क्षीरपः स च मे वत्स-स्तृणं नाद्यापि जिघ्रति ।।४६।। च स मे गोकुले बद्धः क्षुधार्तो मां प्रतीक्षते। वत्सं तमनुशोचामि कथं जीविष्यति प्रभो ।।४७।। तस्येच्छामि स्तनं दातुं पुत्रस्नेह-वशंगता। पाययित्वा च तं वत्समवलिह्य च मूर्द्धनि ।।४८।। सखीनामर्पयित्वा च संदिश्य च हिताहितम्। पुनः प्रत्यागमिष्यामि यथेष्टं भक्षयिष्यसि ।।४९।। यद्यहं नागमिष्यामि पुनर्व्याघ्र ! तवालयम्। क्षत्रियाणां गतिं यास्ये संग्रामात् प्रपलायिनाम् ।।५०।। बहुलाया वचः श्रुत्वा मृगेन्द्रः पुनरब्रवीत् ।। **व्याघ्रउवाच**-किं ते पुत्रेण कर्त्तव्यं मरणं किं न बुध्यसे ।।५१।। त्रस्यन्ति सर्वभूतानि मां निरीक्ष्य म्रियन्ति च। त्वं पुनः कृपयाविष्टा पुत्रपुत्रेति भाषसे ।।५२।। न धर्मो न तपो दानं न माता न पिता सुतः। शक्नुवन्ति परित्रातुं मम दृष्टिपथे गतम् ।।५३।। कथं त्वं गोकुलं गत्वा

गोपीजनसमाकुलम्। वृषभैर्नादितं रम्यम् बालवत्स-विभूषितम् ।।५४।। भूषणं मर्त्यलोकस्य स्वर्गतुल्यं न संशयः। नित्योत्सवसमाकीर्णं गीतवादित्र-भूषितम् ।।५५।। यदाद्यं सर्व-भूतानां भूमिस्वर्गमनुत्तमम्। यत्पवित्रं पवित्राणां मंगलानां च मंगलम् ।।५६।। यत्तीर्थं सर्वभूतानां रम्याणां रम्यमुत्तमम्। समस्तगुणसंकीर्ण-मीश्वरायतनं महत् ।।५७।। गोपीमन्थान-शब्देन बालवत्स-रवेण च। गवां हूंकार-शब्देन यत्रालक्ष्मीर्विहन्यते ।।५८।। यत्र वत्साश्च हूंकारं करुणं मातृकांक्षया। कुर्वन्ति मातरश्चापि स्नेहार्ताः पुत्रकांक्षया ।।५९।। यद्गोपैः पालितं शूरै-र्बाहुयुद्ध-कृतश्रमैः। प्रगीत-नृत्यसंलापै-र्वल्गिता-स्फोटनादिभिः ।।६०।। इतस्ततः स्थितैः वत्सैः क्रीडमानैः समन्ततः। सरोवद्राजते गोष्ठं चलद्भिरिव पंकजैः ।।६१।। तच्छ्रीनिकेतनं रम्यं, मातरं भ्रातरं सुतम्। दृष्ट्वा सखीजनं भूयः कथं प्रत्यागमिष्यसि ।।६२।। पञ्चभूतानि मे भद्रे पिबन्तु रुधिरं तव। न निराशानि भूतानि वाङ्मात्रेण करोम्यहम् ।।६३।। **बहुलोवाच**-प्रथमं सूतवत्साहं मृगेन्द्र ! शृणु मे वचः। दृष्ट्वा सखीजनं भूयो गोपांश्च परिरक्षकान् ।।६४।। गोपीजनमुपामंत्र्य जननीं च विशेषतः। शपथैरागमिष्यामि मन्यसे यदि मुञ्च माम् ।।६५।। यदि ते संशयोऽस्माकं शपथागमनं प्रति। पादैः स्पृशन्ति ये गाश्च शिरोभिर्न नमन्ति च ।।६६।। तेषां पापेन लिप्येऽहं यद्यहं नागमे पुनः। द्विभार्य्यः पुरुषो यस्तु द्वेषादेकां विवर्जयेत् ।।६७।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। यत्पापं ब्रह्महत्यायां पितृमातृवधेपि च ।।६८।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। यस्तु बालं वलीवर्दं विषमं वाहयेद्धुरम् ।।६९।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। गृहे यस्य गतं मित्रं निराशं प्रतिगच्छति ।।७०।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। ब्राह्मणान् ये च निन्दन्ति रागद्वेषाच्च वै नराः ।।७१।। तेषां पापेन लिप्यामि यद्यहं नागमे पुनः। यत्पापं लुब्धकानां तु म्लेच्छानां गरदायिनाम् ।।७२।। तेषां पापेन लिप्यामि यद्यहं नागमे पुनः। सकृद्दत्वा तु यः कन्यां द्वितीये दातुमिच्छति ।।७३।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। कथायां कथ्यमानायां योहि विघ्नं समाचरेत् ।।७४।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। गृहे यस्यागतो विद्वान् निराशः प्रतिगच्छिति ।।७५।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। यस्तु देवद्विजातीनां देवानां च विनिंदकः ।।७६।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। सूतकेषु च यत्पापं परद्रव्यापहारिणाम् ।।७७।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। विद्यादातुस्तथा पित्रोः शुश्रूषां न करोति यः ।।७८।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। एकाकी मिष्टमश्नाति यः कश्चित्पुरुषाधामः ।।७९।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। कौमारं चैव भर्त्तारं या नारी त्ववमन्यते ।।८०।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। निक्षेपं हरते यस्तु विश्वासेनैव मानवः ।।८१।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः।

उद्दिष्टश्चैव यः साक्ष्ये ह्यनृतं भाषते वचः ।।८२।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। वासुदेवं परित्यज्य योऽन्यदेवमुपासते ।।८३।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। विकलं चैव भर्तारं या नारी त्ववमन्यते ।।८४।। तस्याः पापेन लिप्यामि यद्यहं नागमे पुनः। गोधनस्य तृषार्त्तस्य योहि विघ्नं समाचरेत् ।।८५।। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः। यत्पापं द्विजनिंदायां यत्पापं तीर्थनिन्दके ।।८६।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। संध्याहीने व्रतभ्रष्टे विप्रे वेदविवर्ज्जिते ।।८७।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। एककूपोदके ग्रामे वेदध्वनि–विवर्ज्जिते ।।८८।। तेन पापेन लिप्यामि यद्यहं नागमे पुनः। शीतभीताश्च ये विप्रा रणभीताश्च क्षत्रियाः ।।८९।। तेषां पापेन लिप्यामि यद्यहं नागमे पुनः। लुब्धकेषु च यत्पापं तथा भूहरणेऽपि च ।।९०।। तेन पापेन लिप्येऽहं नागच्छेयं पुनर्य्यदि। स्वाम्यर्थे प्रहितो नित्यं तथा युद्धपराङ्मुखः ।।९१।। तस्य पापेन लिप्यामि नागच्छेयं पुनर्य्यदि। इत्येतैः पातकै–र्घोरै–र्न्नागच्छामि यदा पुनः ।।९२।। पतिष्यामि तदा घोरे नरके नात्र संशयः। बुध्वा संप्रत्ययं व्याघ्रः पुनर्वचनम–ब्रवीत् ।।९३।। ज्ञातः संप्रत्ययोऽस्माकं शपथै–र्बहुले त्वयि। कदाचिन् मन्यसे गत्वा मूर्खोऽयं वंचितो मया ।।९४।। अत्रापि केचिद् ब्रुवते शपथै–र्न्नास्तिपातकम्। प्राणत्यागे समुत्पन्ने श्रद्धातव्यं न च त्वया ।।९५।। लोकेऽस्मिन्नास्तिकाःकेचिन् मूर्खाःपंडितमानिनः। भ्रामयंति च ते बुद्धिं चक्रारूढां मृदं यथा ।।९६।। तत्पक्ष–हेतु–दृष्टान्तै–रज्ञानावृत–चेतसः। भ्रामयन्ति नराः क्षुद्राः कुश्रुत्यागम–दर्शनात् ।।९७।। अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिपेशलाः। स मे निम्नोन्नतानीव चित्र–कर्मविदो–जना ।।९८।। प्रायः कृतार्थो लोकोऽयं मन्यते नापकारिणम्। कार्य्यार्थम्भजते लोको न लोकः पारमार्थिकः ।।९९।। वत्सः क्षीरक्षयं दृष्ट्वा स्वयं त्यजति मातरम्। न तं पश्यामि लोकेऽस्मिन् कृते प्रतिकरोति यः ।।१००।। सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते। ऋषि–देवासुर–नरैः शपथाः कार्य्यसिद्धये ।।१०१।। कृताः परस्परं पूर्वं तां न मन्यामहे वयम्। सत्येनापि शपेद्यस्तु देवता–गुरुसन्निधौ ।।१०२।। तस्य वैवस्वतो राजा धर्मस्यार्द्धन्निकृन्तति। मा ते बुद्धिर्भवेदेवं शपथै–रेव वंचितः ।।१०३।। तेनेदं दर्शितं सर्वं यथेष्टं कुरु साम्प्रतम्। **बहुलोवाच**–एवमेव महाव्याघ्र ! कस्त्वां वंचयितुं क्षमः ।।१०४।। आत्मैव वञ्चितस्तेन यः परं वञ्चयिष्यति। नास्ति भूमि–समं दानं नास्तिदानसमो निधिः ।।१०५।। नास्ति सत्यसमो धर्मो नानृतात् पातकं परम्। अपवादो भवेद्येन येन चाप्रत्ययो भवेत् ।।१०६।। नरके गम्यते तेन न तत्कर्म समाचरेत्। **व्याघ्र उवाच**–बहुले गच्छ पश्य त्वं पुत्रकं पुत्रवत्सले ।।१०७।। पाययित्वा च तं वत्स–मवलिह्य च मूर्द्धनि। मातरं भ्रातरं दृष्ट्वा सखीं स्वजनबांधवान्। ।।१०८।।

सत्यमेवाग्रतःकृत्वा शीघ्रमागमनं कुरु। **भीष्म उवाच**—एवं संप्रत्ययं कृत्वा बहुला सत्यवादिनी ॥१०९॥ अनुज्ञाता मृगेन्द्रेण प्रयाता पुत्रकं प्रति। अश्रुपूर्णमुखी दीना वेपमाना सुदुःखिता ॥११०॥ कुररीव समं तप्ता पतिता शोकसागरे। करिणी पंकलग्नेव विजने वन-गोचरे ॥१११॥ अशक्ताऽत्मपरित्राणे विलपन्ती मुहुर्मुहुः। अथ सा गोकुले गत्वा बहुलाद्भुतविक्रमा ॥११२॥ दृष्ट्वा सुतं तु क्रोशन्तं त्वरिता प्रययौ तदा। उपसर्प्पति तां वत्सो वाष्पपर्याकुलेक्षणाम् ॥११३॥ संप्राप्य मातरं वत्सः शंकितः परिपृच्छति। **वत्सउवाच**—शोकार्ता दृश्यसे मात-र्म्मन्ये किमिति दुर्म्मनाः ॥११४॥ न ते पश्यामि सौम्यत्वं दुःखितेवाद्य लक्ष्यसे। उद्विग्ना चापि ते दृष्टिः भीतभीतेति दृश्यते ॥११५॥ **बहुलोवाच**—पिब पुत्र स्तनं मेऽद्य कारणं यदि पृच्छसि। आगताहं तव स्नेहात् कुरु तृप्तिं यथेप्सिताम् ॥११६॥ अपश्चिममिदं पुत्र ! दुर्लभं मातृदर्शनम् । एकाहमपि पीत्वा मे प्रत्यूषे कस्य पास्यसि ॥११७॥ मया हि पुत्र ! गन्तव्यं शपथैरागता ह्यहम्।, कामरूपस्य व्याघ्रस्य दातव्यमात्मजीवितम् ॥११८॥ बहुलाया वचः श्रुत्वा वत्सो वचनमब्रवीत्। **वत्स उवाच**—अहं तत्र च यास्यामि यत्र त्वं गन्तुमिच्छसि ॥११९॥ श्लाघ्यं हि मरणं मह्यं त्वया सह न संशयः। अथवा तिष्ठ मातस्त्वं शपथाः सन्तु ते मम ॥१२०॥ जनन्या विप्रयुक्तस्य जीवते किं प्रयोजनम्। आनाथस्य वने नित्यं को मे नाथो भवष्यति ॥१२१॥ नास्ति मातृसमो बन्धु-र्बालानां स्तनपायिनाम्। नास्ति मातृसमो नाथो विषमे पर्य्यवस्थिते ॥१२२॥ नास्ति मातृसमः स्नेहो नास्ति मातृसमं सुखम्। नास्ति मातृसमो देव इह लोके परत्र च ॥१२३॥ शतं पितॄणां हित्वापि मात्रा जीवन्ति जन्तवः। एष नः परमोधर्म्मः प्रजापतिविनिर्म्मितः ॥१२४॥ सह गच्छन्ति ये मातुस्ते यान्ति परमां गतिम्। मासान् दशोदरस्थान् या धृत्वा शूलैः समाकुलाः ॥१२५॥ वेदनै-र्विविधै-र्दुःखैः प्रसूयन्ते विमूर्छिताः। स्तन्यं चामृतवद् दत्वा गोपायन्ति च वत्सलाः ॥१२६॥ गूथमूत्रमये पंके लग्ना स्नेहाद्विवर्द्धते। प्राणैरपि प्रियान् पुत्रान् मन्यन्ते सुतवत्सलाः ॥१२७॥ कस्तासां निःकृतिं यातुं शक्तो वर्षशतैरपि। एष धर्म्मो मम मतो माता पुत्रस्य दैवतम् ॥१२८॥ **बहुलोवाच**—ममैव विहितो मृत्यु-र्न त्वं मां गन्तुमर्हसि। न जीवत्यन्यजीवेन मृत्युः स्यादन्यमृत्युना ॥१२९॥ अपश्चिममिदं पुत्र ! मातृसन्देशमुत्तमम्। अनुतिष्ठस्व मद्वाक्यमेतच्छुश्रूषणं परम् ॥१३०॥ तृणलोभेन विचरन् प्रमादं मा करिष्यसि। प्रमादात्सर्व-भूतानि विनश्यन्ति न संशयः ॥१३१॥ न च लोभेन चर्तव्यं विषमस्थं तृणं क्वचित्। लोभाद्विनाशः सर्वेषामिह लोके परत्र च ॥१३२॥ समुद्रमटवीदुर्गे विशन्ते लोभमोहिताः। लोभादकार्य्यमत्युग्रं विद्वानपि समाचरेत् ॥१३३॥ लोभात् प्रमादतो वापि द्वाभ्यां संक्षीयते जगत्। तस्माल्लोभं न कुर्वीत प्रमादं च विशेषतः ॥१३४॥ आत्मा हि

सततं पुत्र ! रक्षितव्यः प्रयत्नतः। सर्वेभ्यः श्वापदेभ्यश्च म्लेच्छचौरा-दिसंकटात् ॥१३५॥ तिरश्चां व्याडयोनीनामेकत्र बसतामपि। विपरीतानि चित्तानि विज्ञायन्ते हि पुत्रक ॥१३६॥ नदीनां च नखीनां च शृङ्गिणां शस्त्रपाणिनाम्। विश्वासो नैव कर्त्तव्यः स्त्रीषु राज-कुलेषु च ॥१३७॥ न विश्वसेदविश्वस्ते विश्वस्ते नापि विश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलादपि-निकृन्तति ॥१३८॥ न विश्वसेत् स्वदेहेऽपि चलस्यातीव चेतसः। गावः पश्यन्ति गन्धेन राजानश्चार-चक्षुषा ॥१३९॥ शास्त्रेण पण्डिताः सर्वे ज्ञानेनैव तु योगिनः। नैकस्तिष्ठेद्वने घोरे धर्म्ममेकं विचिन्तयेत् ॥१४०॥ न चोद्वेगस्त्वया कार्य्यः सर्वस्य मरणं ध्रुवम्। यथा हि पथिकः कश्चित् छायामाश्रित्य विश्रमेत् ॥१४१॥ विश्रम्य च पुनर्गच्छेत्तदद्भुतसमागमः। यत्रानित्यं जगत्कृत्स्नं तत्रैकः शोच्यसे कथम् ॥१४२॥ तस्माच्छोकं समुत्सृज्य मद्वाक्यमनुपालय। विद्यावृद्धाँ-स्तपोवृद्धान् सेवस्व च तथार्ज्जवान् ॥१४३॥ न स्थातव्यं न गन्तव्यं न वक्तव्यं कदाचन। सर्वथा हि त्वया तात ! त्रिविधं निःप्रयोजनम् ॥१४४॥ एवमाघ्राय तं वत्स-मवलिह्य च मूर्द्धनि। शोकेन महताविष्टा वाष्पपर्य्याकुलेक्षणा ॥१४५॥ निःश्वसन्ती च नागीव दीर्घमुष्णं मुहुर्मुहुः। पुत्रहीनं जगत् शून्यं पश्यन्त्यन्धेव साभवत् ॥१४६॥ महापंकनिमग्नेव तिष्ठन्त्येवावसीदति। अपुत्रस्य जगत् शून्य-मपुत्रस्य गृहेण किम्। पुत्रेण जीयते लोकः श्रुतिरेषा सनातनी ॥१४७॥ विलप्य बहुला पुत्रमुवाचेदं पुनर्वचः। नास्ति पुत्रसमः स्नेहो नास्ति पुत्रसमं सुखम् ॥१४८॥ नास्ति पुत्रसमा प्रीतिर्न्नास्ति पुत्रसमा गतिः। विलप्य बहुला पुत्र-मतिस्नेहेन वीक्षती ॥१४९॥ मृषा वदति लोकोयं चन्दनं खलु शीतलम्। पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ॥१५०॥ **भीष्म उवाच**—इति पुत्रगुणानुक्त्वा संनिरीक्ष्य मुहुर्म्मुहुः। स्वमातरं सखीं गोपांस्त्वर-माणाभ्यभाषत ॥१५१॥ **बहुलोवाच**—यूथस्याग्रे चरन्तीं मामुत्ससाद मृगाधिपः। मुक्ताहं तेन शपथै—र्गोकुलं त्वं व्रजेति वै ॥१५२॥ सा ततस्तु सुतं द्रष्टुम्मातरं गोकुलं कुलम्। आगता सत्यवाक्येन पुनर्य्यास्यामि तत्र च ॥१५३॥ मातः क्षमस्व तत्सर्वं बालिशाद्यत्कृतम्मया। न्यासस्तवायं दौहित्रः किमन्यत्ते ब्रवीम्यहम् ॥१५४॥ विपुले चम्पके दारे भद्रे सुरभिमालिनि। वसुधारे प्रिये नन्दे महानन्दे घटस्रवे ॥१५५॥ अज्ञानाज् ज्ञानतो वापि यदुक्तं किञ्चिदप्रियम्। तत्क्षमस्व महाभागे यच्चान्यदपकृतम्मया ॥१५६॥ सर्वास्सर्वगुणोपेताः सर्वलोकस्य मातरः। सर्वासां हि मया दत्तं रक्षध्वं मम बालकम् ॥१५७॥ अनाथमबलं दीनं रुदन्तं मम बालकम्। मातृशोकाभिसन्तप्तम् भगिन्यः पालयिष्यथ ॥१५८॥ भगिनीनामयम्पुत्रः साम्प्रतन्तु विशेषतः। बालोवलेह्यः सर्वाभिः पोष्यः पाल्यः स्वपुत्रवत् ॥१५९॥ चरन्तं विषमस्थाने गच्छन्तम्परगोकुलम्। अकार्य्येषु प्रवर्तन्तम् सख्यस्तं

वारयिष्यथ ॥१६०॥ परपुत्रे स्वपुत्रे च यासां चित्तं समम्भवेत्। तास्तु धन्याः कृतार्थास्तास्त्रैलोक्यस्य च मातरः ॥१६१॥ मोदन्ते देवलोकेषु शुभाः पुण्यकृताम्बराः। याः पालयन्त्यनाथांश्च परपुत्रांश्च पुत्रवत् ॥१६२॥ तस्मादनाथं मत्पुत्रं पुत्रवत्पालयिष्यथ। क्षमध्वं सुमहाभागा यास्यामि वनगोचरम् ॥१६३॥ नैव चास्मत्कृते कार्य्यो मन्युस्सख्यः कथञ्चन। यतःस्थितस्य सर्वस्य स्थितं भरणमग्रतः ॥१६४॥ श्रुत्वा तु बहुलावाक्यम् माता सख्यश्चविह्वलाः। विषादम्परमं जग्मुरिदमूचुश्च-विह्वलाः ॥१६५॥ अहो सुमहदाश्चर्य्यं यद् व्याघ्रवचनम्महत्। प्रवेष्टुमुद्यता भीमम्बहुला सत्यवाक्यतः ॥१६६॥ शपथस्सत्यवाक्येन वञ्चितव्यो यतो भयम्। भवितव्यम् प्रयत्नेन गम्यते तत् कथम् पुनः ॥१६७॥ बहुले ! नैव गन्तव्यं धर्म्मोऽयं कतमस्ततः। येन बालं सुतं त्यक्त्वा सत्यलोभेन गम्यते ॥१६८॥ अत्र गाथा पुरा गीता ऋषिभिर्धर्म्मवेदिभिः। प्राणत्यागे समुत्पन्ने शपथैर्न्नास्ति पातकम् ॥१६९॥ उद्वाहकाले रतिसम्प्रयोगे प्राणात्यये सर्वध नापहारे। द्विजस्य चार्थेप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ॥१७०॥ उक्तेऽनृते भवेद्यत्र प्राणिनाम्परिरक्षणम्। अनृतं तत्र सत्यं स्यात् सत्यमप्यनृतं भवेत् ॥१७१॥ यद्भूतहितात्यन्तम् तत्सत्यमितरम्मृषा। कामिनीषु विवाहेषु गवां भुक्ते तथा वने ॥१७२॥ ब्राह्मणाभ्युपपत्तौ च शपथैर्न्नास्ति पातकम्। सर्व्वस्वहरणे हास्ये वेश्यायां प्राणसंशये ॥१७३॥ गोद्विजार्थे विवाहे च शपथैर्न्नास्ति पातकम्। **बहुलोवाच**—परेषां प्राणरक्षार्थं वदेच्चैवानृतं वचः ॥१७४॥ नात्मार्थमुत्सहे वक्तुं स्वल्पमप्यनृतं वचः। एकः प्रसूयते जन्तुरेक एव प्रलीयते ॥१७५॥ एकस्तु भुङ्क्ते सुकृतमेकश्चाप्नोति दुष्कृतम्। वदन्ति मुनयस्सर्व्वे नानृतात् पातकं परम् ॥१७६॥ ततः पापतरन्नास्ति तस्मात् सत्यं वदाम्यहम्। सत्ये प्रतिष्ठिता लोकाः धर्म्मः सत्ये प्रतिष्ठितः ॥१७७॥ उदधिःसत्यवाक्येन मर्य्यादान्न विलंघते। विष्णवे पृथिवीं दत्वा बलिः पातालमाश्रितः ॥१७८॥ छद्मना पद्मनाभेन बलिर्व्वद्धोवतिष्ठते। प्रवर्द्धमानश्शैलेन्द्रः शतशृङ्गसमुच्छ्रितः ॥१७९॥ सत्येन संस्थितो बिन्ध्यः प्रवर्द्धन्नैव वर्द्धते। स्वर्गापवर्गरनकाः सर्व्वे वाचि प्रतिष्ठिताः ॥१८०॥ यस्तां विलोपयेद्वाचमशेषं तेन लोपितम्। योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥१८१॥ किन्तेन च कृतं पापं चौरेणात्मापहारिणा। तस्मान्नैवाहमात्मानमात्मनैव विलोपये ॥१८२॥ यास्यामि नरकं घोरं विलोप्यात्मानमात्मना। अगाधे विमले शुद्धे सत्यतीर्थे समीहिते ॥१८३॥ स्नात्वा पापमलैर्मुक्तः प्रयाति परमाङ्गतिम्। सत्येन वहते वायुः सत्येन तपते रविः ॥१८४॥ सत्येन वर्षते चन्द्रः सत्येन दहते नलः। नास्ति सत्यसमो मोक्षो नास्ति सत्यात् परागतिः ॥१८५॥ अश्वमेधसहस्रं च सत्यं च तुलया धृतम्। अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥१८६॥ सत्यं साधुतपः श्रुतं च परमं क्लेशादिभिर्व्वर्ज्जितं, स्वाधीनं च सुदुर्लभञ्च जगतस्साधारणं भूषणम्। साधूनां

निकर्षः सतां कुलधनं सर्ब्बाश्रमाणां बलं, यं म्लेच्छोप्यभिधाय गच्छति दिवं संत्यज्य तिष्ठेत्कथम् ॥१८७॥ अनृतेषु च पापेषु नित्यं प्राणिवधेषुच । एभिः सार्द्धमविश्वासो लोके श्लाघ्यतरो हि सः ॥१८८॥ **भीष्मउवाच**–एवं बहुलया प्रोक्ताः सख्यःसर्व्वाः सुशोभनाः । ऊचुस्ताः पुनरेवाथ बहुलां धर्म्मकांक्षिणीम् ॥१८९॥ **सख्यऊचुः**–बहुले त्वं नमस्कार्य्या सर्व्वैरपि सुरासुरैः। या त्वं परमसत्येन प्राणांस्त्यजसि दुस्त्यजान् ॥१९०॥ ब्रूमः किमत्र कल्याणि! या त्वं धर्म्मधुरन्धरा। त्यागेनानेन त्रैलोक्ये नाप्राप्यं किंचिदस्ति ते ॥१९१॥ अवियोगं च पश्यामः स्थानादस्मात् सुतेन ते। नहि कल्याणचित्तानामापदस्सिन्ति कुत्रचित् ॥१९२॥ न बन्धुर्न्नसुहृत्तस्य न मित्राणि न ब्रान्धवाः। वने वसन्महाव्याघ्रो मांसशोणितभोजनः ॥१९३॥ पापिष्ठश्चपाकारी च मांसाहारस्तु निर्दयः। न धर्मं जानते भद्रे अधर्मपथमाश्रितः ॥१९४॥ कुतस्तेन च विश्वासो निःस्नेहेन दुरात्मना। निवर्त्तस्व मतिं भद्रे ! गमनाय च तं प्रति ॥१९५॥ तिष्ठ सा त्वं सहास्माभिः पुत्रेण सह नन्दता। बुध्यस्वात्महितं भद्रे मूर्खे पण्डितमानिनि ॥१९६॥ **बहुलोवाच**–सत्यवादी महाप्राज्ञो धर्मिष्ठस्सत्यसंश्रयः। तथा स दृश्यते व्याघ्रः सत्यं सत्यपराक्रमः। ॥१९७॥ यदि धर्म्मन्नजानाति किमर्थं मां विमुञ्चति। भक्ष्यस्थानगता भद्रा मृत्युना परिपीड़िता ॥१९८॥ धर्म्मसंश्रवणात्तेन मुक्ताहं सत्यवाक्यतः। अवश्यमेव कर्त्तव्यं सत्यवाक्यस्य पालनम् ॥१९९॥ **भीष्म उवाच**–दृष्ट्वा गोपीजनं सर्वं परिक्रम्य च गोकुलम्। ततः सा गमने युक्ता बहुलापुत्रमब्रवीत् ॥२००॥ **बहुलोवाच**–शृणुष्वावहितो वत्स मातृसन्देशमुत्तमम्। नित्यं वयोगतः पुत्र ! मा प्रमादं करिष्यसि ॥२०१॥ प्रमादेन हि क्लिश्यन्ति सर्वे जीवा न संशयः। आत्मा भयात्त्वया पुत्र ! रक्षितव्यः प्रयत्नतः ॥२०२॥ दुरात्मनां तु श्वादीनां भेतव्यं पुत्र ! नित्यशः । तिर्य्यग्योनिगतानां च पापानं पापकारिणाम् ॥२०३॥ **भीष्म उवाच**–एवं सा बहुला पुत्रं भूयस्संदिश्य सर्वशः। पालयन्तीह शपथं बहुला प्रस्थिता वनम् ॥२०४॥ बहुला प्रस्थिता दैवात्सर्वाश्चेदमथाब्रवीत्। क्षितिम्वरुणमर्कं च राहुं चाग्निं निशाकरम् ॥२०५॥ दश दिग्देवतास्तत्र नक्षत्राणि ग्रहैःसह। सर्वान् विज्ञापयाम्यद्य प्रणिपत्य मुहुर्मुहुः ॥२०६॥ स्वैः स्वैः प्रभावैस्सर्व्वे वै रक्षध्वं मम बालकम् । साधूनां देवतानां च सर्वो बन्धुसमो जनः ॥२०७॥ तस्मात्करुणया बालमनाथं पालयिष्यथ। ये संश्रिता वने सिद्धाः सर्व्वाश्च वनदेवताः ॥२०८॥ वने चरन्तं शरणं सर्वे रक्षन्तु मे सुतम्। चम्पकाशोकपुन्नागाः सरलार्ज्जुनकिंशुकाः ॥२०९॥ शृणवन्तु पादपाः सर्वे सन्देशं मम विक्लवम्। बालमेकाकिनं दीनं चरन्तंविषमे वने ॥२१०॥ रक्षध्वं मातृशोकार्तं स्नेहात् पुत्रमिवौरसम्। मातापितृपरित्यक्तमनाथं दीन-मानसम् ॥२११॥ तस्यैव क्रन्दमानस्य मत्पुत्रस्य महावने। मातृशोकाभितप्तस्य क्षुत्पिपासाकुलस्य च ॥२१२॥ स्तनस्य

पायिनः सर्वं जगत् शून्यं प्रपश्यतः। चरमाणस्य कर्त्तव्यं सानुक्रोशैस्तु रक्षणम् ॥२१३॥ **भीष्म उवाच**–एवं सन्दिश्य बहुला पुत्रस्नेहवशंगता। शोकाग्निना च सन्तप्ता छिन्ना सा पुत्रदर्शने ॥२१४॥ वियुक्ता चक्रवाकीव लतेव पतिता तरोः। अन्धेव यष्टिरहिता प्रस्खलन्ती पदे-पदे ॥२१५॥ **वनस्पतय ऊचुः**–माभैःत्वं धेनुके नित्यमभयन्ते ददाम्यहम्। तुष्टाःसर्वाश्च सत्येन वरं वरय सुव्रते ॥२१६॥ **बहुलोवाच**–यदि तुष्टा ध्रुवं सर्वा देवता वरदा मम। पुत्रोऽयम्मम सर्वत्र रक्षितव्यः प्रयत्नतः ॥२१७॥ **भीष्मउवाच**–एवमस्त्विति ताः सर्वाः सपुत्राया वरं ददुः। बहुलायाः प्रपश्यन्त्या-स्तत्रैवादर्शनं ययुः ॥२१८॥ विस्मिता चैव सा तत्र बहुला सत्यवादिनी। रोदमाना वने तस्मिन् तं देशं समवर्तत ॥२१९॥ एवं सा बहुला धेनुर्वृक्षान् सन्दिश्य दुःखिता। जगाम सा पुनस्तत्र यत्रासौ पिशिताशनः ॥२२०॥ आस्ते विस्तारितनखस्तीक्ष्णदंष्ट्रो भयावहः। व्याघ्रं दृष्ट्वा तु सा धेनुरिदं वचनमब्रवीत् ॥२२१॥ **बहुलोवाच**–आगताहं महाभाग सत्यधर्म्मव्यवस्थिता। कुरु तृप्तिं यथाकामं मम मांसेन साम्प्रतम् ॥२२२॥ तर्पयस्व च भूतानि पञ्च मे शोणितेन वै। **व्याघ्र उवाच**–स्वागतं तव कल्याणि ! बहुले ! सत्यवादिनि ! नहि सत्यवतां किंचिदशुभं विद्यते क्वचित् ॥२२३॥ त्वंयोक्तं बहुले ! पूर्वं सत्यं प्रत्यागमे पुनः। तेन मे कौतुकं जातं प्राप्तागच्छेःकथं पुनः ॥२२४॥ तव सत्यपरीक्षार्थं प्रेषितासि मया पुनः। अन्यथा मां समासाद्य जीवन्ती यास्यसे कथम् ॥२२५॥ अपूर्वं कौतुकं तत्र दृष्टं सत्यं गवां मया। तस्मादनेन सत्येन विमुक्तासि मयाधुना ॥२२६॥ सत्ये प्रतिष्ठिता लोकाः धर्मस्सत्ये प्रतिष्ठितः। ज्ञानमोक्षौ स्थितौ सत्ये सर्वं सत्ये प्रतिष्ठितम् ॥२२७॥ सत्येन देवास्तुष्यन्ति सत्येन पितरस्तथा। सत्येन ऋषयः सिद्धाः सत्यं च त्वयि संस्थितम् ॥२२८॥ धन्या गावः क्षितिर्द्धन्या धन्या त्वमसि धेनुके। धन्यः स देशो यत्र त्वं वससे सत्यवादिनि ॥२२९॥ धन्यः स राजा यस्य त्वं राष्ट्रे निवससे शुभे। धन्यः स विषयो मातस्तृणवृक्ष-लतान्वितः ॥२३०॥ चचार बहुला यत्र दृष्टा पापानि नाशयेत्। ते धन्यास्ते कृतार्थाश्च तैरेव सुकृतं कृतम्। तैराप्ता जन्मनः सारो ये पिबन्ति गवां पयः ॥२३१॥ मृगेन्द्रः प्रत्ययं दृष्ट्वा विस्मयं परमं गतः। प्रत्यादेशोयमस्माकं मन्ये देवैः प्रदर्शितः ॥२३२॥ सत्यमेतद् गवां दृष्ट्वा न मे रोचति जीवितम्। तत्करिष्याम्यहं येन मोक्षमेष्यामि किल्विषात् ॥२३३॥ मया जीवसहस्राणि भक्षितानि हतानि च। कां गतिन्तु गमिष्यामि दृष्ट्वा गोसत्यमीदृशम् ॥२३४॥ अहं पापो दुराचारो नृशंसो जीवघातकः। कांस्तु लोकान् गमिष्यामि कृत्वा कर्म्म सुदारुणम् ॥२३५॥ गमिष्ये सर्वतीर्थं न करिष्ये कायशोधनम्। पतिष्ये गिरिमारुह्य प्रवेक्ष्ये वा हुताशनम् ॥२३६॥ शोषयिष्ये निजं देहं ग्रीष्मे भानुर्ज्जलं यथा। बहुले यन्मया कार्यं तपः

पापविशुद्धये ।।२३७।। तदादिशस्व संक्षेपात् त्वं धर्म्मं वेत्स्यसे यतः। **बहुलोवाच**—तपः कृते प्रशंसति त्रेतायां ज्ञानमेव च ।।२३८।। द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे। सर्वेषामेव दाननामिह चैकमनुत्तमम्। अभयं सर्वभूतानां नास्ति दानमतः परम् ।।२३९।। चराचराणाम्भूतानामभयं यः प्रयच्छति। सर्वपापविनिर्म्मुक्तः परं ब्रह्माधिगच्छति ।।२४०।। नास्त्यहिंसासमो धर्मो नास्त्यहिंसापरन्तपः। नास्त्यहिंसापरा विद्या नास्त्यहिंसासमं श्रुतम् ।।२४१।। यथा हस्तिपदेनान्यत् पदं सर्वं विलीयते। सर्वे धर्म्माः तथा व्याघ्र ! विलीयन्ते ह्यहिंसया ।।२४२।। योगवृक्षस्य या शाखा आतपत्रं शमस्य तु। निधिःसा ज्ञानपुष्पाणां मूलं मोक्षफलस्य च ।।२४३।। दुःखत्रयाभिसन्तप्तः छायां योगतरोः श्रितः। न बाध्यते पुनर्दुःखैः प्राप्य निर्वाणमृच्छति ।।२४४।। इत्येतत्परमं श्रेयः कीर्तितं ते समासतः। त्वमप्येतद्विजानासि केवलं मां परीक्षसे ।।२४५।। **व्याघ्र उवाच**—अहं देवैः पुरा शप्तो व्याघ्रत्वे विनियोजितः। ततः प्राणिवधाद् घोरात् तत् सर्वं मम विस्मृतम् ।।२४६।। त्वत्-सम्पर्कोपदेशेन संजातं स्मरणं मम। मुक्तशापश्च संजातः प्रसादात् तव धेनुके ।।२४७।। बहुले गच्छ तुष्टोस्मि पुत्रेण सहिता भव। त्वं वाप्यनेन सत्येन गमिष्यसि परां गतिम् ।।२४८।। **भीष्म उवाच**—ततस्संय्योगमाश्रित्य व्याघ्रस्तद्गतमानसः। प्राणायामैः स्वकं देहं परित्यज्य दिवं गतः ।।२४९।। सर्वपापविशुद्धात्मा योगैश्वर्य्यसमन्वितः। विमानेनातिमहता सेवितश्चाप्सरोगणैः ।।२५०।। विमाने संस्थितं दृष्ट्वा विस्मयं परमं गता। बहुला हृष्टपुष्टांगी गोकुलं पुनरागता ।।२५१। आगत्य च यथा वृत्तं व्याघ्रसम्वादमुत्तमम् । सखीभ्यः कथयामास जनन्यै स्वसुताय च ।।२५२।। बहुला पुत्रसंयुक्ता सुप्रीता सुनिराकुला। गोधनैर्बृषभै-र्वत्सै-र्गोपी-गोप-जनैर्वृता ।।२५३।। विचचाराटवीं सर्वामशेषां भयवर्जिता। उषित्वा सुचिरं कालं सत्यवाक्यप्रभावतः ।।२५४।। गृहीत्वा सर्वयूथं ञ्च नृपं च सपरिच्छदम्। समीपस्थांश्च तान् सर्वान् वृक्षवल्लीलतादिकान् ।।२५५।। समेत्य तैर्म्महापुण्या बहुला प्रययौ दिवम् । महाविमानैः श्रीमद्भिरसंख्यैः सर्वतो वृता ।।२५६।। उपर्य्युपरि लोकानां स्वर्गलोकं समाश्रिता। तत्र सा भोगसंपूर्णमसंख्यातं सुरोत्तमैः ।।२५७।। क्रीड़ते सहिता सर्वैर्य्यावदाहूतसंप्लवम् । इत्येतत्सत्यवाक्यस्य माहात्म्यं समुदाहृतम् ।।२५८।। यः पठेच्छृणुयाद्वापि स्वर्गलोकं स गच्छति । बहुलाव्याघ्रसम्वादं यः पठेत् सततं नरः ।।२५९।। शृणुयादेकचित्तस्तु स विघ्नैर्न्नाभिभूयते । विमुक्ता पतिभिः पुत्रैर्बान्धवैर्वापि योषितः ।।२६०।। नरो वा यः पठेन्नित्यं स तं भवति संगतः । क्षेत्रमध्ये च पठतां बालानां शान्तिवर्धनम् ।।२६१।। भवेद् ग्रहाभिभूतानां रक्षामेतां प्रयोजयेत्। दुर्गेषु पठतां नित्यमटव्यामटनेषु च ।।२६२।। दिवा वा यदि वा रात्रौ न तेषां विद्यते भयम्। दुःस्वप्नारिष्टदुर्भिक्षं पठतः संप्रणश्यति ।।२६३।। वन्ध्यायाश्च भवेत् पुत्रः संगतिः पतिना सह। कुमारी चैव

शृणवन्ती वीरं पतिमवाप्नुयात् ।।२६४।। नारी वा पुरुषो वापि दुर्भगः सुभगो भवेत्। गवां पर्वसु भक्त्या यः सर्वदा पुरतः पठेत् ।।२६५।। यशोवृद्धिमवाप्नोति स्वर्गलोकं स गच्छति। गवां यश्चाग्रतो नित्यं पठेत् पर्वणि पर्वणि ।।२६६।। स गोवृद्धिमवाप्नोति गोलोके च महीयते ।।

।। *इतीतिहाससमुच्चये बहुलाव्रतकथा समाप्ता* ।।

कथां श्रुत्वा पुष्पाञ्जलिभिस्त्रिभिः पूजयित्वा 'भगवति बहुले पूजितासि प्रसीद क्षमस्वेति' विसर्जयेत्। कुशत्रयतिलजलान्यदाय ॐ अद्य कृतैतद् बहुला-पूजन-तत्कथाश्रवणकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानाम-गोत्राय ब्राह्मणाय दक्षिणां दातुमहं समुत्सृज्ये। इतिदक्षिणान्दद्यात्। आचारादस्मिन्दिने स्त्रियो यवान्नभक्षणं कुर्वन्तीति, सवत्सां गां सिन्दूरादिभिरभ्यर्च्य यवान्नभक्षणमपि कारयन्तीति ।।

# अथ श्रीकृष्णपूजा

अथ[1] भाद्रकृष्णाष्टम्यां श्रीकृष्णपूजनोपवासव्रतं कुर्य्यात्। तत्र पूर्वदिने निरामिषमेकवारं भुक्त्वा सँय्यमं कृत्वा सुपवित्रगृहे मृन्मयीं वक्ष्यमाणध्यान-विशिष्टामष्टदलकमलोपरि कृष्णादिप्रतिमां कल्पयेत्। तद्दिने प्रातरेव कृतनित्य-क्रियो व्रती पूजासामग्रीं सम्पाद्य नदीतीरे प्राङ्गणे वा फलपुष्पाक्षतयुत-जलपूर्णताम्रपात्रमादाय जानुभ्यामवनिङ्गत्वा ॐअद्य भाद्रकृष्णाष्टम्यां सपरिवार श्रीकृष्णपूजनोपवासव्रतमहमाचरिष्यामि इति निवेद्य पुनः कुशत्रयतिलजलान्यादाय ॐ अद्य भाद्रे मासि कृष्णे पक्षेऽष्टम्यां तिथौ अमुकगोत्रस्यामुकशर्मणः कोटिजन्मावच्छिन्नबाल्यकौमार-यौवनवार्द्धककृतकायिकवाचनिकमानसिकज्ञाता-ज्ञातसकलपातकक्षयपूर्वकसहस्रमन्वन्तरब्रह्मप्रीतिपूर्वकप्रेतयोनिगतपितृगणोद्धरण-पूर्वकशतवर्षकृतगयाधिकरणकपिण्डदानजन्यफलसमफल-सहस्रकपिलादानजन्य-फलसमफल-युगादिदिनकृतयावत्पुण्यफलसमफल-कल्पवासरकृतयावत्पुण्यफल-कोटिगुणाधिकफलसमफल-मथुराधिकरणकश्रीकृष्णदर्शन-जन्यफलसमफल-कुरुक्षेत्राधिकरणकसहस्रसुवर्णभारदानजन्यफलसमफल-वापीकूपतडागदेवाय-तनदानजन्यफलसमफलप्राप्तिपूर्वकान्तकालिकश्रीकृष्णसायुज्यमुक्तिकामः सपरिवारश्रीकृष्णपूजनोपवासव्रतमहङ्करिष्ये ।। इति संकल्पः ।।

*स्त्रीचेत् प्रणवस्थाने नमश्शब्दप्रयोगः कार्यः ।* अमुकगोत्राया अमुकदेव्या इत्यूहः कर्तव्यः संकल्पे ।

पुष्पहस्तेन ॐ नमो भगवन् श्रीकृष्णोऽसि १। ॐ बलभद्रोसि २। ॐ वसुदेवोसि ३। ॐ नन्दोसि ४। ॐ यशोदासि ५। ॐ देवक्यसि ६। ॐ रोहिण्यसि ७। ॐ सुभद्रासि ८। ॐ दुर्गासि ९। ॐ रुक्मिण्यसि १०। ॐ

1. कृष्णाष्टमीव्रतं उदयगामिनी तिथिर्ग्राह्या। जयन्तीव्रते तु सप्तमीयुता चन्द्रोदयव्यापिनी ग्राह्या।

सत्यभामासि ११। इति प्रतिमूर्ति स्पृशन् नामकरणं कृत्वा तिलानादाय ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टय्यँज्ञꣳ समिमन्दधातु विश्वेदेवास इह मादयन्तामोम् प्रतिष्ठॐभगवन् श्रीकृष्ण इह सुप्रतिष्ठितोभव ॥ एवम् बलभद्रादीन् प्रतिष्ठापयेत्।

[1]करकच्छपिकां बाध्वा पुष्पमादाय ध्यायेत्। यथा, नीलोत्पलदलश्यामं पीतवस्त्र-धारिणं सर्वालङ्कारभूषितं कौस्तुभोद्भासिताङ्गं सौवर्णपर्य्यङ्कस्थितं सौवर्णकुम्भस्थापितं देवक्युत्सङ्गस्थितं स्तनपायिनं चतुर्भुजं शंखचक्रगदापद्मधरं पद्मपत्राक्षं श्रीवत्साङ्कित-वक्षःस्थलं वनमालाविभूषितं जगत्सेतुं श्रीपतिं हरिम् ॥ इति ध्यात्वा तिलमादाय ओम् **यज्ञाय** यज्ञेश्वराय यज्ञपतये यज्ञसम्भवाय गोविन्दाय नमोनमः। नमो भगवन् श्रीकृष्ण इहागच्छ इह तिष्ठेत्यावाह्य, शंखेन पाद्यमादाय ओम् **योगाय** योगेश्वराय योगपतये योगसम्भवाय गोविन्दाय नमोनमः इदं पाद्यम् ॥ फलपुष्पदूर्वातुलसीपत्रयुतार्घ्रमादाय, ओम् जातः कंसवधार्थाय भूभारोद्धरणाय च। गृहाणार्घं मया दत्तं देवकीसहित प्रभो एषोर्घः ॥ ओम् सत्यायेति एषमधुपर्कः ॥ ओम् **योगाय** योगेश्वराय योगपतये योगसम्भवाय गोविन्दाय नमोनमः इदमाचमनीयम् ॥ ओम **विश्वाय** विश्वेश्वराय विश्वपतये विश्वसम्भवाय गोविन्दाय नमो नमः। इदं स्नानीयम्, ओम् सहस्रशीर्षेत्यादिषोडशर्चेन (पुरुषसूक्तेन) वा स्नापयेत्। ॐ योगायेति इदंपुनराचमनीयम् ॥ ओम् **सत्याय** सत्येश्वराय सत्यपतये सत्यम्भवाय गोविन्दायनमोनमः इदंपीतवासोयुगं बृहस्पति-दैवतं ॥ ओम् सत्यायेति इमे यज्ञोपवीते बृहस्पतिदैवते ॥ ओम् **सर्वाय** सर्वेश्वराय सर्वपतये सर्वसम्भवाय गोविन्दाय नमोनमः, इदमनुलेपनम् ॥ एते यवतिलाः ओम्योगायेति ॥ एतानि पुष्पाणि ॥ इदं माल्यम् ॥ एतानि दूर्वादलानि ॥ एतानि तुलसीपत्राणि ओम्सत्यायेति ॥ एषधूपः ओम्सर्वायेति ॥ एषदीपः ओम् **ज्ञानाय** ज्ञानेश्वराय ज्ञानपतये ज्ञानसम्भवाय गोविन्दाय नमोनमः ॥ एतानि नानाविधानिनैवेद्यानि। ओम् योगायेति इदमाचमनीयम् ॥ ओम् ज्ञानायेति एतानि ताम्बूलानि। इदमाचमनीयम् ओम् नमोभगवते श्रीकृष्णायनमः ॥ ओम् अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम्। वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ॥१॥ दामोदरं पद्मनाभं केशवं गरुड़ध्वजम्। गोविन्दमच्युतं कृष्णमनन्तमपराजितम् ॥२॥ अधोक्षजं जगद्बीजं सृष्टिस्थित्यन्तकारकम्। अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ॥३॥ नारायणं चतुर्बाहुं शंखचक्रगदाधरम्। पीताम्बरधरं नित्यं वनमालाविभूषितम् ॥४॥ श्रीवत्सांकं जगत्सेतुं श्रीपतिं श्रीधरं हरिम्। प्रणतोऽस्मि सदादेवं देवदेवं जगत्पतिम् ॥५॥ नामान्येतानि संकीर्त्य ईप्सितं प्राप्नुयान्नरः। त्राहि

---

१. नौकाकारौ हस्तौ सम्पुटीकृत्य ।

मां देवदेवेश हरे ! संसारसागरात् ।।६।। त्राहि मां दुःखशोकघ्न रोग-शोकार्णवाद्धरे । दुर्वृत्तांस्त्रायसे विष्णो ये स्मरंति सकृत् सकृत् ।।७।। सोऽहं देवातिदुर्वृतस्त्राहि मांशोकसागरात्। पुष्कराक्ष निमग्नोऽहं महत्यज्ञानसागरे। त्राहि मां देवदेवेश त्वदृतेन्यो न रक्षकः ।।८।। एष पुष्पाञ्जलिः ओम् भगवते श्रीकृष्णायनमः ।। इत्येतैर्वारत्रयं पुष्पाञ्जलिं दद्यात् ।।१।।

ततः तिलेन ओम् बलभद्र इहागच्छ इह तिष्ठेत्यावाह्य पुष्पहस्तेन बलभद्रं शुक्लवर्णं हलमुशलायुधधरम् नीलाम्बरं ध्यात्वा ओम् जन्म जन्मकृतं पापं बाल्ययौवनवार्द्धके, पुण्यं समृद्धिमायातु पापं हर हलायुध ।। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ।। इदनुलेपनम् । एते यवतिलाः ।। एतानि पुष्पाणि। इदं पीतवस्त्रं बृहस्पतिदैवतं ।। इमे यज्ञोपवीते बृहस्पतिदैवते। इदं माल्यम्। इदं दूर्वादलम् ।। इदं तुलसीपत्रम्। एतानि गन्धपुष्पधूपदीप-ताम्बूल-नानाविधनैवेद्यानि ।। इदमाचमनीयम् ।। एष पुष्पाञ्जलिः ओम् बलभद्राय नमः ।।२।।

ततोऽक्षतमादाय ओम् देवकि इहागच्छ इह तिष्ठ ॐ देवकीं पर्य्यंकशायिनीं श्यामां रक्तवस्त्रधरां सर्वालङ्कारभूषितां द्विभुजां कमनीयरूपां लक्ष्मीगृहीतचरणकमलां ध्यात्वा, ॐ देवानां जननी देवि देवदेवस्य च प्रभोः, देवकि त्वं गृहाणार्घं सर्वपापात्प्रमुच्य माम्। एतानि पाद्यार्घाचमनीयस्नानीयपुराचमनीयानि ॐ देवक्यै नमः ।। इदमनुलेपनम् ।। इदं सिंदूरम् ।। इदमक्षतम् ।। एतानि पुष्पाणि ।। इदं वस्त्रम् ।। इदं माल्यम् ।। एतानि गन्धपुष्पधूपदीप-ताम्बूलनानाविधनैवेद्यानि ।। इदमाचमनीयम् ।। एष पुष्पाञ्जलिः ।। ॐ देवक्यै नमः इतिपूजयेत् ।।३।।

तत ॐ यशोदे इहागच्छ इहतिष्ठेत्यावाह्य ॐ यशोदां प्रसूतिकल्पां गोपीवेषां श्यामवर्णां रक्तवस्त्रधरां सर्वालङ्कारभूषितां द्विभुजामूर्द्धोत्तानीकृत-वामहस्तधृतदधि-पात्रां दक्षिणे वरदां ध्यात्वा, फलपुष्पसमन्वितार्घमादाय पठेत्। ॐ यशोदे त्वं जगन्माता यशोदे त्वं जगत्पिता, गृहाणार्धम्मया दत्तं फलपुष्पसमन्वितम्। एतानिपाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ॐ यशोदायै नमः इति गन्धादिभिरुक्तोपचारैस्संपूजयेत् ।।४।।

ॐ वसुदेव इहागच्छ इहतिष्ठेत्यावाह्य। ॐ वसुदेवं श्यामवर्णं शुक्लाम्बरधरं द्विभुजं सर्वालङ्कारभूषितम् ध्यात्वा ओम् तातस्त्वं देवदेवस्य वासुदेवस्य हे पितः। वसुदेव गृहाणार्घं मम नाशय किल्विषम्। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ।। इदमनुलेपनम्।। इदमक्षतम्। पुष्पाण्यादाय ओम् देवानां कार्य्यसिध्यर्थं यो महीमगमद्विभुः। अदितिर्द्देवकीसूते तस्मै विश्वात्मने नमः एतानि पुष्पाणि ।। इदं माल्यम् ।। इदं पीतवस्त्रम्। इमे यज्ञोपवीते। एतानि गन्ध पुष्प-धूपदीपताम्बूल-नानाविधनैवेद्यानि। इदमाचमनीयम् ।। एष पुष्पाञ्जलिः ।। ओम् वसुदेवाय नमः इत्यनेन पूजयेत् ।।५।।

ॐनन्द इहागच्छ इहतिष्ठ। नन्दमीषद्गौरं वृषस्कन्धं लम्बश्मश्रुम् वामदक्षिणाभ्यामभयवरदं वन्यकुसुममालावद्धशेखरं ध्यात्वा, पञ्चोपचारैः पूजयेत् ।। ओम् यशोदे त्वं जगन्माता नन्दगोपो जगत्पिता। नन्द त्वञ्च गृहणार्घं यशोदे च यशस्विनि ।। एतानि पाद्यार्घाचमनीय स्नानीयपुनराचमनीयानि। इदमनुलेपनम् ।। इदमक्षतम् ।। ओम् अक्षरादक्षरं न्यूनं त्रयीदेवामृतोपमम्। तेषां गोप्त्रे नमस्तुभ्यं कश्यपाय नमोनमः ।। एतानि पुष्पाणि ।। इदं माल्यम् ।। इदं पीतवस्त्रम् बृहस्पति दैवतम्। इमे यज्ञोपवीते बृहस्पतिदैवते ।। एतानि गन्धपुष्पधूपदीपताम्बूलनाविधनैवेद्यानि ।। इदमाचमनीयम् ।। एष पुष्पाञ्जलिः ॐ नन्दाय नमः इत्यनेन पूजयेत् ।।६।।

ॐ रोहिणि इहागच्छ इहतिष्ठेत्यावाह्य। रोहिणीं शुभासनस्थां शुद्धकाञ्चनवर्णां सर्वालङ्कारभूषितां द्विभुजां वामे सितपद्मधरां दक्षिणे वरदां ध्यात्वा, ॐ वार्द्धके यौवने बाल्ये यन्मया पूर्वसञ्चितम्। यद्यज्जन्मार्जितन्देवि हर त्वं पातकं मम ।। इत्येनन पाद्यादिभिरुक्तोपचारैः ओम् रोहिण्यै नमः इतिवाक्येन पूजयेत् ।।७।।

ॐ सुभद्रे इहागच्छ इहतिष्ठ, सुभद्रां गौरवर्णां द्विभुजां सर्वालङ्ककारभूषिताम् वामे धृतश्रीफलां दक्षिणे वरदां ध्यात्वा, ओम् सर्वदेवमये देवि सुभद्रे वरवर्णिनि ममाभिलषितं यच्च सफलं कुरु नन्दिनि ।। इत्यनेन पाद्यादिभिरुक्तोपचारैः सुभद्रायै नमः इति मन्त्रेण पूजयेत् ।।८।।

ॐ दुर्गे इहागच्छ इहतिष्ठ ।। ॐ दुर्गां कन्यां गौराङ्गीं सर्वालङ्कारभूषितां ध्यात्वा ॐ नमस्ते सर्वदे गौरि नमस्ते सुखसौख्यदे त्राहि मां पद्मपत्राक्षि कात्यायनि नमोस्तु ते ।। इत्यनेन पाद्यादिभिरुक्तोपचारैः ॐ दुर्गायैनमः इतिपूजयेत् ।।९।।

ॐ सत्यभामे इहागच्छ इहतिष्ठेत्यावाह्य, ॐ सत्यभामायै नमः इत्यनेन मन्त्रेण पाद्यदिभिरुक्तोपचारैः पूजयेत् ।।१०।।

ॐ रुक्मिणि इहागच्छ इहतिष्ठ। ॐ रुक्मिण्यैनम इत्यनेन पाद्यादिभिः पूजयेत् ।।११।।

तत ॐ एतानि नानाविधपक्वान्नसहितससितसदधिपृथुकान्नानि एतानि नानाविधफलानि ।। एतानि ताम्बूलानि ।। ॐ सपरिवाराय भगवते श्रीकृष्णाय नमः इति मन्त्रेण दद्यात् ।। एवम् एष कर्पूरदीपः ॐ सपरिवाराय भगवते श्रीकृष्णायनमः इत्युत्सृज्य उत्तिष्ठन् कर्पूरदीपेनैवारार्त्तिकं कृत्वा वामेन घंटां वादयन् दक्षिणेन चामरं वीजयन्, ॐ यानि*कानीह पापानि ब्राह्महत्यासमानि च। तानि तानि प्रणश्यन्तु प्रदक्षिणपदेपदे ।। इत्यनेन चतुः प्रदक्षिणीकृत्य दण्डवत्प्रणम्य यथाशक्तिस्तोत्रादिकं पठित्वा कथां श्रृणुयात् ।। ततो होमार्थं कुशंडिकाविधिनाग्निं संस्थाप्य इदं विष्णुरित्येनाष्टोत्तरशतं जुहुयात् ।। ततो यथासम्भवं ब्राह्मणान् भोजयेत् नृत्यगीतवाद्यादि-नानोत्सवैर्दिवसं नयेत् ।। पुनः सायंकाले कृतनित्यक्रियो व्रती

यथाशक्ति दीपमालां दत्वा कर्पूरदीपेनारार्त्तिकं विधाय, पुष्पाण्यादाय **ओम अनघमित्यादि रक्षक** इत्यन्तेन त्रि:पुष्पाजलिं दत्वा यानि कानीत्यादिना चतुः प्रदक्षिणीकृत्य दण्डवत्प्रणम्य स्तोत्रदिकं पठन् नृत्यादि-नानोत्सवैः सपादप्रहरद्वयरात्रिव्य- पगमानन्तरं बहिरागत्य शुचिस्थले प्राङ्गणे गोमयोपलिप्तभूमौ पूर्वाभिमुख उपविश्याचम्य चन्द्रं ध्यात्वा ओम् **सोमाय** सोमेश्वराय सोमपतये सोमसम्भवाय गोविन्दाय नमोनमः। रोहिणीसहितसोम ! इहागच्छ इह तिष्ठेत्यावाह्य, गन्धपुष्पा–क्षतयुतदुग्धपूर्णशंखमादाय , ॐ अत्रिनेत्रसद्भूत क्षीरोदार्णवसम्भव ! गृहणार्घ्रं मया दत्तं रोहिण्या सहित:प्रभो ।। सोमायेति च मन्त्रेण एतानि पाद्यार्घाचमनीय-स्नानीयपुनराचमनीयानि ॐ रोहिणीसहितचन्द्राय नमः ।। इदमनुलेपनम् । इदमक्षतम् । इदं शुक्लवस्त्रं वृहस्पतिदैवतं ।। इमे यज्ञोपवीते वृहस्पतिदैवते ।। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैद्यानि ।। इदमाचमीयम्। एतानि सदधितण्डुलानि ।। एष पुष्पाञ्जलि:ओम् रोहिणीसहितचन्द्राय नमः। इतिसम्पूज्य दण्डवत्प्रणम्य ओम् रोहिणीसहितचन्द्र पूजितोसि प्रसीद क्षमस्व स्वस्थानं गच्छेतिविसर्जयेत्। ततो गीतनृत्यादिभिः रात्रिम् व्यतीत्य अरुणोदयवेलायां बहिरागत्य शुचिर्भूत्वा ॐ अनघमित्यादिना त्रिः पुष्पाञ्जलिं सपरिवाराय श्रीकृष्णाय दत्वा क्षमा-पनस्तोत्रादिकं पठित्वा प्रार्थयदनेन ॐ मन्त्रहीनं क्रियाहीनं भक्तिहीनं च यद्विभो। पूजितं कृष्ण तत्सर्वं परिपूर्णं सदास्तु मे ।। आयुरारोग्यमैश्वर्यं धनं धान्य-सुतान् बहून्। कलत्रं धर्म्ममोक्षौ च देहि कृष्ण ! नमोस्तुते ।। ओम् रूपन्देहि यशोदेहि भाग्यं भगवन् देहि मे। धर्म्मान्देहि धनन्देहि सर्वान्कामान् प्रदेहि मे ।। इत्यादिना सम्प्रार्थ्य, विसर्जयेदनेन–ओम् यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ।। इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ।। ओम् भगवन् श्रीकृष्ण ! पूजितोसि प्रसीद क्षमस्व स्वस्थानङ्गच्छ ।। ॐ बलभद्र पूजितोसि प्रसीद क्षमस्व स्वस्थानङ्गच्छ ।। ॐ देवकि पूजितासि प्रसीद क्षमस्व० ।। ओम् यशोदे पूजितासि प्रसीद क्षमस्व स्वस्थानङ्गच्छ। ॐ वसुदेव पूजितोसि प्रसीदक्षमस्व स्वस्थानङ्गच्छ। ॐ नन्द पूजितोसि प्रसीद क्षमस्व०।। ॐ रोहिणि पूजितासि प्रसीद क्षमस्व०। ॐ सुभद्रे पूजितासि प्रसीद क्षमस्व० ।। ॐ दुर्गे पूजितासि प्रसीद क्षमस्व० ।। ॐ सत्यभामे पूजितासि प्रसीद क्षमस्व०। ॐ रुक्मिणि पूजितासि प्रसीद क्षमस्व स्वस्था-नङ्गच्छ ।। सर्वान् विसृज्य कुशात्रयतिलजलान्यादाय ओम् अद्यकृतैतत्सपरिवार श्रीकृष्णपूजन-तत्कथाश्रवणकर्म्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यक-हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ।। इति उत्सृज्य ब्राह्मणाय प्रतिपादयेत्। यथाशक्ति भूयसीं दद्यात्। ततो कृष्णादिप्रतिमां जलाशये प्रक्षिप्य ब्राह्मणान् भोजयित्वा पारणां कुर्य्यात् ।।

# अथ श्रीकृष्णाष्टमी व्रतकथा

**नारद उवाच**–भगवन् श्रोतुमिच्छामि कृष्णजन्माष्टमीव्रतम्। को विधिः किं फलं चास्य तन्मे ब्रूहि पितामह ।।१।। **ब्रह्मोवाच**–शृणु नारद वक्ष्यामि विष्णोर्ज्जन्म-व्रतं शुभम्। कर्त्तव्यं च सदा विप्र त्रिदशैरपि मानवैः ।।२।। कृष्णपक्षे नभोमासि अष्टमी रोहिणीयुता। विना विष्णुप्रसादेन कर्तुं विप्र न शक्यते ।।३।। देवकीसहितं कृष्णमर्च्चयन्ति सुभक्तितः। मन्वन्तरसहस्रन्तु प्रीतास्तेषां पितामहाः ।।४।। जयन्ती न कृता यैस्तु जागरेण समन्विता। श्वपचैस्ते समा ज्ञेयाः जयन्तीवर्ज्जिता नराः ।।५।। योषितस्तु न सन्देहस्तथोक्तन्तव सुव्रत, धिक् माता धिक् पिता विप्र जयन्ती येन वर्ज्जिता ।।६।। तेन कार्य्यं न पितृणां परं दुःखाय केवलम्। सन्ति व्रतान्यनेकानि पुण्यकोटिप्रदानि च ।।७।। जयन्तीव्रततुल्यानि न दृष्टानि मुनीश्वर। प्रेतयोनिगतानां च प्रेतत्वं नाशितं च तैः ।।८।। यैः कृता भाद्रकृष्णा वै अष्टमी रोहिणीयुता। किं पुनर्बुधवारेण सोमेन च विशेषतः ।।९।। किं पुनर्नवमीयुक्ता कल्पकोटिस्तु मुक्तिदा। नृणां बिना व्रतेनापि तपसा वा तथार्ज्जितम् ।।१०।। कृतेनैकोपवासेन प्रीतो भवति माधवः। भक्त्या विनोपवासेन रात्रौ जागरणेन च ।।११।। फलं यच्छति दैत्यारिर्ज्जयन्तीव्रतसंभवम्। पुराणे गीयते विप्र स्वयं कृष्णेन कीर्त्तिता ।।१२।। जयन्ती दुर्लभा कृष्णे पापिनां न च वैष्णवम्। एकेनैवोपवासेन पापं जन्मार्जितं हरेत् ।।१३।। किं किं छिद्रं न संजातं संसारे वसतां नृणाम्। येषां देहस्थितैः प्राणैर्ज्जयन्ती विफलीकृता ।।१४।। उपवासासमर्थेन जयन्तीवासरे द्विज। मृत्युरंगीकृतस्तेन यावदाहूत–संप्लवम् ।।१५।। न स्नातं न हुतं दत्तं नार्च्चितो देवकीसुतः। जयन्तीवासरे प्राप्ते उपवासो न जागरम् ।।१६।। लिखित्वा चित्रगुप्तेन दत्तं गुप्तपटं मुखे। यमेन यावच्चन्द्रार्कौ दत्तौ नरकयातना ।।१७।। मन्वादिदिवसे जातो देवकीनन्दनो हरिः। तेनासावष्टमी पुण्या पुण्यकोटिफलप्रदा ।।१८।। अस्यां तिथौ वारिमात्रं पितृणां यः प्रयच्छति। गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः ।।१९।। जयन्तीवासरे प्राप्ते यः कुर्याद्देवकीव्रतम्। कपिलागोयुगं दत्तं यामे यामे तु तद्दिने ।।२०।। नष्टो धर्मो हत्ता कीर्त्तिर्जयन्ती विफलीकृतः। पितरःपातिताः स्वर्गाज्जयन्त्यां भोजने कृते ।।२१।। सन्ततिर्न्नैव तस्यास्ते स्वदारेण च शाश्वतम्। न च बृद्धिर्भवेदेव जयन्त्यां भोजने कृते ।।२२।। युगादिवासरे पुण्यं यत्पुण्यं कल्पवासरे। तत्पुण्यं कोटिगुणितं जयन्त्यां समुपोषणे ।।२३।। कोटिव्रतकृतं पुण्यं यच्छते देवकीसुतः। जयन्त्यां पूजितो भक्त्या रात्रौ जागरणे कृते ।।२४।। हरिहरीतिकृतोच्चारे प्राणादपि विमुच्यते। तथापि प्राप्यते मोक्षः कृते कृष्णाष्टमीव्रते ।।२५।। यत्फलं मथुरां गत्वा दृष्टे विश्वान्तसंज्ञके। तत्फलं प्राप्यते विप्र ! जयन्त्यां समुपोषणे ।।२६।। रटन्तीह पुराणानि भूयोभूयो हि नारद ! न

भोक्तव्यं न भोक्तव्यं जयन्त्यां समुपोषणे ।।२७।। अम्बरीषेण शूरेण धुन्धुमारेण धीमता। काकुत्स्थेन दिलीपेन शुकेन च महात्मना ।।२८।। वसुना धर्म्मपुत्रेण नहुषेण ययातिना। गाधिना बिन्दुना चैव नृगेणापि च धीमता ।।२९।। इन्द्रद्युम्नेन वीरेण हरिश्चन्द्रेण धीमता। नकुलेन काशिराजेन गांगेयेन महात्मना ।।३०।। धनञ्जयेन बलिना प्रह्लादेन कलिप्रिय!। मनुना मानवेन्द्रेण अलर्केण शतायुषा ।।३१।। मन्त्रिणा च सुमन्त्रेण जनकेन यशस्विना। शतधन्वना जयन्तेन उत्तरेण सुमन्तुना ।।३२।। संगरेण मरुत्तेन कुशलाभेन धीमता। भगीरथेन रघुणा जह्नुना भरतेन च ।।३३।। कार्त्तवीर्य्यार्ज्जुनेनैव गयेन च महात्मना। एतैराजभिरन्यैश्च धर्म्मज्ञैश्च सुरादिभिः ।।३४।। तुष्ट्यर्थं देवकीसूनोर्ज्जयन्तीसमुपोषिता । व्रतं कृत्वा महीं भुक्त्वा प्राप्य कीर्त्तिं च शाश्वतीम् ।।३५।। जयन्त्यां तूपवासेन विष्णोर्देहेन संस्थिताः। कृष्णजन्माष्टमीं प्राप्य येन भुक्तं द्विजोत्तम! ।।३६।। त्रैलोक्यसंभवं पापं तेन भुक्तं न संशयः। न करोति च या नारी कृष्णजन्माष्टमीव्रतम् ।।३७।। सा मृता जायते व्याली राक्षसी च विशेषतः। कपिलागोहस्रं च यो ददाति दिने दिने ।।३८।। तत्फलं समवाप्नोति जयन्त्यां समुपोषणे । शतकोटिसहस्राणि यो ददाति द्विजोत्तम ! ।।३९।। तत्फलं समवाप्नोति जयन्त्यां समुपोषणे। मातंगानां सहस्रं च यो ददाति द्विजातये ।।४०।। तत्फलं समवाप्नोति जयन्त्यां समुपोषणे । हेमभारसहस्रं च यो ददाति दिने दिने ।।४१।। कुरुक्षेत्रे प्रयच्छन्ति जयन्त्यां समुपोषणे। वापीकूपतड़ागानि देवतायतनानि च ।।४२।। तत्फलं समवाप्नोति जयन्त्यां समुपोषणे । कोटिजन्मकृतं पापं ज्ञानतोऽज्ञानतोपि वा ।।४३।। प्रसादात् देवकीसूनोः पापं हरति वै मुने!। न कुर्वन्ति न जानन्ति कृष्णजन्माष्टमीव्रतम् ।।४४।। धर्म्मवाह्यास्तु ते ज्ञेया दैतेयास्ते नराधमाः। धर्म्ममर्थं च कामं च मोक्षं च मुनिपुङ्गव ।।४५।। ददाति वाञ्छितान् कामान् कृता भाद्रेऽसिताष्टमी। एकेनैवोपवासेन जयन्त्यां च प्रजायते ।।४६।। जन्मनोपार्जितं पापं प्रहरार्द्धेन नश्यति । रात्रौ जागरणे विप्र ! कृते नश्यन्ति देहिनाम् ।।४७।। यत्फलं द्वारकायां तु दृष्टे कृष्णमुखे फलम्। प्रत्यहं पठतां पुंसां यच्छते विजयाष्टमी ।।४८।। कृष्णाष्टमी महापुण्या माहात्म्यं पठते तु यः । सर्वतीर्थफलप्राप्तिं लभते श्रृणुयादपि ।।४९।। न व्याधिर्न्नच रोगो वा न दारिद्र्यं न संक्षयम्। जयन्ती यच्छते पुण्यं पुस्तके लिखिते गृहे ।।५०।। यत्र तिष्ठति माहात्म्यं जयन्तीव्रतसंभवम्। लिखितं तस्य विप्रेन्द्र ! जयन्तीव्रतजं फलम् ।।५१।। न सर्पादिभयं तस्य न चौराग्निभयं तथा। ना दैवं राक्षसं चैव माहात्म्यं पठते हि यः ।।५२।। इह लोके भयं नैव पश्यतां धर्म्ममुत्तमम्। यः श्रृणोति नरो भक्त्या कृष्णजन्माष्टमीव्रतम्।।५३।। जन्माष्टम्यां हरेर्विप्र! कृष्णस्तुष्टः सदा भवेत् ।।

*इतिश्री ब्रह्मपुराणे जयन्तीमाहात्म्यं सम्पूर्णम्। यदक्षरेत्यादि०।।*

# अथ वैष्णवानां श्रीकृष्णपूजा

अथ भाद्रकृष्णाष्टम्यां[1] मध्यरात्रौ वैष्णवाः श्रीकृष्णं सपरिवारं पूजयेयुः। तद्यथा पूर्वोक्तरीत्या श्रीकृष्णं षोड़शोपचारैः संपूज्य बलभद्रं वसुदेवं देवकीं यशोदां नन्दं रोहणीं सुभद्रां रुक्मिणीं सत्यभामां दुर्गाम् ब्रह्माणं ब्रह्माणीं नरसिंहं वासुदेवं गोविन्दं गर्गं गोकुलं गोपं गोपीं षष्ठिकां रेवतीं वैनतेयं सुदर्शनं सरस्वतीं शान्तिं पुष्टिम् अनन्तं कंसं पूतनां यमलार्जुनम् कालियनागम् विश्वरोहिणीं चावाह्य पाद्यादियथासम्भवोपचारैः प्रणवादि नमोन्तचतुर्थ्यन्तपदैः पूजयेत् प्रणमेत्। ततो बहिः प्राङ्गणे पिण्डिकोपरि रोहिणीसहित-चन्द्रं पूर्वोक्तक्रमेण संपूज्य दुग्धेन नारिकेलजलेनार्घन्दद्यात्। ततः पूजास्थानमागत्य अनघं वामनमित्याद्युक्तमन्त्रैः पुष्पाञ्जलिन्दत्वा संप्रार्थ्य कथां शृणुयात्।

## अथकथा

**श्रीयुधिष्ठिर उवाच**—तद्व्रतं कीदृशं देव ! लोकैः सर्वैरनुष्ठितम्। जन्माष्टमीव्रतन्नाम पवित्रं पुरुषोत्तम ।।१।। येन त्वं तुष्टिमायासि लोकान प्रभवाव्यय। एतन्मे भगवन् ! ब्रूहि प्रसादान्मधुसूदन ।।२।। **श्रीकृष्णउवाच**—पार्थ ! तद्दिवसे प्राप्ते दन्तधावनपूर्वकम्। उपवासस्य नियमं गृह्णीयाद् यतमानसः ।।३।। एकेनैवोपवासेन कृतेन कुरुनन्दन। सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ।।४।। उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयो नोपवासन्तु लंघनम् ।।५।। अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर। भोक्ष्येऽहं देवकीपुत्र ! शरणम्मे भवाच्युत ।।६।। ततः स्नात्वा तु मध्याह्ने नद्यादौ विमले जले। देवक्याः शोभनं कुर्य्यात् सगुप्तं सूतिकागृहम् ।।७।। पद्मरागैः पटेनैतैर्मण्डितं चर्चितं शुभैः। रम्यं बन्दनमालाभी रक्षामणि-विभूषितम् ।।८।। सर्वं गोकुलवत्कार्यं गोपीजन-समाकुलम्। घंटामर्द्दलसंगीतं मांगल्यं कलशान्वितम् ।।९।। यवार्द्रस्वस्तिकाब्जाद्यैः शंखवादित्रसंकुलम्। बद्धकारी लोहखड्गैर्दीपच्छागसमन्वितम् ।।१०।। मन्थानवारियूपैश्च भूतिसर्षपवह्निभिः। द्वारि विन्यस्तमुशलं रक्षितं रक्ष-पालकैः ।।११।। षष्ठ्या देव्याश्च तत्रैव विधानं विधिवत्तथा। एवंविधं यथाशक्ति कर्त्तव्यं सूतिकागृहम् ।।१२।। तन्मध्ये प्रतिमा स्थाप्या सा चाप्यष्टविधा स्मृता। काञ्चनी राजती ताम्री पैत्तली मृन्मयी तथा ।।१३।। वार्क्षी मणिमयी चैव वर्णिका लिखिताऽथवा। सर्वलक्षणसंपन्ना पर्यङ्के चार्द्धसुप्तिका ।।१४।। प्रतप्तकांचनाभासा कृता सा तु तपस्विनी। प्रसूता च प्रश्नुता च तत्क्षणाच्च प्रहर्षिता ।।१५।। मां चापि

---

१. अत्राष्टमी चन्द्रोदयव्यापिनी ग्राह्या। उभयदिने तद्व्याप्तौ परैव ग्राह्या।

बालकं सुप्तं पर्यङ्के स्तनपायिनम्। श्रीवत्सवक्षसं देवं नीलोत्पलदल–प्रभम् ॥१६॥ शंखचक्रगदाशार्ङ्ग–वनमालाविभूषितम्। चतुर्भुजं महःपूर्णं स्थापयेतत्र भक्तितः ॥१७॥ यशोदां चापि तत्रैव प्रसूतवरकन्यकाम्। तत्र देवाः ग्रहाः नागाः यक्ष-विद्याधरोरगाः ॥१८॥ प्रणताः पुष्पमालाभिः व्यग्रहस्ताः सुरासुराः। संचरन्त इवाकाशे प्रकारैर्मुदितोदितैः ॥१९॥ वसुदेवोऽपि तत्रैव खड्गचर्मधरः स्थितः। कश्यपो वसुदेवोऽयमदितिश्चापि देवकी ॥२०॥ शेषनागो हली चात्र यशोदा दितिरेव च। नन्दः प्रजापतिर्दक्षो गर्गश्चापि चतुर्मुखः ॥२१॥ एषोऽवतारो राजेन्द्र ! कंसो वै कालनेमिजः। तत्र कंसनियुक्ता ये दानवा विविधायुधाः ॥२२॥ ते च प्राहरिकाः सर्वे सुप्ताः निद्राविमोहिताः। आविष्टो धेनुकः केशी दानवाः शस्त्रपाणयः ॥२३॥ नृत्यन्तोऽप्सरसो हृष्टा गन्धर्वा गीततत्पराः। लेखनीयश्च तत्रैव कालियो यमुनाह्रदे ॥२४॥ नन्दगोपश्च गोपश्च यशोदा च प्रसूतिका। रम्यामेवंविधां कृत्वा देवकीं नवसूतिकाम् ॥२५॥ तां पार्थ पूजयेद् भक्त्वा गन्धपुष्पाक्षतैः फलैः। कूष्माण्डैर्नारिकेलैश्च खर्ज्जूरैर्दाडिमीफलैः ॥२६॥ बीजपूरैः पूगफलैः नारङ्गैः पनसैस्तथा। देशकालोद्भवैर्म्मिष्टैः पुष्पैश्चापि सुगंधिभिः ॥२७॥ ध्यात्वावतारान् प्रागुक्तान् मन्त्रेणानेन पूजयेत्। अदितिर्देवमाता त्वं सर्वपापप्रणाशिनी ॥२८॥ अतस्त्वां पूजयिष्यामि भयभीतो भवस्य च। पूजितासि यथा देवैः प्रसन्ना त्वं वरानने ॥२९॥ तथा मे पूजिता भक्त्या प्रसादं कुरु सुव्रते। यथा पुत्रं प्रियं लब्ध्वा प्राप्ता ते निर्वृतिःपरा॥ तथा मे निर्वृतिं देवि सपुत्रा त्वं ददस्व मे ॥३०॥ गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणानिनादैः, भृङ्गारादर्शकुम्भप्रकरहृतकरैः किन्नरैः सेव्यामाना। पर्य्यङ्के स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते, सा देवी देवमाता जयति सुवदना देवकी कान्तरूपा ॥३१॥ पादावभ्यञ्जयन्ती श्रीर्देवक्याश्चरणान्तिके। निषण्णा पङ्कजे पूज्या नमोदेव्यै श्रिये इति ॥३२॥ अवतारसहस्रं वै कृतं ते मधुसूदन। न संख्यामवताराणां कश्चिज्जानाति वै भुवि ॥३३॥ ब्रह्मा शिवादयो वापि स्वरूपं न विदुस्तव। अतस्त्वां पूजयाम्यद्य मातुरुत्संगशायिनम् ॥३४॥ स्वानामभिश्चतुर्थ्यन्तैः प्रणवादिनमोन्तकैः। पूजयेयुर्द्विजाः सर्व्वे स्त्रीशूद्राः मन्त्रवर्जिताः ॥३५॥ विध्यन्तरमपीच्छन्ति केचिदग्रद्विजोत्तमाः। चन्द्रोदये शशांकाय दद्यादर्घं हरिं स्मरन् ॥३६॥ अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम्। अपराजितं वासुदेवं माधवं मधुसूदनम् ॥३७॥ वराहं पुण्डरीकाक्षं नृसिंहं धरणी-धरम्। दामोदरं पद्मनाभं केशवं गरुड़ध्वजम् ॥३८॥ गोविन्दमच्युतं कृष्णमनन्त-मपराजितम्। अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारणम् ॥३९॥ अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम्। नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ॥४०॥ पीताम्बरधरं नित्यं वनमालाविभूषितम्। श्रीवत्साङ्कं जगत्सेतुं श्रीपतिं श्रीधरं हरिम् ॥४१॥

देवकीगर्भसम्भूतं दैत्यसैन्यविनाशनम्। गृहाणार्घमिदं देव ! गाविन्दाय नमोनमः ।।४२।। योगाय योगेश्वराय योगपतये योगसंभवाय गोविन्दाय नमोनमः ।।४३।। यज्ञाय यज्ञेश्वराय यज्ञपतये सज्ञसम्भवाय गोविन्दाय नमोनमः ।।४४।। विश्वाय विश्वेश्वराय विश्वपतये विश्वसम्भवाय गोविन्दाय नमोनमः ।।४५।। धर्म्माय धर्मेश्वराय धर्मपतये धर्मसम्भवाय गोविन्दाय नमोनमः ।।४६।। क्षीरोदार्णवसम्भूत ! अत्रिनेत्रसमुद्भव !। गृहाणर्घं शशांकेमं रोहिणीसहितो मम ।।४७।। स्थण्डिलेस्थापयेद्देवं शशाङ्कं रोहिणीं तथा । देवकीं वसुदेवं च यशोदां नन्दमेव च ।।४८।। बलभद्रं तथा गोपान् गोपीं गोकुलमेव च। एवं कृते न सन्देहो नरः पापात् प्रमुच्यते ।।४९।। अर्द्धरात्रे वसोर्धारां पातयेत् गुडसर्प्पिषा। ततो वर्द्धापनं षष्ठी नामादिकरणन्तथा ।।५०।। कर्त्तव्यं तत्क्षणाद् रात्रौ प्रभाते नवमीदिने। यथा मम तथा कार्य्यो भगवत्या महोत्सवः ।।५१।। ब्राह्मणान् भोजयेत् भक्त्या तेभ्यो दद्याच्च दक्षिणाम्। हिरण्यं रजतं गावो वासांसि विविधानि च ।।५२।। यद्यदिष्टतमन्तेन कृष्णो मे प्रीयतामिति। यं देवं देवकी देवी बसुदेवादजीजनत् ।।५३।। भौमस्य ब्राह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः। सुजन्मवसुदेवाय गोब्राह्मणहिताय च ।।५४।। शान्तिरस्तु शिवञ्चास्तु इत्युक्त्वा तं विसर्जयेत्। एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम् ।।५५।। वर्षे वर्षे तु मद्भक्तो धर्मार्थी धर्म्मनन्दन! । नरो वा यदि वा नारी यथोक्तं फलमाप्नुयात् ।।५६।।

*।। इति श्रीभविष्योत्तरे कृष्णजन्माष्टमीव्रतकथ समाप्ता ।। यदक्षरेत्यादि० ।।*

# कुशोत्पाटनविधिः

अथ भाद्रामावास्या कुशी, तस्यां कुशोत्पाटनं कुर्य्यात्। तथा च तिथितत्त्वचिन्ताण्यादिमैथिलनिबन्धे–मरीचिः–मासे नभस्यमावास्या तस्यां दर्भोच्चयोमतः।[१] अयातयामास्ते दर्भाः विनियोज्याः पुनः पुनः ।। यद्यपि नभः शब्देन श्रावणोमासः, परञ्च शुक्लादिगणनया भाद्रामावास्या गृह्यते। कुयानयनप्रकारमाह–मार्कण्डेयः–शुचिर्धृत्वा शुचौ देशे स्थित्वा पूर्वोत्तराभिमुखः। ॐ कारेणैव मन्त्रेण कुशान् स्पृष्ट्वा द्विजोत्तमाः ।। ततः "ॐ विरञ्चिना सहोत्पन्न ! परमेष्ठिनिसर्गजः।। दहस्व सर्वपापानि दर्भ ! स्वस्तिकरो भव" ।। इति पठित्वा, "ॐ कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः। कुशाग्रेशंकरं विद्यात्कुशान् मे देहि मेदिनि !" ।। इति भूमिं स्पृष्ट्वा, "ॐ कुशोसि कुशपुत्रोसि ब्रह्मणा निर्म्मितः पुरा। देवपितृहितार्थाय कुशमुत्पाटयाम्यहम्" इत्युच्चार्य हुं फट्कारेण दर्भान् समुद्धरेत् ।।

---

१. अपर्युषिताः। वर्षपर्यन्तं कर्मयोग्याः । अन्यस्याम् अमावस्यायामुत्पाटिताः कुशाः मासपर्यन्तंशुद्धाः। अन्यस्मिन् दिने उत्पाटिताः तद्दिनमात्रं शुद्धाः।

# सोमवारीव्रतविधिः

अस्यां सोमवार-योगश्चेत्तदाऽवैधव्यकामाः स्त्रियः सोमवारीव्रतं कुर्य्युः। योगोऽयं दिनान्तर्गत एव ग्राह्यः। दिने पूजनादि, सन्ध्यानन्तरं च पारणम्।

तथा हि, प्रातः स्नात्वा जलाशये प्राङ्गणे वा साक्षतकुशतिलजलपूर्ण-ताम्रपात्रमादाय, नमो भगवन् सूर्य ! भगवत्यो देवता अद्यादि यावज्जीवं सकलसोमवारान्वितायाममावास्यायां सोमवारी व्रतमहमाचरिष्यामि। इति निवेद्य, अश्वत्थमूले गत्वा गोमयोदकेनोपलिप्य पूजासाग्रीं संपाद्य, पुनः कुशत्र-यतिलजलान्यादाय नमोऽद्यामुकमासीयामुकपक्षीय-सोमवारान्वितायाममावास्यां तिथौ अमुकगोत्राया अमुकी देव्याः यावज्जीवसौभाग्याऽवैधव्यसमस्तभर्तृपुत्र-भ्रातृ-जामातृगतदीर्घायुष्ट्व-सर्वपापक्षय-पुत्रपौत्रादिभर्तृ-सहितयावज्जीवबहुतर-सौख्यावाप्तिपूर्वकसमस्तपरिवार-परिवृतात्म-कर्तृविष्णुलोकावाप्तिकामनया-श्रीविष्णुपूजनाश्वत्थ-पूजनपूर्वकफलादियथा- सम्भवद्रव्यैरष्टोत्तरशतप्रदक्षिणमहं करिष्ये इतिसंकल्प्य, तिलमादाय नमोभगवन् श्रीविष्णो ! इहागच्छ इह तिष्ठ। यवतिलफल-दूर्वागन्धपुष्पजलपूर्णशंखमादाय, नमो व्यक्ताव्यक्तस्वरूपाय सर्गस्थित्यन्तकारिणे। आदिमध्यान्तहीनाय विष्णवे ते नमो नमः। एतानि पाद्यार्घाचमनीयस्नानीय पुनराचमनीयानि नमो भगवते श्री विष्णवे नमः। इदमनु-लेपनम्। एते यवतिलाः। पुनरुक्तमन्त्रेण एतानिपुष्पाणि। इदं माल्यम्। इमे यज्ञोपवीते वृहस्पतिदैवते। इदं पीतवस्त्रं बृहस्पतिदैवतम्। एतानि दूर्वादलानि। एतानि तुलसी पत्राणि। एषधूपः। एषदीपः। एतानि गंधपुष्पंनानाविविधनैवेद्यानि। इदमाचमनीयम्। इदं ताम्बूलम्। एष पुष्पाञ्जलिः, एष कर्पूरदीपः नमो भगवते श्रीविष्णवे नमः इति विष्णुं संपूज्य, पुनरक्षतमादाय, **नमोऽश्वत्थ** इहागच्छ इह तिष्ठ ॥ एतानि पाद्या-दीनि। एषोर्घः। इदमनुलेपनम्। इदमक्षतम्। पुष्पाण्यादाय नमोऽश्वत्थ ! हुतभुग्भाग ! गोविन्दस्य सदा प्रिय ! अशेषं हर मे पापं वृक्षराज ! नमोस्तु ते। एतानि पुष्पाणि। इदं माल्यम्, इमे विल्वपत्रे। इदंदूर्बादलम्। इदं पीतवस्त्रम् ॥ एतानिगन्धपुष्प-धूप दीपताम्बूलनानाविधनैवेद्यानि ॥ इदमाचमनीयम् ॥ एष पुष्पाञ्जलिः ॥ **नमोऽश्वत्थाय** नम, इत्यनेन पूजयेत् ॥

पुनरक्षतेन नमो **धनवति** इहागच्छ इह तिष्ठ ॥ एतानि पाद्यादीनि। एषोर्घः **धनवत्यैनमः** ॥ एवं गन्धाद्युक्तोपचारैः पूजयेत् ॥

एवम् नमो **गुणवति** इहागच्छ इह तिष्ठ ॥ एतानि पाद्यादीनि एषोर्घःनमो गुणवत्यै नमः ॥ एवम् गन्धादिभिः पूजयेत् ॥

नमः **सोमे** इहागच्छ इह तिष्ठ। नमः **सोमायै** नमः इतिपाद्यादिभिरुक्तोपचारैः पूजयेत् ।। **शिवशर्म्म**न्निहागच्छ इह तिष्ठ ।। एतानि पाद्यादीनि ।। एषोर्घः नमः शिवशर्मणे नमः। एवम् गन्धादिभिरुक्तोपचारैरर्च्चयेत् ।।

नमो **देव-स्वामिन्** ! इहागच्छ इह तिष्ठ ।। एतानि पाद्यादीनि नमो **देवस्वामिने** नमः ।। इत्यनेन गन्धाद्युक्तोपचारैः पूजयेत् ।

नमः **रुद्रशर्म्मन्** इहागच्छ इह तिष्ठ । एतानि पाद्यादीनि नमो **रुद्रशर्म्मणे** नमः । एवं गन्धादिभिः पूजयेत्।

नमः **काञ्चीपुरि** ! इहागच्छ इह तिष्ठ ।। एतानि पाद्यादीनि नमः **काञ्चीपुर्य्यै** नमः इति गंधादिभिरर्च्चयेत् ।

एतानि सदधि-पृथुकान्नादीनि सपरिवाराय भगवते श्रीकृष्णाय नमः ।। ततो दण्डवत्प्रणम्य संप्रार्थ्य, ततो नानाफलादिद्रव्यैरष्टोत्तरशतं प्रदक्षिणं कुर्य्यात् ।। तद्यथा दक्षहस्तेन फलादिकमादाय नमः अश्वत्थ ! हुतभुग्भाग ! गोविन्दस्य सदाप्रिय । अशेषं हर मे पापं ! वृक्षराज ! नमोऽस्तु ते ।। इत्यनेन प्रदक्षिणीकृत्य फलादीनि समर्प्य प्रणम्य कथां श्रुत्वा संप्रार्थ्य, नमो भगवन्श्रीविष्णो ! पूजितोसि प्रसीद क्षमस्व स्वस्थानङ्गच्छ। नमोऽश्वत्थपूजितोसि प्रसीद क्षमस्व स्वस्थानङ्गच्छ। एवं शिवशर्म्मन्, देवस्वामिन्, रुद्रशर्मन्, धनवति, गुणवति, सोमे, काञ्चीपुरि, सर्वाः देवताः पूजिताःस्थ क्षमध्वम् स्वस्थानं गच्छत इति सर्वान् विसृज्य, प्रदक्षिणे समर्पितफलादीनि ब्राह्मणेभ्यो दद्यात् ।। ततो दक्षिणार्थं द्रव्यमादाय, नमोऽद्य कृतैतत्सोमवारीव्रत-तत्कथाश्रवणकर्मप्रतिष्ठार्थमेतावद्द्रव्य-मूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ।। इत्युत्सृज्य, ब्राह्मणाय प्रतिपादयेत्। यथाशक्ति ब्राह्मणान् भोजयित्वा स्वयं हविष्यान्नं भुञ्जीत ।।

## अथकथा

शरतल्पगतं भीष्ममुपगम्य युधिष्ठिरः। कृतप्रणामो धर्म्मात्मा इदं वचनमब्रवीत् ।।१।। **युधिष्ठिर उवाच**–नष्टेषु कुरुमुख्येषु भीमसेनेन कोपिना। तथा परेषु भूतेषु हतेषु युधि जिष्णुना ।।२।। दुर्य्योधनापराधेन जातोस्माकं कुलक्षयः। न सन्ति भुवि भूपाला बालवृद्धादृते क्वचित् ।।३।। अवशिष्टा वयं पञ्च परं भरतसत्तम। एकातपत्रमपि मे भीष्म राज्यं न रोचते ।।४।। अश्वत्थामास्त्रदग्धो सावुत्तरागर्भसंभवः । अतो मे द्विगुणं दुःखं पिण्डविच्छेददर्शनात् ।।५।। किं करोमि क्व गच्छामि पितामह वदस्व तत्। येन संपद्यते तात संततिश्चिरजीविनी ।।६।। **भीष्म उवाच**– शृणु राजन् प्रवक्ष्यामि व्रतराजं द्विजोत्तम। यस्य स्मरणमात्रेण

सन्ततिश्चिरजीविनी ।।७।। अमावास्या यदा पार्थ सोमवारेण संयुता। तस्यामश्वत्थमूले तु पूजयित्वा जनार्दनम् ।।८।। अष्टोत्तरशतं कुर्य्यात् तस्मिन् वृक्षे प्रदक्षिणम्। तावत् संख्यान्युपादाय रत्नधातुफलानि च ।।९।। व्रतराजमिदं राजन् विष्णोः प्रीतिकरं परम्। या श्रृणोति कथां राजन् जीवगर्भा भवेत् सदा ।।१०।। भविष्यति गुणी पुत्रस्त्रिषु लोकेषु विश्रुतः। श्रुत्वा पैतामहं वाक्यं प्रत्युवाच युधिष्ठिरः ।।११।। **युधिष्ठिर उवाच**—एतत्सर्वं परं तात विस्तरेण प्रकाशय। केन प्रकाशितं लोके केनेदं विहितं पुरा ।।१२।। **भीष्म उवाच**—अस्ति सर्वत्र विख्याता काञ्चीनाम महापुरी। ब्राह्मणक्षत्रविट्—शूद्रैः स्वकर्मनिरतैः सदा ।।१३।। सुवेशैः नागरजनैः नारीभिस्तु विशेषतः तस्मिन् राज्ये जनपदे न वैधव्यं न दुःखिता ।।१४।। तत्र कश्चिद् द्विजश्चाभूद्देवस्वामीति विश्रुतः। तस्य भार्याभवच्छुभ्रा नाम्ना धनवती तथा ।।१५।। यथार्थनामधेया सा सावित्री प्रतिमा भुवि। तस्यां स जनयामास सप्त पुत्रान् सुखावहान् ।।१६।। एकां दुहितरं रम्यां नाम्ना गुणवतीं शुभाम्। कृतदाराः ततः पुत्राः विचरन्ति यथासुखम् ।।१७।। कन्या कुमारी सैवासीदनुरूपप्रियार्थिनी। अत्रान्तरे द्विजः कश्चिद् भिक्षार्थं समुपागतः ।।१८।। दीप्यमानः स्वतेजोभिर्मूर्तिमानिव पावकः। पुरर्द्वारं समागत्य प्रयुक्ताः तेन चाशिषः ।।१९।। देवस्वामिस्नुषाः सद्यः समुत्थाय च सत्वराः। अवैधव्याशिषः प्रादात् ताभ्यः सौभाग्यसंयुतः ।।२०।। ततो गुणवती मात्रा प्रेषिता सा हि भिक्षवे। विप्राय भिक्षां प्रददौ कृत्वा पादाभिवन्दनम् ।।२१।। आशिषः प्रददौ तस्यै भव धर्मवती सदा। ता वै गुणवती श्रुत्वा पुनः प्रत्याययौ गृहम् ।।२२।। मात्रे निवेदयामास आशिषःतन्नियोजितराः। श्रुत्वा धनवती पुत्रीं करे धृत्वा समाययौ ।।२३।। प्रणामं कारयामास पुनस्तस्मै द्विजातये। तथैवाशिषमुच्चार्य्य ददौ तस्यै पुनः पुनः ।।२४।। श्रुत्वाशिषं धनवती तं विप्रं प्रत्युवाच ह। **धनवत्युवाच**—प्रसीद भगवन् विप्र वचनं मेऽवधाराय। स्नुषायाः प्रणताया मे त्वया दत्ता वराशिषः ।।२५।। अवैधव्यकराः पुत्र—सुखसौभाग्यदायिकाः। सुतायाः प्रणतायास्तु विपरीतवरास्त्वया ।।२६।। भद्रे ! धर्म्मवती भूयादित्युदीर्य्य पुनः पुनः। आशीः प्रदत्ता विप्रर्षे कारणं वद सत्वरम् ।।२७।। **विप्रउवाच**—धन्यासि त्वं धनवति श्रूयतां भवितव्यता। अस्यास्तु दत्ता योग्या मे आशीर्वै दुहितुस्तव ।।२८।। इयं सप्तपदीमध्ये वैधव्यं समवाप्स्यति। धर्म्माचरणमत्यर्थं कर्त्तव्यं परमेनया ।।२९।। मयाशिषः प्रदत्ता वै सर्वधर्म्मवती भव। एवं धनवती श्रुत्वा चिन्ताकुलितचेतसा ।।३०।। उवाच वचनं दीनं प्रणिपत्य मुहुर्म्मुहः। **धनवत्युवाच**—किं कारणं द्विजश्रेष्ठ यतो वैधव्यमाप्स्यति ।।३१।। इयं सप्तपदीमध्ये तत्र कारणमुच्यताम् ।। **द्विजउवाच**—अनया पूर्वजनुषि सोमवारान्विता कुहूः ।।३२।। संकल्प्य सोमया सार्द्धमालस्यात्र पुनःकृता। हेलया यत् कृतं कर्म वासुदेवस्य पूजनम् ।।३३।।

**अवाप्य** सुमहद्राज्यं सर्वसन्तानवृद्धये। इयन्तु मूढ़धीस्तेन कर्मणा यमसादनम् ।।३४।। कृतसंकल्पमात्रेण प्रभावेण भविष्यति। सा याता पापभोगार्थं विधवात्वमवाप्स्यति ।।३५।। **धनवत्युवाच**–अपायमपि जानासि उपायमपि वेत्स्यसि। वैधव्यभङ्गो येन स्यात्तन्निवेदय मा चिरम् ।।३६।। **द्विजउवाच**–अस्या वैवाहिकं कर्म यदा भवति शोभने। सोमा ददाति चेत् सत्यं तदा वैधव्यभञ्जनम् ।।३७।। **धनवत्युवाच**–काऽसौ सोमा त्वया प्रोक्ता का जातिः का च संस्थितिः । तन्मे वद महाभाग न कालो विस्तरोस्ति मे ।।३८।। **द्विजउवाच**–सोमा सा रजकी जातिः स्थितिस्तस्यास्तु सिंहले। सा चेदायाति ते वेश्म ततो वैधव्यभञ्जनम् ।।३९।। इत्युक्त्वा ब्राह्मणोऽन्यत्र गतो भिक्षाव्रतेच्छया। धनवत्यपि पुत्रेभ्य उवाच वचनं तथा ।।४०।। ददाति सोमा चेत्सत्यं तदा वैधव्यभञ्जनम्। तस्मादस्ति पितुर्भक्ति–र्मातुर्वचनगौरवम् ।।४१।। या हि स्वस्रा च सहितः सोमानयनहेतवे। **पुत्रा उचुः**–कुत्र सा वसते सोमा का जातिः केन संगता ।।४२।। नो जानीमो गृहं तस्याः मार्गं यत्र च विद्यते। कथं तत्र च गन्तव्यं मातस्तद्वेश्म कीदृशम् ।।४३।। **धनवत्युवाच**–जात्या सा रजकी सोमा सर्वलक्षणसंयुता। रमते सिंहलद्वीपे पुत्र गच्छानयस्व ताम् ।।४४।। सोमा प्रसिद्धा रजकी निवासः सिंहले द्विपे। तां समानय शीघ्रं त्वं संप्रसाद्य यथाबलम् ।।४५।। **पुत्रा उचुः**–कथं तत्र गमिष्यामो ह्यन्तरोस्ति महार्णवः। पुत्रीस्नेहेन पुत्रान् नो हन्तुमिच्छसि दुर्भगे ।।४६।। **देवस्वाम्युवाच**–अपुत्रः सप्तभिः पुत्रैरहं यास्यामि सिंहलम् ।। सोमां तामानयिष्यामि पुत्र्या वैधव्यभञ्जिनीम् ।।४७।। **शिवशर्मोवाच**–वयं तत्र गमिष्यामो भगिन्या जीवनप्रदाम्। सोमां तामानयिष्यामः सत्यमेतद्धि सुव्रते ।।४८।। इत्युक्त्वा भगिनीयुक्तो गतः सोमान्तिकं प्रति। कालेन महता मार्गे बहून् क्लेशान् सहञ्छनैः ।।४९।। दृष्ट्वा महार्णवं तत्र विस्मयं परमं गतः। कथं तत्र गमिष्यामि तीर्त्वा घोरं महार्णवम् ।।५०।। इति चिन्ताकुलस्तत्र वटमूले तु तस्थिवान्। तस्मिन् दिने निराहारो ध्यायन्नासीज्जनार्दनम् ।।५१।। ततो डिम्भार्थमादाय सायं मांसं समागतः। शवकाय ददौ मांसं न गृह्णाति क्षुधातुरः ।।५२।। **शावक उवाच**–वृक्षमूले पितः कश्चिद् ब्राह्मणोस्ति क्षुधातुरः। कथं तस्मिन्नभुक्ते तु भोक्ष्येऽहमामिषं पितः ।।५३।। इत्युक्तो गृध्रराजस्तु फलान्यादाय सत्वरम्। ब्राह्मणाय ददौ भुङ्क्ष्व तारयामीत्युवाच ह ।।५४।। ततो भुक्त्वा च भगिनीयुक्तो गृध्रेण तारितः। तत्र गत्वा त्वसौ विप्रो भगिन्या सार्द्धमन्वहम् ।।५५।। निवासं मार्जितं तस्याः प्रातरुत्थाय नीचवत्। गते बहुतरे काले दृष्ट्वा सोमा समागता ।।५६।। केनेदं क्रियते नित्यं मम गेहस्य मार्जनम्। एकदा तत्परीक्षार्थं निभृतं सा स्थिता निशि ।।५७।। ददर्श ब्राह्मणसुतौ मार्जयन्तौ गृहाङ्गणम्। लिम्पन्तौ प्राङ्गणं प्रातः सा भ्रात्रा सहिता किल ।।५८।। पप्रच्छ सोमा

साश्चर्य्यं कौ युवां कथ्यतामिति। ऊचतुस्तां ततः पृष्टावावां ब्राह्मणदारकौ ॥५९॥ मासान् द्वादश युष्माकं कुर्वः प्राङ्गणमार्ज्जनम्। **सोमोवाच**–दग्धास्मि खलु नष्टास्मि ब्राह्मणौ गृहमार्जकौ ॥६०॥ कां गतिं हन्त यास्यामि पापादस्मादसंशयम्। पापजातिरहं ख्याता रजकी सर्वतो द्विज ! ॥६१॥ कथं त्वं ब्राह्मणो भूक्त्वा विरुद्धं मे चिकीर्षसि। **ब्राह्मणउवाच**–एषा गुणवती नाम स्वसा मम सुलोचना ॥६२॥ इयं सप्तपदीमध्ये वैधव्यं समवाप्स्यति। तव सान्निध्यमात्रेण भवेद् वैधव्यभंजनम् ॥६३॥ इत्युक्तं ब्राह्मणेनास्यै भिक्षुणामिततेजसा। अतो नित्यं सह स्वस्रा दासकर्म करोमि ते ॥६४॥ **सोमोवाच**–अतः परं न कर्त्तव्यं यास्यामि तव सादनम्। इत्युक्त्वा गृहमागत्य स्नुषाभ्यः प्रत्युवाच ह ॥६५॥ यः कश्चिन् मम राज्येस्मिन् म्रियते मानवः क्वचित्। तथैवावेक्षणीयोऽसौ यावदागम्यते मया ॥६६॥ कस्यचिद्वचनात् कोपि न दग्धव्यः कथंचन। इत्युक्त्वा सा स्नुषाभ्यस्तु ययौ काञ्चीपुरीं प्रति ॥६७॥ स्वयमाकाशमार्गेण प्रततार महार्णवम्। प्राप्ता काञ्चीपुरीं तां तु निमेषात् स्वप्रभावतः ॥६८॥ सोमां दृष्ट्वा धनवती ततः पूजामकल्पयत्। तत्रान्तरे शिवस्वामी मातुरादेशतत्परः ॥६९॥ स्वसुश्च सदृशं रम्यं वरञ्चावरयत्तदा। ब्राह्मणं रुद्रशर्म्माणं चन्द्रवत् प्रियदर्शनम् ॥७०॥ ततः सा रजकी सोमा वैवाहिकमकल्पयत्। शुभे लग्ने सुनक्षत्रे देवस्वामी तु कन्यकाम् ॥७१॥ ददौ तस्मै गुणवतीं गुणिने रुद्रशर्म्मणे। ततो विवाहकर्म्मान्ते हूयमाने हुताशने ॥७२॥ ततः सप्तपदीं कुर्व्वन् रुद्रशर्मा मृतस्तदा। रुरुदुर्बान्धवाः सर्वे स्थिता सोमा निराकुला ॥७३॥ आक्रन्दः सुमहानासीत् लोकानां तत्र पश्यताम्। ततो धनवती प्राह सोमां दैन्यसमन्विता ॥७४॥ सोमे किं क्रियतामत्र ब्राह्मणोऽयं मृतः स्वयम्। ततः सोमा निजं पुण्यं द्विजमृत्युविनाशनम् ॥७५॥ संकल्प्य जीवयामास तं द्विजं राजसत्तमम्। रुद्रशर्म्मा द्विजस्तत्र व्रतराजप्रभावतः ॥७६॥ उन्मील्य नेत्रे उज्जृम्भ्य सुप्तप्रायादिवोत्थितः। एवं निर्वर्त्य विधिवत् विवाहं मुदिताभवत् ॥७७॥ सम्पूज्य सोमां विधिवद्धनज्ञानानुसारतः। व्रतराजं ततश्चक्रुः सर्वे तद्गृहवासिनः ॥७८॥ आमंत्र्यातो धनवतीं सोमा सा प्रययौ गृहम्। एकमाश्वास्य रजकी जीवयित्वा द्विजोत्त्मम् ॥७९॥ जगाम हर्षसंपूर्णा पश्याश्चर्यं युधिष्ठिर । अत्रान्तरे गृहे तस्याः प्रथमस्तनयो मृतः ॥८०॥ पुनः स्वामी मृतस्तस्याः जामाता तदनन्तरम्। तथैव रक्षिताः सर्वे स्नुषाभिस्तु प्रयत्नतः ॥८१॥ श्रीविहीनं पुनर्गेहं सर्वे च विलयं गताः। आगच्छन्त्यास्तदा तस्यां सोमवारान्विता पथि ॥८२॥ अमावास्या बभूवाथ मृतसंजीविनी खलु। सा ददर्श ततो यान्तीं वृद्धां काञ्चित् स्त्रियं पथि ॥८३॥ मूलभारभराक्रान्ता प्राह सातीव दुःखिता। अवतारय मे पुत्रि ! मूलभारं शिरःस्थितम् ॥८४॥ एतद्भारभराक्रान्ता जीवितुं न सहाम्यहम्। **सोमोवाच**–अमावास्याद्य हे वृद्धे ! सोमवारेण संयुता ॥८५॥

व्रतं श्रीवासुदेवस्य नियमेन मया कृतम्। किं करोमि कृते तस्मिन् मूलकं न स्पृशाम्यहम् ।।८६।। विहस्य वृद्धा तां प्राह किं व्रतेन कृतेन ते। परप्राणांस्तु रक्षन्ती स्वीयं त्यक्त्वा बहिर्गता ।।८७।। **सोमोवाच**—मा मैवं देवि ! वक्तव्यं करुणाकोमलो हरिः। यो दुःखी परदुःखेन तस्य नूनं स दुःखहा ।।८८।। पुनर्ददर्श यान्ती सा तूलभारवतीं स्त्रियम्। तयाप्युक्तं तथैवाह तूलकं न स्पृशाम्यहम् ।।८९।। तथा चैवोपहसिता सा सस्मार जनार्दनम्। ततो विल्वदलं प्राप्य नदीतीरभवं पथि ।।९०।। स्नात्वा विष्णुं समभ्यर्च्य शर्करराभिः प्रदक्षिणम्। सा चकार महाभागा तथैवाष्टोत्तरं शतम् ।।९१।। **भीष्म उवाच**—यथा प्रदक्षिणं राजन् कृतं शर्कररहस्तया। तथा ते जीविताः सर्वे पतिजामातृपुत्रकाः ।।९२।। सततञ्च श्रिया युक्तं तद्गृहं सुविशेषतः। अथायाता महाभागा सोमा स्वभवनं प्रति ।।९३।। जीवितं प्रेक्ष्य भर्त्तारं पुत्रं जामातरं तथा। अतुलं सुखमासाद्य जगाम कृतकृत्यताम् ।।९४।। प्रणिपत्य स्नुषाः सर्वाः पप्रच्छुस्तां यशस्विनीम्। मृतास्ते निश्चितं देवि ! पतिजामातृपुत्रकाः ।।९५।। जीविताश्च पुनः कस्मादाश्चर्य्यं देवि ! तद्वद। **सोमोवाच**—गुणवत्यै मया दत्तं व्रतराजस्य पुण्यकम् ।।९६।। मृतास्तेन विपाकेन पतिजामातृपुत्रकाः। मूलकं न मया स्पृष्टं तूलकं न मया पथि ।।९७।। व्रतं च विहितं तेन पुण्येननैव चिरायुषः। क्रियतां भवतीभिश्च व्रतराजो विधानतः ।।९८।। न भविष्यति वैधव्यं सौभाग्यमतुलं यथा। यदि कश्चित् प्रमादेन विपद्येत यदा तदा ।।९९।। सोपि व्रतप्रभावेण चिरायुः स्यान्न संशयः। **भीष्मउवाच**—स्नुषास्तु कारयामास तदा सोमा-व्रतेश्वरम् ।।१००।। भुक्त्वा भोगान् बहूँस्तत्र पुत्रपौत्रादिभिः सह। सर्वैः परिवृता तैस्तु विष्णुलोकमवाप सा ।।१०१।। इत्येतत् कथितं राजन् ! विष्णुभक्ताय त सदा। यथोक्तं व्रतमाहात्म्यं व्रतं वैधव्यनाशनम् ।।१०२।। सोमाव्रतप्रभावेण जातं वैधव्यभञ्जनम्। **युधिष्ठर उवाच**—अस्य त्वं व्रतराजस्य विधिं वद सुविस्तरम् ।।१०३।। कर्त्तव्यं केन कौरव्य ! नारीभिः पुरुषेण वा। **भीष्मउवाच**—अमावास्यातिथिः पार्थ ! या स्यात् सोमसमन्विता ।।१०४।। तदा पुण्यतमः कालो देवानामपि दुर्ल्लभः। प्रातरुत्थाय नारीभिः स्नानं कार्य्यं जलाशये ।।१०५।। स्नात्वा मौनेन कौशेयं परिधाय सितं नवम्। गत्वा चाश्वत्थवृक्षस्य समीपं कुरुनन्दन ।।१०६।। शालग्राम-शिलायां तु पूजा कार्य्या प्रयत्नतः। व्यक्ताव्यक्तस्वरूपाय सृष्टिस्थित्यन्तकारिणे ।।१०७।। आदिमध्यान्तहीनाय विष्णवे ते नमो नमः। एवं सम्पूज्य देवेशं पीतवस्त्रैर्य्यवैः फलैः ।।१०८।। कुसुमै-र्विविधैश्चैव भक्ष्यभोज्यैर्य्यथाविधि। अश्वत्थपूजनं कार्यं प्रोक्तमन्त्रेण पाण्डव ।।१०९।। एवं पूजाविधिं कृत्वा मन्त्रेणानेन पाण्डव। ततः प्रदक्षिणं कार्य्यं यावदष्टोत्तरं शतम् ।।११०।। मौक्तिकैः काञ्चनैः रौप्यै-र्हीरकैर्मणिभिस्तथा। कांस्यपात्रैस्तथा ताम्रैः भक्ष्यभोज्यैःपृथक् पृथक् ।।१११।।

तद्वस्तु पार्थ ! विप्रेभ्य: पुरन्ध्रीभ्यश्च दीयताम्। विप्रेभ्यश्च यथाशक्ति दक्षिणां भोजनं तथा ।।११२।। निरामिषं ततो भुक्त्वा सकृन्नारीगणै: सह। एवं कृत्वा व्रतं दिव्यं सर्वेषामतिदुर्ल्लभम् ।।११३।। **भीष्मउवाच**–एष ते कथितो राजन् ! व्रतरात-विधिर्मया। द्रौपदीञ्च सुभद्राञ्च कारयस्व तथोत्तराम् ।।११४।। उत्तरागर्भसंस्थस्तु लप्स्यते जीवितं चिरात्। **युधिष्ठिरउवाच**–या स्वल्पविभवा नारी काञ्च-नाद्यैर्विना कथम् ।।११५।। करिष्यति व्रतं सा वै कथं पूर्णं लभेत्फलम्। **भीष्मउवाच**–फलपुष्पैस्तथा भक्ष्यैर्वस्त्रैराभरणादिभि: ।।११६।। कुर्य्यात् प्रदक्षिणावर्त्तं सापि पूर्णं लभेत् फलम्। राजन् ! सा रजकी जात्या शौचाचारविवर्जिता ।।११७।। तादृक्प्रभावा संजाता नारायणप्रभावत:। किं पुनर्ब्राह्मणी राज्ञी वैश्या वा यदि जायते ।।११८।। व्रतराजमिदं करोति या क्रियमाणं यदि वा विलोकयेत्। निखिलं परिहार्य्य पातकं, नियतं विष्णुपुरं निवासमेति ।।११९।।

*।। इति भविष्योत्तरे सोमवारी-व्रतकथा समाप्ता ।।*

# हरितालिका पूजा

अथ भाद्र शुक्ल तृतीयायां प्रदोषेऽवैधव्यकामा:स्त्रियो हरितालीव्रतं कुर्य्यु:[1]।

प्रात: स्नात्वा सतिलकुशताम्रपात्रार्घमादाय नमो भगवन् सूर्य्य भगवत्यो देवता अद्यादिचतुर्दशवर्षाणि यावत् प्रतिभाद्रशुक्लतृतीयायां हरितालीव्रतमहा माचरिष्यामींतिनिवेद्य, तोरणादिकं रचयित्वा चन्दानादिसुगन्धिलिप्तस्थले मृन्मयीं चतुर्भुजां गौरीप्रतिमां वृषभस्थितपञ्चवक्त्रशिवप्रतिमाञ्च स्थापयित्वा, नित्यगौरीपूजां विधाय कुशत्रयजिलजलान्यादाय "नमोऽस्यां रात्रौ भद्रामासीयशुक्लपक्षीयतृतीयायां तिथौ अमुकगोत्राया अमुकीदेव्या मम दीर्घायुष्ट्व-पुत्रपौत्रादिचिरजीवित्व-जन्मजन्मान्तरार्ज्जित-सकल-पापक्षयपूर्व्वक श्रीगौरीप्रीतिकामेऽद्यादिचतुर्दशवर्षाणि यावत् सकलभाद्रशुक्लतृतीयायां हरितालीव्रतमहं करिष्ये" इति संकल्प्य, नम: शिवोसि, नमो गौर्य्यसीति सत्रिकुशहस्तेन नाम कृत्वा आँ ह्रीं क्रौं यंरंलंवंशंषंसंहंस: अनयो: प्राणा इहप्राणा:। आँ ह्रीं क्रौं यंरंलंवंशंषंसंहंस: अनयो: सर्व्वेन्द्रियाणि ।। आँ ह्रीं क्रौं यंरंलंवंशंषंसंहंस: अनयोर्वाङ्मनश्चक्षु:श्रोत्रघ्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।। अनेन प्राणप्रतिष्ठां कृत्वा षोडशोपचारै: पूजयेत् । पुष्पमेकं गृहीत्वा पठेत्–ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं, रत्नाकल्पोज्ज्वलाङ्गं-परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानम् विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ।। इतिध्यात्वा नम: शिवायेति

१. तृतीयेयं परयुतैव ग्राह्या, प्रदोषे तृतीयाभावेऽपि न क्षति:।

मन्त्रेण पाद्यादिषोडशोपचारैः पूजयेत् ।। ततः पुष्पं गृहीत्वा, भास्वज्जपाप्रसूनाभां शश्वत्-सुस्थिरयौवनाम्। शंखचक्रगदापद्मवनमालाविभूषिताम् ।। सिंहोपरि समासीनां भास्करारुणमंशुकम्। दधानां पुरतः संस्थैर्देवदैत्यादिसंस्तुताम् ।। इतिध्यात्वा ।। नमः शिवायै शिवरूपायै मङ्गलायै महेश्वरि । शिवे सर्वार्थदे देवि शिवरूपे नमोस्तु ते ।। एतानि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि नमो गौर्य्यै नमः इति। ततः पुष्पाण्यादाय, नमः शिवरूपे नमस्तुभ्यं शिवायै सततं नमः। नमस्ते शिवरूपिण्यै जगद्धात्र्यै नमोनमः ।। एतानि पुष्पाणि नमो गौर्य्यै नमः ।। एवं प्रत्युपचारमिमं मन्त्रमुच्चार्य्य दद्यात् ।। एतानि दूर्वादलानि ।। एतानि बिल्वपत्राणि, इदं सान्तरालरक्तवस्त्रम् ।। इदं सिन्दूरम् ।। इदमलङ्करणम्। एतानि गन्धपुष्प-धूपदीपताम्बूलनानाविध भक्ष्यादिनैवेद्यानि ।। इदमाचमनीयम्.एष पुष्पाञ्जलिः श्री गौर्यै नमः ।। दण्डवत्प्रणम्य प्रार्थयेदनेन सर्व्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके। संसारवृत्तिविच्छेदे त्राहि मां सिंहवाहिनि ।। मया ध्यानेन कामेन पूजितासि महेश्वरि। राज्यं मे देहि सौभाग्यं प्रसन्ना भव पार्व्वति।। इति सम्प्रार्थ्य कथां श्रृणुयात्।

## अथ हरितालीव्रतकथा

मन्दारमालालुलितालकायै कपालमालाङ्कितशेखराय। दिव्याम्बरायै च दिगम्बराय नमश्शिवायै च नमः शिवाय ।। कैलाशशिखरे रम्ये गौरी पृच्छति शङ्करम्। गुह्याद् गुह्यतरं गुह्यं कथयस्व महेश्वर ।।१।। सर्वेषां धर्म्मसर्व्वस्वमनायासेन यत्फलम्। प्रसन्नोसि जगन्नाथ सत्यं ब्रूहि ममाग्रतः ।।२।। केन चासि मया प्राप्तो दानेन तपसाऽपि वा। अनादिमध्यनिधनो भर्त्ता त्वं जगतः प्रभुः ।।३।। **ईश्वरउवाच**-शृणुष्व कथयिष्ययामि तवाग्रे व्रतमुत्तमम्। गुह्यं ममैतत् सर्वस्वं कथयिष्यामि ते प्रिये ! ।।४।। यथा चोडुगणे चन्द्रो ग्रहाणां भानुरेव च। वर्णानां च यथा विप्रो देवानां विष्णुरुत्तमः ।।५।। नदीनाञ्च यथा गङ्गा पुराणानाञ्च भारतम्। वेदानाञ्च यथा साम इन्द्रियाणां यथा मनः ।।६।। पुराणं वेदसर्वस्वमागमेन यथोदितम्। श्रद्धया त्वं शृणुष्वेदं यथा कृतं पुरा व्रतम् ।।७।। भाद्रे मासि सिते पक्षे तृतीया हस्तसंयुता। तदाचरणमात्रेण सर्वपापैः प्रमुच्यते ।।८।। शृणु देवि त्वया पूर्वमजानन्त्या कृतं व्रतम्। तत्सर्वं कथयिष्यामि यथा दृष्टं हिमाचले ।।९।। **पार्वत्युवाच**–कथं कृतं मया पूर्वं व्रतानां व्रतमुत्तमम्। तत्सर्वं श्रोतुमिच्छामि त्वत्सकाशान्महेश्वर ।।१०।। **ईश्वरउवाच**–अस्ति देवि महादिव्यो हिमवान् नग उत्तमः। नानावृक्षवरै रम्यो नानाशृङ्गादिचित्रितः ।।११।। यत्र देवाः सगन्धर्व्वाः सिद्धचारणगुह्यकाः। विचरन्ति यथाहृष्टं गन्धर्वा गानतत्पराः ।।१२।। स्फाटिकैः काञ्चनैः शृङ्गैर्मणिवैदूर्य्यभूषितैः। शिखित्रयैरिवाकाशे हिमवानेव राजते ।।१३।।

हिमानी रम्यशृङ्गाग्रे गङ्गापातविचित्रित:। अप्सरोनृत्यसंघातै: शोभते यो नगेश्वर: ।।१४।। तत्र त्वं पार्वती बाला कुर्वन्ती सुमहत्तप:। अब्दानां तु सहस्रं वै धूमपानमधोमुखी ।।१५।। लक्षाब्दं पक्कमर्णाशा त्यक्तपर्णा तत: परम्। दृष्टं तातेन तत्कष्टं चिन्तया दु:खितोऽभवत् ।।१६।। कस्मै देया मया कन्या इति चिन्तापरोऽभवत्। तस्यैवं चिन्तयानस्य मुनिर्नारद आययौ ।।१७।। अर्घ्यादिभिस्तमभ्यर्च्य हिमवानभ्यभाषत। **हिमवानुवाच**—किमर्थमागतं तेऽद्य कथ्यतां मुनिसत्तम ।।१८।। **नारदउवाच**—शृणु देव यथाज्ञा मे, विष्णुना प्रेषिता: वयम्। योग्यं योग्याय दातव्यं, कन्या रत्नमिदं त्वया ।।१९।। वासुदेवसमो नास्ति ब्रह्मविष्णुशिवादिषु। चिन्ता न कार्य्या कन्येयं दीयतां मम साम्प्रतम् ।।२०।। **हिमवानुवाच**—वासुदेवसमो देव: कन्यां प्रार्थयते यदि। तदा मया प्रदातव्या त्वदागमनगौरवात् ।।२१।। तच्छ्रुत्वा स ययौ शीघ्रं नारद: केशवं प्रति। उपगम्य मुनिर्देवं शंखचक्रगदाधरम् ।।२२।। कृताञ्जलिपुटो भूत्वा मुनीन्द्रोप्यभ्यभाषत। देव सिद्धं महत्कार्यं वैवाहिकपरो भव ।।२३।। हिमवानब्रवीत्तद्यत् तत्सर्वं श्रूयतां वच:। इयं कन्या मया दत्ता देवेस्मिन् गरुड़ध्वजे ।।२४।। अथ श्रुत्वा मुनेर्वाक्यं पार्वतीदु:खिताभवत्। दु:खभावातिसंतप्तां सखी पप्रच्छ तां निशि ।।२५।। **सख्युवाच**—देवि त्वं दु:खिता कस्मात् सत्यं मे ब्रूहि पार्वति । भद्रायासेन भद्रं ते करिष्यामि न संशय: ।।२६।। पार्वत्युवाच—मया यच्चिन्तितं कर्तुं धात्रा तत् कृतमन्यथा। तस्माद्देहपरित्यागं करिष्यामि न संशय: ।।२७।। पार्वत्यास्तद्वच: श्रुत्वा सखी वचनमब्रवीत्। **सख्युवाच**—न जानाति पिता यत्र व्रज त्वं तद्वनं महत् ।।२८।। इत्येवं सम्मतं कृत्वा गत्वा शीघ्रं महद्वनम्। पिताऽवलोकयामास हिमवांस्तां गृहे गृहे ।।२९।। केन नीता च मे पुत्री देवदानवराक्षसै:। सत्यं कृतं मया पूर्वं किं दास्ये गरुड़ध्वजे ।।३०।। इत्येवं चिन्तया गौरि मूर्छित: पतितो भुवि। हा हां कृत्वा ततो लोका अभ्यधावत तं प्रति ।।३१।। मूर्छां प्राप्त: त्वया कस्मात् कथयस्व विशेषत:। **हिमवानुवाच**—केन दुष्टेन चेष्टम्मे कन्यारत्नं हृतं मम ।।३२।। दष्टा वा कालसर्प्पेण सिंहव्याघ्रेण वा हता। न जाने क्व गता पुत्री केन दुष्टेन वा हृता ।।३३।। गम्यते शेकसंतप्तो बातेनैव यथा तरु: । त्वं गतासि वनं घोरं निर्जनं भयबर्धनम् ।।३४।। सिंहव्याघ्रभुजंगेन क्रोष्टृश्वानमृगाकुलम्। तस्मिन् घोरे वने तूर्णं सखीभि: सह संस्थिता ।।३५।। दृष्ट्वा तत्र नदीं रम्यां तस्यास्तीरे सुमध्यमा:। उपविष्टालिभि: सार्द्धमनघा हरदृढ़व्रतम् ।।३६।। बालुकाभि:कृता मूर्त्ति: शिवया सहितस्य मे। भाद्रशुक्लतृतीयायां हस्तनक्षत्रसंयुजि ।।३७।। तत्र वाद्येन गीतेन रात्रौ जागरणा कृता। येन व्रतप्रभावेण आसनं चलितं मम ।।३८।। संप्राप्तो देवि तत्रैव यत्र त्वं सखिभि: सह। प्रसन्नोस्मि मया प्रोक्तं वरं ब्रूहि वरानने ।।३९।। यदि देव प्रसन्नोसि भर्त्ता भवतु मे हर:। तथेत्युक्त्वा अहं देवि ! कैलाशं नगमागत: ।।४०।। तत: प्रभाते

संप्राप्ते तदा सर्वविवर्ज्जितम्। पारणं च कृतं तत्र यद्दत्तं वनगोचरैः ॥४१॥ तत्र त्वं च प्रसुप्तासि सख्या सार्द्धं वरानने।" हिमवानपि तं देशमाजगाम महावने ॥४२॥ आलोक्य च चतुर्दिक्षु पानभोजनवर्जितम्। दृष्ट्वा तत्र नदीतीरे प्रसुप्तं कन्यकाद्वयम् ॥४३॥ उत्थाप्योत्संगमानीय करादानं चकार सः। सिंह व्याघ्रगजैर्जुष्टं किमर्थं वनमागता ॥४४॥ **पार्वत्युवाच**–शृणु तात ! मम ज्ञानं त्वं ददासीश्वरं प्रति। तदन्यथा कृतं येन तेनाहं वनमागता ॥४५॥ तेन मां त्वं शिवायैव दातुमर्हसि नान्यथा। तथेत्युक्त्वा हिमवता त्वमानीता गृहं प्रति ॥४६॥ ततः प्रयुक्ता ते पित्रा मम वैवाहिकक्रिया। तद्व्रतस्य प्रभावेण सौभाग्यं प्राप्तवत्यसि ॥४७॥ तदादिव्रतराजन्तु कस्यापि न प्रकाशितम्। व्रतराजस्य नामेदं शृणु देवि यथाऽभवत् ॥४८॥ आलीभिर्हरिता यस्मात्तस्मात्वं हरितालिका। **पार्वत्युवाच**–नाम मे कथितन्देव ! व्रतं वद ममाग्रतः ॥४९॥ किं पुण्यं किं फलं चास्य केन च क्रियते क्रिया। **ईश्वरउवाच**–शृणु देवि विधिं वक्ष्ये नारीणां व्रतमुत्मम् ॥५०॥ कर्त्तव्यञ्च विशेषेण यदि सौभाग्यमिच्छति। तोरणादि च कर्त्तव्यं कदलीस्तम्भमण्डितम् ॥५१॥ चन्दनादिसुगंधैस्तु लेपयेद् गृहमण्डलम्। शङ्खभेरीमृदङ्गैश्च वादित्रैवर्बहुभिर्वरैः ॥५२॥ नानामङ्गलाचारस्तु कर्त्तव्यो मम सद्मनि। स्थापनन्तत्र कर्त्तव्यं पार्वत्या सहितस्य मे ॥५३॥ उपोष्य पूजयेत्पुष्पैः कुर्य्याज्जागरणं निशि। नारिकेरैश्च जम्बीरैः फलैश्च विविधैस्तथा ॥५४॥ ऋतुदेशोद्भवैः सर्वै नैवेद्यैः कुसुमैर्नवैः। धूपदीपादिगन्धैश्च मन्त्रेणानेन पूजयेत् ॥५५॥ शिवायै शिवरूपायै मङ्गलायै महेश्वरि। शिवे सर्वार्थदे देवि शिवरूपे नमोस्तु ते ॥५६॥ शिवरूपे नमस्तुभ्यं शिवायै सततं नमः। नमस्ते शिवरूपिण्यै जगद्धात्र्यै नमोनमः ॥५७॥ संसारावृत्ति-विच्छेदे पाहि मां सिंहबाहिनि। मयाद्य येन कामेन पूजितासि महेश्वरि ॥५८॥ राज्यं मे देहि सौभाग्यं प्रसन्ना भव पार्वति। ब्राह्मणायै प्रदातव्यं वस्त्रधेनुहिरण्यकम् ॥५९॥ कथां श्रुत्वैकचित्तेन दम्पतिभ्यां सहैव तु। संकल्पन्तु ततः कुर्य्यात् गन्धपुष्पादिभिस्तथा ॥६०॥ याः कुर्वन्ति महादेवि व्रतराजं विधानतः। सौभाग्यं राज्यमायुश्च पापक्षयमवाप्नुयुः ॥६१॥ तृतीयायां तु या नारी लोभाद्भोजनमाचरेत्। सप्तजन्म भवेद्बन्ध्या विधवा च पुनः पुनः ॥६२॥ दारिद्र्यं पुत्रशोकश्च कर्कशा दुःखभागिनी। याति सा नरकं घोरमुपोष्य न करोति या ॥६३॥ अश्वमेधसहस्रं च वाजपेयशतानि च। कथाश्रवणमात्रेण तत्कालं लभते नरः ॥६४॥ एतत्ते कथितं देवि तवाग्रे तु वरानने। समर्पणविधिं वक्ष्ये स्वागमेन यथोदितम् ॥६५॥ गोभूहिरण्यदानानि वस्त्रदानपुरःसरः। तथा यागः प्रकर्त्तव्यः सर्वकामार्थसिद्धये ॥६६॥

*॥ इति भविष्योत्तरे हरितालिका-व्रतकथा समाप्ता ॥*

# अथ भाद्रशुक्ल चतुर्थ्यां सिद्धिविनायकपूजाविधिः

इयं चतुर्थी मध्याह्नव्यापिनी ग्राह्या। उभयदिने मध्याह्नव्याप्तौ तु पूर्वेद्युरेव तृतीयाविद्धायाः प्राशस्त्यात् इयं रविभौमयोरतिप्रशस्ता। पूर्वदिने निरामिषमेकवारं भुक्त्वा भविष्यद्ध्यानपूर्वकऋद्धिसिद्धिसहितसिद्धिविनायकस्य प्रतिमां निर्म्माय रत्नसिंहासने संस्थाप्य तस्यां शुक्लतिल–कल्कोद्वर्तनपूर्वकस्नानं विधाय कृतनित्यक्रियो व्रती कदलीस्तम्भशोभितमाम्रपल्लवतोरणम् विविधफल–विचित्ररङ्गबल्याद्यलंकृतं पीठं परिकल्प्य, तदुपरि प्रतिमां संस्थाप्य विविध पूजासामग्रीमासादयेत्। ततः कुशत्रयतिलजलान्यादाय, ॐ अद्य भाद्रे मासि शुक्ले पक्षे चतुर्थ्यां तिथावमुकगोत्रस्यामुकशर्मणो विद्याधनजयपुत्रपौत्रादिसौभाग्यलाभ–पूर्वक श्री सिद्धिविनायकप्रीतिकामः श्रीसिद्धिविनायकपूजनमहङ्करिष्ये इतिसंकल्प्य, पुष्पहस्तेन ॐ सिद्धिविनायकोसि, इति नाम कृत्वाऽक्षतमादाय, ॐ नमो जूतिरित्यादिना ॐ सिद्धिनिनायक इहागच्छ इह तिष्ठ इह सुप्रतिष्ठतो भव, इतिप्राणप्रतिष्ठामांवाहनञ्च विधााय, पुष्पहस्तेन ॐ एकदंतं शूर्प्पकर्णं गजवक्त्रं त्रिलोचनम्। पाशाङ्कुशधरं देवं ध्यायेत्सिद्धिविनायकम्। ध्यायेद्देवं महाकायं तप्तकाञ्चनसन्निभम्। दन्ताक्षमालापरशु–पूर्णमोदकहस्तकम्। मोदकासक्त–शुण्डाग्र–मेकदूतं विनायकम् ।। इतिध्यात्वा पुनरक्षतमादाय ॐ आगच्छ जगदाधार सुरासुरसुपूजित अनाथानाथ सर्वज्ञ गीर्वाणसुरपूजित ।। ॐ सिद्धि विनायक इहागच्छ इह तिष्ठेत्यावाह्य, रजतासनमादाय, ॐ अनेकरत्नसंयुक्तं दिव्यास्तरण भूषितम्। स्वर्णसिंहासनं चारु गृहाण सुरपूजित ।। इदं रजातासनम् ॐ सिद्धिविनायकाय नमः ।। फलपुष्पाक्षतयुतपाद्यमादाय, ॐ गौरीसुतनमस्तेस्तु शङ्करप्रियसूनवे। पाद्यं गृहाण देवेश गन्धपुष्पाक्षतैः फलैः। इदं पाद्यम् ॐ सिद्धिविनायकाय नमः ।। गन्धपुष्पाक्षतफलसहितार्घमादाय ॐ अर्घ्यं च फलसंयुक्तं गन्धपुष्पाक्षतैर्युतम्। गणाध्यक्ष नमस्तेस्तु गृहाण करुणानिधे ।। एषोर्घः ॐ सिद्धि० ।। आचमनीयमादाय ॐ गङ्गाजलं समानीतं सुवर्णकलसान्वितम्। आचम्यतां गणाध्यक्ष सर्वविघ्नहरो भव ।। इदमाचमनीयम् ॐ सिद्धि० ।। मधुपर्कं गृहीत्वा ॐ दधिक्षीरघृतैश्चैव मधुखण्डैर्विमिश्रितम्। प्रीत्यर्थन्तव देवेश मधुपर्कन्ददाम्यहम् ।। एष मधुपर्कः ॐ सिद्धि० ।। इदं पुनराचमनीयम् ओम् सिद्धिविनायकाय नमः ।। पञ्चामृतमादाय ओम् स्नानं पञ्चामृतं देव गृहाण गणनायक। अनाथनाथ सर्वज्ञ सर्वसिद्धिप्रदो भव इदं पञ्चामृतम् ॐ सिद्धि० ।। ओम् क्षीरोदतनयानन्त क्षीरोदतनयप्रिय। क्षीरोदागारहृदय क्षीरं स्नानाय गृह्यताम् ।। इदं स्नानीयं दुग्धम्

ॐ सिद्धि० । ॐ घृतश्च पयसोद्भूतं पवित्रं मङ्गलन्दधि । तस्य स्नानेन देवेश सर्वसिद्धिप्रदो भव ।। इदं स्नानीयन्दधि ॐ सिद्धि० ।। ॐ देवास्तृप्यन्ति पितरो मनुष्याश्चाभितो यशः । घृतस्नानेन तस्मात्त्वं तृप्तिं कुरु विनायक इदं स्नानीयं घृतम् ॐ सिद्धि ।। ॐमधुरूपो वसन्तस्त्वं त्वमेव जगतां मधु । मधुसूदन संप्रीत्या मधु स्नानाय गृह्यताम् । इदं स्नानीयं मधु ॐसिद्धि० ।। ॐइक्षुरससमुद्भूता शर्करा मधुरप्रिया । तस्याः स्नानेन विघ्नेश रससिद्धिं प्रयच्छ मे ।। इदं शर्करास्नानम् ॐसिद्धि० ।। गङ्गाजलमादाय ॐगङ्गादिसर्वतीर्थेभ्यः स्नानार्थं ते मयाहृतम् । अनाथनाथ सर्वज्ञ स्नानं कुरु महोत्तमम् ।। इदं मलापकर्षस्नानम् ॐसिद्धि० ।। ॐतैलं सुगन्धसंयुक्तं नानापुष्पैः सुवासितम् । मङ्गलार्थम्मया दत्तमभ्यङ्गं प्रतिगृह्यताम् ।। इदं तैलाभ्यङ्गस्नानम् ॐसिद्धि० ।। ॐहरिद्रायाः कृतं चूर्णं सतैलं ससुगन्धिकम् । मया निवेदितं साम्बूद्वर्तनं प्रतिगृह्यताम् ।। इदं हरिद्राचूर्णकृतमुद्वर्तनम् ॐसिद्धि० ।। ॐ नानातीर्थादाहृतश्च सुगन्धजलमुत्तमम् । उष्णं कृतं मया देव स्नानार्थं प्रतिगृह्यताम् । इदमुष्णोदकस्नानम् ॐसिद्धि० ।। इदमाचमनीयम् ॐसिद्धि० । पुनःशुद्धजलमादायॐगणानान्त्वेति, पुरुषसूक्तेन वा आगमोक्तमूलमन्त्रेण[1] वा इदं स्नानीयं ॐ सिद्धि० ।। रक्तवस्त्रयुगमादाय ॐरक्तवस्त्रद्वयं देव दिव्यं काञ्चनसम्भवम् ।। सर्वप्रद गृहाणेदं लम्बोदर हरात्मज ।। इदं रक्तवासोयुगम् ॐसिद्धि० । ओम्राजतं ब्रह्मसूत्रञ्च काञ्चनञ्चोत्तरीयकम् । गृहाण चारु सर्वज्ञ भक्तानां वरदो भव ।। इमे यज्ञोपवीते वृहस्पतिदैवते ॐसिद्धि० ।। भूषणमादाय ॐस्वभावसुन्दराङ्गाय नानाशक्त्याश्रयाय ते । भूषणानि विचित्राणि कल्पयाम्यमरार्चित ! ।। एतानि भूषणानि ॐसिद्धि० ।। ॐश्रीखण्डचन्दनं दिव्यं कर्पूरेण च संयुतम् । गन्धन्दास्यामि देवेश ! गणाध्यक्ष नमोऽस्तु ते ।। इदमनुलेपनाम् ॐसिद्धि० ।। इदं रक्तानुलेपनम् ॐसिद्धि० ।। सिन्दूरमादाय ॐउद्यद्भास्करसंकाशं सन्ध्यावदरुणं प्रभो ! वीरालंकरणं दिव्यं सिन्दूरं प्रतिगृह्यताम् । इदं सिन्दूरम् ॐसिद्धि० ।। ॐ रक्ताक्षतांश्च देवेश ! गृहाण द्विरदानन ! । ललाटपटले चन्द्रस्तस्योपर्यवधार्य्यताम् ।। इदं रक्ताक्षतम् ॐ सिद्धि० ।। पुष्पाण्यादाय ॐ

सुगन्धीनि च पुष्पाणि धुत्तुरादीनि च प्रभो । विनायक नमस्तुभ्यं गृहाण परमेश्वर ।। एतानि पुष्पाणि ॐसिद्धि० ।। एतानि विल्वपत्राणि ॐ सिद्धि० ।। एतानदूर्व्वादलानि ॐसिद्धि० ।। अथ गन्धपुष्पाक्षतान्येकीकृत्य अंगानि पूजयेत् ।। सर्वत्र प्रणवादिनमोन्तं योजयेत् ।। यथा ॐ गणेशाय नमः पादौ पूजयामि ।।१।। विघ्नराजाय० जानुनी पू० ।।२।। आखुवाहनाय० ऊरू पू० ।।३।। हेरम्बाय० कटिं पू० ।।४।। गणाधिपतये० नाभिं पू० ।।५।। लम्बोदराय० उदरं पूजयामि ।।६।।

---

१. ॐ गं गणेशाय नमः ।

गणनाथकाय०हृदयं इति पू० ।।७।। गौरीसुताय स्तनौ पू० ।।८।। स्थूलकण्ठाय कण्ठं पू० ।।९।। स्कन्दाग्रजाय स्कन्धौ पू० ।।१०।। पाशहस्ताय० हस्तम् पू० ।।११।। गजवक्त्राय वक्त्रं पू० ।।१२।। परशुधारिणे० हस्तौ पू० ।।१३।। विघ्नराजाय नेत्रे पू० ।।१४।। विघ्नहर्त्रे ललाटं पू० ।।१५।। सर्वेश्वराय० शिर: पूजयामि ।।१६।। गणाधिपाय सर्वाङ्गं पूजयामि ।।१७।। अथ नानापत्रै: पूजयेत् ।। प्रणवादिनमोन्तं सर्वत्र योजयेत् ।।यथा।। इदं मालतीपत्रं ॐसुमुखाय नम: १।। इदं भृङ्गराजपत्रं गणाधिपाय० २।। इदं विल्वपत्रं उमापुत्राय० ३।। इदं श्वेतदूर्वापत्रं गजाननाय० ४।। इदं बदरीपत्रं लम्बोदराय० ५।। इदं धत्तूरपत्रं हरसूनवे० ६।। इदं तुलसीपत्रं गजकर्णकाय० ७।। इदं शमीपत्रम् ओम् बक्रतुण्डाय नम: ८।। इदमपामार्गपत्रम् गुहाग्रजाय ९।। इदं बृहतीपत्रम् एकदन्ताय० १०।। इदं करवीरपत्रम् विकटाय० ११।। इदमर्कपत्रम् कपिलाय० १२।। इदमर्जुनपत्रम् गजदन्ताय० १३।। इदमपराजितापत्रम् विघ्नराजाय १४।। इदं दडिमीपत्रम् वटवे० १५।। इदं देवदारुपत्रम् सुराग्रजाय० १६।। इदं मसूरपत्रम् भालचन्द्राय० १७।। इदं सिन्दुवारपत्रम् ओम् हेरम्बाय नम: १८।। इदं केतकीपत्रम् विनायकाय० १९।। इदं जातीपत्रम् चतुर्भुजाय० २०।। इदमगस्तिपत्रम् ओम् सर्वेश्वराय नम: २१।। इदं गांधारीपत्रम् ओम् सुराय २२।। इति द्वाविंशति पत्रिकादानम् ।। पत्रालाभे दूर्वादलन्दद्यात् सर्वपुष्पमयी दूर्व्वा सर्वमप्सु प्रतिष्ठितमितिवाक्यात् ।।

अथ एकविंशति दूर्वा आदाय एकैकनाम्ना गन्धाक्षतयुक्तं दूर्वायुग्म् समर्पयेत् ।। इदं दूर्वायुग्मम् ओम् गणाधिपाय नम: ! ।। इदं दू० युग्मम् ओम् उमापुत्राय नम: २।। इदं दू० यु० ॐ अघनाशिने नम: ३।। इदं दू० यु० विनायाकाय नम: ४।। इदं दू० यु० ॐ ईशपुत्राय नम: ५।। इदं दू० यु० ओम् सर्व्वसिद्धिप्रदाय नम: ६।। इदं दू० यु० एकदन्ताय नम: ७।। इदं दू० यु० इभवक्त्राय नम: ८।। इदं दू० यु० मूषकवाहनाय नम: ९।। इदं दू० यु० ॐ कुमारगुरवे नम: १०।। इदं दूर्वायुग्मम् ॐ कपिलाय नम: ११।। एवं नाम गृहीत्वा दूर्वादलानि दद्यात्।। धूपमादाय ॐ दशाङ्गगुग्गुलं धूपमुत्तमं गणनायक । गृहाण सर्वदेवेश उमापुत्र नमोस्तु ते ।। एष धूप: ओम् उमापुत्राय नम: ।। दीपमादाय ओम् सर्व्वज्ञ ! सर्वलोकेश सर्वेषान्तिमिरापह ।। गृहाण मङ्गलं दीपं रुद्रप्रिय नमोस्तुते ।। एष दीप: ओम् रुद्रप्रियाय नम: ।। नानाविधनैवेद्यमादाय ओम् नमो मोदकहस्ताय भालचन्द्राय ते नम:। नवैद्यं गृह्यतां देव सङ्कटं मे निवारय ।। ईप्सितं मे वरं देहि विघ्ननाशिन्नमोन्तु ते। नानाखाद्यमयं दिव्यं तुष्ट्यर्थन्ते निवेदितम् । मया भक्त्या शिवापुत्र गृहाण गणनायक । एतानि मोदक सहितनानाविध नैवेद्यानि ओम् विघ्ननाशिने नम: ।। सुगन्धितपानीयमादाय ओम्

एलोशीरलवंगादि-कर्प्पूरपरिवासितम् ।। प्राशनार्थं कृतं तोयं गृहाण गणनायक ।। ओम् नमस्ते देवदेवेश सर्वतृप्तिकरं परम् ।। अखण्डानन्दसंपूर्ण गृहाण जलमुत्तमम् ।। इदं पानार्थं गङ्गाजलं ओम् सिद्धिविनायकाय नमः ।। ततो मूलेन[१] पुनराचमनीयम्०। ताम्बूलमादाय ओम् पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।। कर्प्पूरेण समायुक्तं ताम्बूलं प्रतिगृह्यताम् ।। इदं ताम्बूलम् ओम् सिद्धि० । एकविंशतिसंख्याकं दद्यात्।

नानाफलान्यादाय ।। ॐ नारिकेरञ्च नारङ्गं कदम्बं मातुलिङ्गकम् ।। द्राक्षाखर्जूरदाडिम्बं गृहाण गणनायक । एतानि नानाविधफलानि ओम् सिद्धि० ।। दक्षिणार्थद्रव्यमादाय ओम् हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । तेन प्रीतो गणाध्यक्ष भव सर्वफलप्रद ।। इदं दक्षिणाद्रव्यं ओम् सिद्धिविनायकाय नमः ।। नीराजनमादाय ओम् नीराजनं गृहाणेश शोभनं भक्तिसंयुतम् ।। अनाथनाथ सर्वज्ञ नमस्ते भक्तवत्सल ।। इदं नीराजनं श्रीगणाध्यक्षाय नमः। ओम् नमःस्तुतोसि विघ्नेश सर्वविघ्नहरो भव । ईप्सितम्मे वरं देहि नमस्ते भक्तवत्सल । देवदेव जगन्नाथ भक्तानां वरदायक अविघ्नं कुरु देवेश सर्वकार्य्येषु सर्वदा । इतिप्रणमेत् ।। ओम् गणानान्त्वेत्यादिवैदिकमन्त्रैः पुष्पाञ्जलिन्दद्यात् ।। ततो वरं प्रार्थयेत् ।। ओम् दीयते गणनाथाय प्रीयताम्मे गणाधिपः। सौख्यं सौमनसं नित्यं करोतु गणनायकः ।। दाता विघ्नेश्वरो देवो ग्रहीता चापि विघ्नराट् । तस्मादिदं मया दत्तं संपूर्ण त्वं ददस्व मे ।। विनायक नमस्तेऽस्तु विघ्नेश सुरपूजित । ईप्सितम्मे वरं देहि नमस्ते करुणाकर ।। आधारः सर्वभूतानामधिपः सर्वकामदः । व्रतेनानेन देवेश सुप्रीतो भव सर्वदा ।। विनायक गणेशान सर्वदेवनमस्कृत पार्वतीप्रिय विघ्नेश मम विघ्नं विनाशय ।। सर्वत्र सर्वदा देव निर्विघ्नं कुरु सर्वदा। मानोन्नतिञ्च राज्यञ्च पुत्रपौत्रान् प्रदेहि मे ।। विघ्नान्नाशय मे सर्वान्नाशयोपस्थितान् प्रभो । त्वत्प्रसादेन कार्य्याणि सर्वाणीह करोम्यहम् ।। शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयं कुरु ।। इति विज्ञाप्य देवेशं प्रणिपत्य पुनः पुनः ।। इति संप्राथ्र्य दण्डवत्प्रणमेत्।।

ततो यानिकानीति मन्त्रेण त्रिःप्रदक्षिणं कुर्य्यात् ।। तत ऋद्धिं सिद्धिं च पंचोपचारैस्संपूज्य वस्त्रञ्च दद्यात् । ततो दश मोदकानादाय, मोदकान् दशसंख्याकान् सगुड़ान् धृतपाचितान् । विप्रवर्य्याय दास्यामि गणनाथ-प्रतुष्टये ।। कुशादिकमादाय ॐ अद्य श्रीसिद्धिविनायकप्रीतिकाम इदं दशसंख्याकं मोदकं श्री अमुकशर्म्मणे ब्राह्मणाय संप्रददे ।। ततो मोदकसहितेनान्नेन ब्राह्मणान् भोजयित्वा स्वयं सुहृद्युतो मोदकसहितमन्नं भुञ्जीत ।। अत्रायमाचारः । अत्युत्कटभक्तश्चेत् तां प्रतिमां विसर्जनमकृत्वैव कतिपयदिनान्युत्सवार्थं स्थापयित्वा प्रतिदिनं यथोक्तोपचारैः पूजनगीतनृत्यवादनकथा-पुराणादिश्रवणादिभिः ब्राह्मण भोजनेन चोत्सवं कारयन्

१. गं गणेशाय नमः ।

शुभदिने विसर्जनाङ्गत्वेन मध्याह्ने देवं संपूज्य महानैवेद्यं समर्प्य ओम् यान्तु देवगणाः सर्वे पूजामादाय मामकीम् । इष्टकाम-प्रसिद्ध्यर्थं पुनरागमनाय च ॥ ओम् सिद्धिविनायक पूजितोसि प्रसीद क्षमस्व स्वस्थानं गच्छ इति विसृज्य नरयानादावारोप्य मंगलवाद्यघोषपुरःसरं नीत्वा नद्यादौ महति जलाशये प्रतिमां प्रक्षिपेदिति । पूजोत्तरं प्रतिदिनं कथां श्रृणुयात् ।

## अथ कथा

**भारद्वाज उवाच**–निर्विघ्नेन तु कार्यणि कथं सिद्ध्यन्ति सूत नः । अर्थसिद्धिः कथं नृणां पुत्रपौत्रादिसंपदः ॥१॥ दम्पत्योः कलहे चैक्यं बन्धुभेदे तथा नृणाम् । **सूत उवाच**–सन्नद्धयोः पुरा विप्र कुरुपाण्डवसेनयोः ॥२॥ पृष्टवान्देवकीपुत्रं कुन्तीपुत्रो युधिष्ठिरः । **युधिष्ठिरउवाच**–निर्विघ्नो विजयो मह्यं देवदेव कथं भवेत् ॥३॥ कां देवतां नमस्कृत्य सम्यग्राज्यं लभेमहि । **श्रीकृष्णउवाच**–पूजयस्व गणध्यक्षमुमापुत्रं वरप्रदम् ॥४॥ तस्मिन् सम्पूजिते वीर सम्यग्राज्यमवाप्स्यसि। **युधिष्ठिर उवाच**–देव केन विधानेन पूजयामि विनायकम् ॥५॥ सम्पूज्यश्च तिथौ कस्यां सिद्धिदो गणपो भवेत् ॥ **श्रीकृष्ण उवाच**-भाद्रे मासि सिते पक्षे चतुर्थ्यां पूजयन्नृप ॥६॥ यदा चोद्वहते भक्तिं तदा पूज्यो गणाधिपः । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने देवमर्चयेत् ॥७॥ चन्दनेन समालिप्तं कर्णिकायां न्यसेत्तु तम् । आवाहनार्चनार्घादि कुर्याच्चैव प्रयत्नतः ॥८॥ पूजां कृत्वा विधानेन स्नात्वा पञ्चामृतैः पृथक् । वस्त्रं सर्वप्रदे दद्याद्रक्तं युग्मञ्च शक्तितः ॥९॥ विनायकेति नाम्ना वै गन्धं दद्यात्प्रयत्नतः । विनायकेति पुष्पाणि धूपञ्चोमासुताय च ॥१०॥ दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने । ततो दूर्वाऽङ्कुरान् पुष्पं दद्याद्विंशतिरेव च ॥११॥ कुमारगुरवे तुल्यं पूजनीयः प्रयत्नतः । पूजयेत् परया भक्त्या गणेशं सिद्धिनायकम् ॥१२॥ इत्येकविंशतिञ्चैव मोदकान् घृतपाचितान्। स्थापयित्वा गणध्याक्षसमीपे कुरुनन्दन ॥१३॥ दश विप्राय दातव्यं गृहीत्वा दशभिः स्वयम्। एकं गणाधिपे दद्यात् नैवेद्यञ्च नृपोत्तम् ॥१४॥ गणेशः प्रतिगृह्णाति गणनाथो ददाति च । दीयते गणनाथाय प्रीयतां मे गणाधिपः ॥१५॥ सौमनस्यञ्च नित्यम्मे करोतु गणनायकः । इतिमन्त्रं समुच्चार्य दश दद्यातद् द्विजातये ॥१६॥ कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदेवताम् । ब्राह्मणान् भोजयित्वा च भुञ्जीयात्तैलवर्जितम् ॥१७॥ एवं कृते धर्मराज गणनाथस्य पूजने । विजयस्ते भवेन्नित्यं सत्यं सत्यं मयोदितम् ॥१८॥ त्रिपुरं दग्धुकामेन पूजितः शूलपाणिना । शक्रेण पूजितः पूर्वं तथा वृत्रवधेषु च ॥१९॥ नलस्यान्वेषणे तद्वद्दमयन्त्या पुरार्चितः । रामचन्द्रेण तद्वच्च सीतां चानयता पुरा ॥२०॥ अमृतोत्पादनार्थाय

पूजितश्च सुरैरपि । अमृताहरणात्पूर्वं वैनतेयेन पक्षिणा ॥२१॥ यदा पूर्वं हि दैत्येन हतो रुक्मिणिनन्दनः । आराधितो महाराज रुक्मिण्या सह यो मया ॥२२॥ कुष्ठ-व्याधिगते नाथ साम्बेनाराधितः पुरा । विजयश्च भवेन्नित्यं सत्यं सत्यं मयोदितम् ॥२३॥ प्राप्स्यसि त्वं स्वकं राज्यं हत्वा शत्रून् रणाजिरे । सिद्ध्यन्ति सर्वकार्याणि मनसा चिन्तितान्यपि ॥२४॥ **सूत उवाच**–एवमुक्तस्तु कृष्णेन सानुजः पाण्डुनन्दनः । पूजयामास देवस्य पुत्रं त्रिपुरघातिनः ॥२५॥ सिद्ध्यन्ति सर्वकार्याणि नात्र कार्या विचारणा । कार्येष्वारभ्यमाणेषु गजवक्त्रं प्रपूजयेत् ॥२६॥ विद्याकामो लभेद्विद्यां धनकामो लभेद्धनम् । जयञ्च जयकामश्च पुत्रार्थी लभते सुतान् ॥२७॥ पतिकामा च भर्त्तारं सौभाग्यञ्च सुवासिनी । विघ्नेशं पूजयित्वा तु वैधव्यं नाप्नुयात्क्वचित् ॥२८॥ वैष्णव्यादिषु दीक्षासु पठनीयः प्रयत्नतः । चण्डिकाद्या मातृगणाः परितुष्टाः भवन्ति च ॥२९॥ तस्मिन् सम्पूजिते चैव भक्त्या सिद्धिविनायके । यः पठेच्छृणुयाद्वापि भक्तिमान् सुसमाहितः । सिद्ध्यन्ति सर्वकार्याणि गणनाथप्रसादतः ॥३०॥

*॥ इति श्रीगणेशचतुर्थीव्रतकथा समाप्ता ॥*

ततो दक्षिणा। ओम् अद्य कृतैतद् गणेशपूजनतत्कथाश्रवणप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणमहं ददे । ततो ब्राह्मणान् भोजयेत्॥

# अथ भाद्रशुक्लचतुर्थ्यांचन्द्रं पूजयेत्

यद्यप्यस्यां चन्द्रदर्शने दोषः श्रूयते, तथापि तद्दोषशान्त्यर्थं सिंहप्रसेनमवधीदितिमन्त्रेणाभिमन्त्रितं भक्ष्यभोज्यादिकं चन्द्राय समर्प्य , स्यमन्तकोपाख्यानं श्रोतव्यमित्याचाराल्लिखितं, महामहोपाध्यायमहेशठक्कुराचरितव्रतमिदमिति श्रुतिस्स्मृतिविहितो धर्म्मस्तदभावे श्रेष्ठाचारः प्रमाणिति श्रीदत्ताह्निके वशिष्ठोक्तम् ॥ स्कन्दपुराणे भाद्रशुक्लचतुर्थ्यां चन्द्रदर्शनदोषनिरासार्थं चन्द्रं प्रति गणेशवाक्यम् गणेशव्रतकथायां यथा,चन्द्रस्य दर्शनार्थाय गणनाथस्य भासितम् । भद्रशुक्लचतुर्थ्यां तु मोदकाद्यै : प्रपूज्य माम् ॥ रोहिण्यासहितं त्वाञ्च समभ्यर्च्य विधानतः । सदा तस्य करिष्यामि, संकष्टस्य निवारणमिति ॥

सायंकाले कृतस्नानादिराचान्ता सधवा गौरीं , विधवा तु पञ्चदेवताः संपूज्य, कुशत्रयतिलजलान्दाय नमोऽस्यां रात्रौ भाद्रे मासि शुक्ले पक्षे चतुर्थ्यां तिथौ, अमुकगोत्राया अमुकीदेव्याः पूर्वाङ्गीकृतसकलाभीष्टमनोरथसिद्ध्यर्थं रोहिणी-सहितचतुर्थीचन्द्र-पूजनमहङ्करिष्ये । अन्या चेत् करिष्यामीति ॥ पुरुषश्चेत् (अमुकगोत्रस्यामुकशर्मणः) नमः स्थाने प्रणवइत्यूहः । इति संकल्प्य,

गोमयोपलिप्तप्राङ्गणे उपविश्य, अक्षतमादाय नमो राहिणीसहितचतुर्थीचन्द्र इहागच्छ इह तिष्ठेत्यावाह्य, पयःपूर्णपुष्पाक्षतयुतशङ्खमादाय, नमो दिव्यशङ्खतुषाराभ क्षीरोदार्णवसम्भव गृहाणार्घं शशांकेमं रोहिण्या सहितःप्रभो ।। क्षीरोदार्णवसंभूत चन्द्र लक्ष्मीसहोदर। पीयूषधाम रोहिण्या सहितोऽर्घ्यं गृहाण मे ।। इत्यनेन एतानि पाद्यार्घाचमनीयस्नानीय पुनराचमनीयानि नमो रोहिणीसहितचतुर्थीचन्द्राय नमः । नमः सोमाय सोमेश्वराय सोमपतये। सोमसंभवाय गोविन्दाय नमो नमः ।। इदं क्षीरस्नानीयं नमो रोहि० स० च० च० नमः ।। नमः सोमायेत्यनेन इदमनुलेपनम् ।। इदं रक्तानुलेपनम् ।। इदमक्षतम् एतानि पुष्पाणि ।। इदं माल्यम् ।।इमे यज्ञोपवीते बृ० दैवते०।। इदं शुक्लवस्त्रं बृ० दैवतम् ।। एतानि दूर्वादलानि ।। एतानि विल्वपत्राणि ।। एतानिगन्धपुष्पधूपदीपताम्बूलनानाविधशष्कुली पोलिका-पायसादिनैवेद्यानि ।। इदमाचमनीयम् । एष पुष्पाञ्जलिः नमो रोहिणीसहितचतुर्थीचन्द्राय नमः ।। ततो डल्लकादि हस्ते कृत्वा उत्थाय, नमः सिंहःप्रसेनमवधीत्सिंहो जाम्बवता हतः। सुकुमारक मा रोदीः तव ह्येषःस्यमन्तकः । इत्युच्चार्य्य सर्व्वाणि यथासंभवोपकरणानि समर्प्य प्रणमेदनेन नमो दिव्यशंखतुषाराभं क्षीरोदार्णवसंभवम् । नमामि शशिनं भक्त्या शंभोर्मुकुटभूषणम् ।। ततो रूपं देहि यशोदेहीत्यादिना वरं प्रार्थयेत्।

कुशादिकमादाय नमोऽस्यां रात्रौ कृतैतद् रोहिणीसहितचतुर्थीचन्द्रपूजन-कर्म्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे। इतिदक्षिणां दत्वा तां ब्राह्मणाय प्रतिपादयेत्। यथशक्ति ब्राह्मणान् भोजयित्वा सपरिवारः स्वयं भुञ्जीत ।। इयं चतुर्थी प्रदोषव्यापिनी ग्राह्या । उभयत्र प्रदोषे परैवेति । इति भाद्रशुक्लचतुर्थी-चन्द्रपूजा विधिः ।।

# अथ महालक्ष्मी पूजा

अथ भाद्रशुक्लाष्टमीमारभ्य षोडशदिनपर्य्यन्तं महालक्ष्मीव्रतम्। तच्चार्द्धरात्रिक्रमवर्तिन्यामष्टम्यां[1] कार्य्यमितिसमयप्रदीपे श्रीदत्तोपाध्यायः । तदुक्तं चन्द्रप्रकाशे स्मृत्यन्तरे कृत्यमहार्णवे च-

अर्द्धरात्रमतिक्रम्य वर्तते योत्तरा तिथिः । तदा तस्यां नरैः कार्यो महालक्ष्मीव्रतं सदेति ।। तत्र पूर्वदिने कृतैकभुक्तादिसंयमोऽष्टमीदिने प्रातः कृतनित्यक्रियः ताम्र-पात्रेणार्घमादाय जानुभ्यामवनिङ्गत्वा ओम् भगवन् सूर्य भगवत्यो देवता अद्यादिषोड़शवर्षाणि यावत् प्रतिभाद्रशुक्लाष्टमीमारभ्याश्विनकृष्णाष्टमीपर्य्यन्तं महा-

१. इयं दूर्वाष्टमी मध्यरात्रव्यापिनी। पूर्वरात्रे मध्यरात्रात् परतश्चेदुत्तररात्रे मध्यरात्रव्यापिनी ग्राह्या।

लक्ष्मीव्रतमहमाचरिष्ये इति निवेद्य कुशादिकमादाय ओम् आद्यादिषोड़शवर्षाणि यावत् प्रतिभाद्रशुक्लपक्षीयाष्टमीमारभ्याश्विनकृष्णाष्टमीपर्य्यन्तं प्रत्यहममुक-गोत्रस्यामुकशर्म्मणो मम ऐहिकलक्ष्मासादितवेशमत्त्व-सकलवाञ्छितार्थलाभपुत्रपौत्रादि समृद्धिमत्त्व सकलभोगमुक्ति-भूतलाधिकरणक-राज्यभोगप्राप्ति-स्वर्गलोकगमनानन्तर विष्णुदैवतनक्षत्रभवनकामनया महालक्ष्मीव्रतमहङ्करिष्ये इतिसंकल्प्य जलेन मुखं हस्तौ पादौ च षोड़शवारं प्रक्षाल्य षोड़शग्रन्थियुतषोड़शतन्तुक-डोलकं निर्माय मालतीकर्पूरागरुचन्दनानुलिप्तं कृत्वा तत्र डोलके ओम् श्री महालक्ष्मि इहागच्छ इह तिष्ठेत्यावाह्य, इदमासनम् । इदं स्वागतम् ।। इदं पाद्यम् ।। एषोर्घ्यः ।। एष मधुपर्कः ।। इदमाचमनीयम् ।। इदं स्नानीयम्। इदं पुनराचमनीयम् ।। इदं सांतरालरक्तवस्त्रम् ।। इदं सिन्दूरम् ।। इदमलंकरणम् ।। एतानि रक्तपुष्पाणि ।। इदं माल्यम् ।। एष धूपः ।। एष दीपः ।। एतानि नैवेद्यानि ।। इदमाचमनीयम् ।। इदं ताम्बूलम् ।। इदमाचमनीयम् ।। एष पुष्पाञ्जलिः ।। ओम् श्रीमहालक्ष्म्यै नमः ।। इतिमन्त्रेणैव संपूज्य डोलकमादाय ओम् धनं धान्यं धरां धर्म्मं कीर्तिमायुर्य्यशः श्रियम् ।। तुरङ्गान् दन्तिनः पुत्रान् महालक्ष्मि ! प्रयच्छ मे ।। इत्यनेन डोलकं दक्षिणभुजे (स्त्रीचेत् वामभुजे) बद्ध्वा षोडशदूर्वाक्षतादिभिः षोडशग्रन्थिषु पूजयेत् ।। ततः कथां श्रृणुयात् ।। एवं प्रत्यहं कुर्य्यात् ।। इति ।।

आश्विनशुक्लाष्टम्यान्तु प्रातः स्नात्वा शुक्लाम्बरधरः कृतनित्यकृयः पूजास्थनमागत्य श्वेतासने उपविश्य श्वेतपत्रकमष्टदलं लिखित्वा ऐन्द्र्या-दिशक्तियुतपार्श्वपत्राणि विलिखेत् ।। ततोष्टदलकर्णिकायां पुष्हस्तेन, ओम् कर्पूरधवलाङ्गीञ्च सर्वसम्पत्तिदायिनीम् । शुभ्रवस्त्रपरीधानां मुक्ताभरणभूषिताम् ।। पङ्कजासनसंस्थानां स्मेराननसरोरुहाम् । शारदेन्दुकलाकान्तिं मृगनेत्रां चतुर्भुजाम् ।। अभितो गजयुग्मेन सिच्यमानां घटाम्बुना ।। इतिध्यात्वा एवंभूतां महालक्ष्मीं कर्पूरागरुचन्दनैर्लिखित्वा पुष्पाक्षतमादाय ओम् महालक्ष्मि समागच्छ पद्मनाभपदादिह । पञ्चोपचारपूजेयं त्वदर्थन्देवि संभृता ।। इत्यनेन ओम् श्रीमहालक्ष्मि इहागच्छ। ओम् आलयन्ते विकसितं कमलं कमलालये। कमले कमलेऽस्मिन् त्वं स्थितिंमत्कृपया कुरु ।। इत्यनेन ओम् श्रीमहालक्ष्मि इह तिष्ठ। ओम् गङ्गादिस-लिलाधारं तीर्थमन्त्राभिमन्त्रिम् । दूरयात्राश्रमहरं पाद्यं देवि गृहाण तम् ।। इदं पाद्यम् । अनेनैव एषोर्घ्यः। ओम् मलयाचलसंपन्नं नानापन्नगरक्षितम्। शीतलं बहुलामोदं चन्दनं विन्ध्यतामिदम् ।। इदमनुलेपनम् ।। इदं रक्तानुलेपनम्। इदं सिन्दूरम् ।। ओम् मिलत्परिमलामोदमत्तालिकुलसंकुलम् ।। आनन्दिनन्दनोद्यानं पद्मायै कुसुमन्नमः ।। एतानि पुष्पाणि ।। इदं माल्यम् ।। ओम् तन्तुसन्तानसन्नद्धं कलाकौशलकल्पितम् । सर्वांगाभरणश्रेष्ठं वसनं परिधीयताम् ।। इदंवस्त्रंबृ०दै० ।। ओम् गन्धसंभारसन्नद्धं

पृथुवस्तु समुद्भवम्। सुरासुरनरानन्द धूपं देवि गृहाण तम् ।। एषधूपः । ओम् मार्तण्डमण्डलाखण्ड-चन्द्रविम्बाग्नितेजसाम्। निधानं देवि दीपोयं निर्मितस्तव भक्तितः ।। एष दीपः ।। ओम् देवत्तालयपातालभूतलाधारधान्यजम्। षोडशाकारसंभारं नैवेद्यं तन्नमः श्रियै ।। एतानि नानाविधनैवेद्यानि ।। ओम् स्नानादिकं विधायापि यतः शुद्धिरवाप्यते । तदेतदाचमनीयम्महालक्ष्मि विधीयताम् ।। इदमाचमनीयम् ।। ओम् पातालतलसंभूतं वदनाम्भोजभूषणम् ।। नानापुष्पसमाकीर्णताम्बूलं देवि ते नमः ।। इदं ताम्बूलम् ।। एषं पुष्पाञ्जलिः ओम् श्रीमहालक्ष्म्यै नमः ।। इतिसंपूज्य अञ्जलिं बद्ध्वा ओम् विष्णोर्वक्षसि पद्मे च शङ्खचक्रे तथाम्बरे । लक्ष्मि नित्या यथासि त्वं मम नित्या तथा भव ।। इत्यनेन प्रार्थयेत् ।। ओम् लक्ष्मि देवि गृहाण त्वं डोलकं यन्मया धृतम्। व्रतं संपूर्णतां यातं कृपा कार्य्या मयि त्वया ।। इत्यनेन बाहोर्डोलक-मुत्तार्य्य लक्ष्म्याः पार्श्वे निवेदयेत्।

# अथ कथा

**युधिष्ठिर उवाच**—स्वस्थानलाभपुत्रायुःसर्वैश्वर्य्यसुखप्रदम् । व्रतमेकं समाचक्ष्व विचार्य्य पुरुषोत्तम ।।१।। **श्रीकृष्ण उवाच**—दुर्वारबृत्तदैत्येन्द्र- परिव्याप्तत्रिविष्टपे। एतदेव कृतस्यादौ देवेन्द्रःप्राह नारदम् ।।२।। तस्य श्रुत्वा ततो वाक्यं स मुनिः प्रत्यभाषत। पुरन्दर पुरा रम्यं पुरमासीच्छुभान्वितम् ।।३।। रत्नगर्भाऽभवद्भूमिर्य्यत्र रत्नादिभूधरैः। यत्राङ्गनाजनापाङ्गभङ्गालोकनसायकैः ।।४।। त्रैलोक्यं स्ववशं चक्रे देवः कुसुमसायकः। चतुर्वेदध्वनिर्य्यत्र यच्च विश्व-विभूषणम् ।।५।। विश्वकर्म्मापि यद्वीक्ष्य कल्पयत्यनिशं शिवम्। तत्राभवन् महीपालो मङ्गलो मङ्गलालयः ।।६।। चिल्ला देवी प्रिया तस्य दुर्भगैका बभूव ह। अन्या तु चोलदेवी या महिषी सा यशस्विनी ।।७।। कदाचिन्मंगलो राजा चोलदेवी-सहायवान्। प्रासादशिखरारूढः स्थलीमेकां ददर्शसः ।।८।। तामालोक्य महीमालः स्मेराननसरोरुहः । चोलादेवीम् प्रति प्राह दन्तद्योतितदिङमुखः ।।९।। चञ्चलाक्षि तवोद्यानं कान्तिनिन्दितचन्दनम्। कारयामि तदादिष्टस्तत्रोद्यानमकारयत् ।।१०।। संपन्नं च तदुद्यानं नानाद्रुमलतान्वितम्। नानारक्षकसंयुक्तं नानाभित्तिसमावृतम् ।।११।। तत्रागत्य महाकालस्तनुन्यस्त-नभःस्थलः। पङ्काप्लावितसर्वाङ्गश्चक्षुराक्षिप्तचञ्चलः ।।१२।। दंष्ट्राविशिष्टश्चन्द्रार्द्धः प्रलयांभोधरध्वनिः। तद्भुनक्तीति विज्ञाय सहसोद्यानपालकाः ।।१३।। सभयन्तस्य वृत्तान्तमूचिरे नृपतेः पुरः। तदाकर्ण्य ततो राजा क्रोधारुणितलोचनः ।।१४।। बधाय दंष्ट्रिणस्तस्य सन्दिदेशाखिलं बलम्। ततश्चचाल भूपालास्त्रिगण्डगलितैर्गजैः ।।१५।। आप्लावयन् महीं सर्वां वाजिवृन्दैः समन्ततः। चालयन्नखिलान् शैलान् स्यन्दनौघमरुद्धरैः ।।१६।। पत्तिब्रजपदध्वानैः पूरयन्नखिलाः दिशः। ततो वाढं समावृत्य तदुद्यानं नरेश्वरः ।।१७।।

उवाचोच्चैरतिक्रुद्धो दिशोमुखरयन् दश । पथा यस्य वराहोयं प्रयात्यु-पवनान्तिकम् ॥१८॥ तस्यावश्यं शिरश्छेदं विदधामि रिपोरिव। तस्य भूपस्य तद्वाक्यं समाकर्ण्य स शूकरः ॥१९॥ जगामान्येन मार्गेण प्राणिनश्चेष्टितं यथा। ततः स शूकरासक्तः कशयाऽश्वं प्रताड्य च ॥२०॥ व्रीडाकलंकितः सार्द्ध मार्गेणास्यैव सोऽगमत्। गत्वाऽथ विपिनं घोरं सिंहशार्दूल-संकुलम् ॥२१॥ झिल्लीझंकारसंभारवाचालचलकुञ्जरम्। शल्येन सोऽबधीत् कोलं बज्रेणाद्रिं यथा भवान् ॥२२॥ अथ व्योम्नि विमानस्थः सुरसुन्दरविग्रहः। कोलरूपं परित्यज्य सोऽब्रवीन् मङ्गलं नृपम् ॥२३॥ स्वस्त्यस्तु ते महीपाल त्वया मुक्तिः कृता मम । तदाकर्णय वृत्तान्तं येनाहं जात ईदृशः ॥२४॥ एकदा देवता वृन्दसंबृतः कमलासनः। चञ्चत्पुटादिभिस्तालैः षड्जाद्यैः सप्तभिः स्वरैः ॥२५॥ मध्यादिभिस्त्रिभिर्म्मानैर्गीय-मानं मया नृप । नानास्थानगुणोपेतमश्रौषीद्गीतमुत्तमम् ॥२६॥ गीयमानं च्युतं तालात्ततोऽहं कर्मपातकी। शप्तश्चित्ररथस्तेन ब्रह्मणा लोककर्तृणा ॥२७॥ कोलो भवेति मेदिन्यां मुक्तिस्ते तु तदा पुनः । निर्ज्जिताशेषभूपाला मंगलस्त्वां हनिष्यति ॥२८॥ तदद्य घटितं सर्वं त्वत्प्रसादान्महीपते। तद्गृहाण वरं भूप यद् देवस्यापि दुर्लभम् ॥२९॥ महालक्ष्मीव्रतं दिव्यं चतुर्वर्गफलप्रदम्। लभस्व सार्वभौमत्वं गच्छ राज्यं निजं द्रुतम् ॥३०॥ चित्ररथोऽथगन्धर्व उक्त्वेत्थं भूपतिं प्रति। अन्तर्द्धानं गतस्तुष्टः शरत्काल इवाम्बुदः ॥३१॥ अथमङ्गलभूपालः पार्श्वस्थं द्विजमागतम्। विलोक्य वटुकं किञ्चित् कक्षानिक्षिप्तसम्बलम् ॥३२॥ उवाच मधुरां वाचं स्मितिपूर्वां शुचिस्मितः। देवस्त्वं दानवस्त्वं वा गन्धर्वो वाऽथ राक्षसः ॥३३॥ तथ्यं वद वटो कस्मात् किमर्थं त्वमिहागतः। दत्त्वाशिषं ततो विप्रः प्राह त्वद्देशसंभवः ॥३४॥ अहं सार्द्धं त्वयाऽऽयातस्तदादिश यथोचितम्। राजा च तमुवाचेदं त्वं वटो नूतनाख्यकः ॥३५॥ अपर्याणम् विधायाश्वं पूर्णं तोयं च पायय। अथ विश्राम्य भूपालं वटुको बहुशस्तदा ॥३६॥ तथा कृत्वा तुरङ्गं च समारुह्य महामतिः। जगाम पक्षिघोषेण यत्रास्ते सुन्दरः सरः ॥३७॥ कमलैकविलासेन रथाङ्गाभरणेन च। वनमालालयत्वेन सरो नारायणीं तनुम् ॥३८॥ भग्नवायु-शतोद्योगमक्षारं विषवर्जितम्। नाशितागस्त्यतृष्णार्त्तं प्रसन्नं सागराधिकम् ॥३९॥ पङ्केलग्नश्च तत्राऽश्वः, पृष्ठादुत्तीर्य्य तस्य सः। चतुर्द्दिशं निरीक्ष्याथ तस्यैव सरसस्तटे ॥४०॥ दिव्यवस्त्रपरीधानं दिव्याभरणभूषितम्। कथयन्तं कथां दिव्यां स्त्रीणां सार्थं ददर्श सः ॥४१॥ उपसृत्याथ तं सार्थं तद्वृत्तान्तं निवेद्य च। कृताञ्जलिरिति प्राह वटुर्म्मधुरया गिरा ॥४२॥ एतत्किं क्रियते सार्थं त्वया भक्तिपरेण वै। को विधिः किं फलं चास्य तन्मे ब्रूहि यथातथम् ॥४३॥ श्रुत्वेति तमुवाचेदं सार्थः करुणयाऽन्वितः। शृणु विप्रैकचितेन श्रद्धाभक्तिसमन्वितः ॥४४॥ मायायाः प्रकृतिः शक्तिस्त्रैलोक्येप्य- वधीयते।

व्रतमेतन्महालक्ष्म्याः तस्याःसर्वफलप्रदम् ।।४५।। आकर्णय विधिं चास्य कथ्यमानं मया वटो। भाद्रे मासि सिताष्टम्यामारम्भोऽस्य विधीयते ।।४६।। प्रातः षोडशकृत्वस्तु प्रक्षाल्याङ्घ्रि-करौ मुखम्। तं तु षोडशसंयुक्तं षोडशग्रन्थिसंयुतम् ।।४७।। मालतीपुष्पकर्पूर-चन्दनागरुचर्चितम्। लक्ष्म्यै नमोऽथ मन्त्रेण प्रतिपूज्याभिमन्त्र्य च ।।४८।। धनं धान्यं धरां धर्मं कीर्त्तिमायुर्य्यशः श्रियम्। तुरङ्गान् दन्तिनः पुत्रान् महालक्ष्मि ! प्रयच्छ मे ।।४९।। मन्त्रेणानेन बद्ध्वाथ डोलकं दक्षिणे भुजे । काण्डानि षोडशादाय दूर्वाया अक्षतानि च ।।५०।। एकचित्तः कथां श्रुत्वा पूजयेत्तैस्तु डोरकम्। ततस्तु प्रातरारभ्य यावदस्त्यसिताष्टमी ।।५१।। तावत् प्रक्षाल्य पादौ च मुखं हस्तौ कथां तथा। शृणुयात् प्रत्यहं विप्र तत्संख्यैरक्षतादिभिः ।।५२।। अथ कृष्णाष्टमीं प्राप्य नक्तकाले जितेन्द्रियः। प्रातः शुक्लाम्बरधरो ब्रती पूजागृहं विशेत् ।।५३।। तत्रोपविश्य पूर्वास्यः चारुधौतासनोपरि । श्वेतवर्णं लिखेदष्ट-दलं कमलमुज्ज्वलम् ।।५४।। ऐन्द्रयादिशक्तिसंयुक्तं पार्श्वपत्रं सकेशरम् । कर्णिकायां तत्तो लक्ष्मीं कर्पूरक्षोदपाण्डुराम् ।।५५।। शुभ्रवस्त्रपरीधानां मुक्ताभरणभूषिताम्। पङ्कजासनसंस्थानां स्मेराननसरोरुहाम् ।।५६।। शारदेन्दुकलाकान्तिं मृननेत्रां चतुर्भुजाम्। पद्मयुग्मामभयदां वरव्यग्रकराम्बुजाम् ।।५७।। अभितो गजयुग्मेन सिच्यमानं घटाम्बुना। संचिन्त्यैनां लिखेद् देवीं कर्पूरागरुचन्दनैः ।।५८।। तत आवाहनं कुर्यान्मन्त्रेणानेन स व्रती। महालक्ष्मि समागच्छ पद्मनाभपदादिह ।।५९।। पञ्चोपचारपूजेयं त्वदर्थं देवि संभृता। आलयं ते विकसितं कमलं कमलालये ।।६०।। कमले कमलेऽस्मिँस्त्वं स्थितिं मत्कृपया कुरु। गङ्गादिसलिलाधारं तीर्थमन्त्राभिमंत्रितम् ।।६१।। दूरयात्रा श्रमहरं पाद्यं देवि गृहाण तम्। मलयाचलसंपन्नं नानापन्नगरक्षितम् ।।६२।। शीतलं बहुलामोदं चन्दनं विन्द्यतामिदम्। मिलत्परिमलामोदमत्तालिकुलसंकुलम् ।।६३।। आनन्दि नन्दनोद्यानं पद्मायै कुसुमन्नमः। गन्धसंभारसन्नद्धं पृथुवस्तु समुद्भवम् ।।६४।। सुरासुरनरानन्दं धूपं देवि गृहाण तम्। मार्त्तण्डमण्लाखण्डचन्द्रविम्बाग्नितेजसाम् ।।६५।। निधानं देवि दीपोयं निर्मितस्तव भक्तितः। देवतालयपातालभूतलाधारधान्यजम् ।।६६।। षोडशाकरसंभारं नैवेद्यन्तन्नमः श्रिये। स्नानादिकं विधायापि यतः शुद्धिरवाप्यते ।।६७।। तदेतदाचमनीयम्महालक्ष्मि विधीयताम्। पातालतलसंभूतं वदनाम्भोज-भूषणम् ।।६८।। नानागुणसमाकीर्णं ताम्बूलं देवि ते नमः। तन्तुसन्तानसन्नद्धं कालाकौशलकल्पितम् ।।६९।। सर्वांगाभरणश्रेष्ठं वसनं परिधीयताम्। विष्णोर्वक्षसि पद्मे च शङ्खे चक्रे तथाम्बरे ।।७०।। लक्ष्मि नित्यं यथाऽसि त्वं मम नित्या तथा भव। उत्तार्य्य डोलकं बाहोर्लक्ष्मि पार्श्वे निवेदये ।।७१।। लक्ष्मि देवि गृहाण त्वं डोलकं यन्मया घृतम्। व्रतं संपूर्णतां यातं कृपा 'कार्य्या मयि त्वया' ।।७२।। नानाप्रकारपूजा च कार्य्या तौर्यत्रिकादिना। कथां श्रुत्वा सुवर्णं च दत्वाऽऽचार्य्याय

दक्षिणाम् ।।७३।। एवं निर्वर्त्य विधिवत् पूजनं वटुकश्रियः। चतुर्वर्णेन देया च यथाशक्त्या च दक्षिणा ।।७४।। दीपान् षोडशपिण्डांश्च गोधूमस्य द्विजातये। दत्वा तत्सङ्ख्यकं भक्तं रात्रौ जागरणं चरेत् ।।७५।। चन्द्रोदये च सञ्जाते दद्यादर्घं ततो व्रती। मन्त्रेणानेन देवेन्द्र शङ्खेनाम्बुफलादिना ।।७६।। नमोस्तु ते निशानाथ ! लक्ष्मी-भ्रातर्न्नमोनमः। व्रतं सम्पूर्णतां यातं गृहाणार्घ्रं विधो मम ।।७७।। प्रात-र्विसर्ज्जयेद्देवीम्मत्रेणानेन स व्रती। पङ्कजं देवि सन्त्यज्य मम वेश्मनि संविश ।।७८।। यथा सपुत्रभृत्योऽहं सुखी स्यां त्वत्प्रसादतः। षोड़शाब्दे तु संपूर्णे तदुद्यापनमाचरेत् ।।७९।। विधिना येन तं विप्रं शृणु श्रद्धासमन्वितः। दातव्या धनुरेकैव स्वर्णशृङ्गादिसंयुता ।।८०।। आचार्य्याय सुवर्णं च तथान्नं वसनानि च। यथाशक्ति सुवर्णं वा दत्वा पूर्णं भवेद् व्रतम् ।।८१।। एतत्ते कथितं विप्र व्रतानां व्रतमुत्तमम्। यद्विधानाद्विनायासाल्लभ्यते वाञ्छितं फलम् ।।८२।। कृत्वा त्वं सद्व्रतं विप्र राजानमपि कारय। व्रतमेतत् त्वया विप्र देयं श्रद्धावते परम् ।।८३।। दाम्भिकानां पुरस्तात्तु न प्रकाश्यं कथंचन । नमस्कृत्याथ तं सार्थं पङ्कादुत्थाप्य वाजिनम् ।।८४।। सरसोम्भस्तदादाय पद्मिनीपत्रसञ्चितम् । आरुह्य तुरगं विप्रो राजान्तिकमुपागमत् ।।८५।। निवेद्य तद्व्रतं विप्रो भूपतिं तमकारयत् । अथारुह्य महीपालो बद्धपर्य्याणिनं हयम् ।।८६।। तूर्णन्तस्य प्रभावेण व्रतस्य पुरमागतः। तमायानतं समालोक्य मङ्गलं भूपुरन्दरम् ।।८७।। उत्सवं चक्रिरे पौरास्तौर्य्यत्रिकपुरस्सरम् । चलत्पताकाद्यैर्भातं राजत्कन-कमौलिकम् ।।८८।। पुरं नृत्यदिवाभाति चलद्घंटौघघर्घरम् । अथोत्कलिकया काचिद्धाबतिस्म वराङ्गना ।।८९।। स्खलन्मुक्तालता- जालैश्चतुष्कमिव कुर्वती । काचिद्विमुक्तकेशैका वरेकनयनाञ्जना ।।९०।। काचिन्नितम्बभारार्त्ता काचित् पीनकुचाश्रया । अथाविशन् महीपालो वटुना सहितो गृहम् ।।९१।। पौरनारीजनाक्षिप्तः लाजैः पूरितविग्रहः । अथोर्त्तीर्य्य हयात्तस्माद्वटुबाह्ववलम्बितः ।।९२।। जगाम मङ्गलो राजा चोलदेवीस्थिता यतः । दृष्ट्वाऽथ चोलदेवी सा डोलकं राजबाहुगम् ।।९३।। विमृश्य मनसा क्रुद्धा शंङ्का चक्रे ततस्त्विमाम् । आखेटकस्य व्याजेन गतोऽन्यां वल्लभां प्रतिं ।।९४।। सौभग्याय तया बद्धं डोलकं भूभुजो भुजे । तयैव वटुकश्चायं मां द्रष्टुं प्रेषितो ध्रुवम् ।।९५।। ततो दुर्दैवदुष्टा सा कोपादाच्छिद्य डोलकम् । निश्चिक्षेप महीपृष्ठे स्वसौभाग्यसुखैः सह ।।९६।। न बुवोध च तां राजा निःक्षिपनतीं तु डोलकम् । सामन्तमन्त्रिभृत्याद्यैःकुवन् वार्ताम् वनोद्भवाम् ।।९७।। चिल्लदेव्यास्ततः काचिद् दासी तत्र समागता । तया डालोकमादाय वटुमापृच्छ्य तद्व्रतम् ।।९८।। तद्व्रतस्य निदानं तु स्वस्वामिन्यै निवेदितम् । ततो नूतनमादाय चिल्लादेव्यकरोद् व्रतम् ।।९९।। अथ सम्वत्सरेऽतीते लक्ष्मीपूजादिने नृपः । तौर्य्यत्रिकस्य निस्वानं चिल्लादेवीगृहेऽश्रृणोत् ।।१००।। तमाकर्ण्य महीपालो नूतनं

वटुमब्रवीत् । अहहाद्य दिनो लक्ष्म्या व्रतस्य क्व नु डोलकम् ।।१०१।। इतिपृष्टो नृपं प्राह डोलकत्रोटकक्रमम् । तच्छ्रुत्वा मङ्गलो राजा चोलदेव्यै प्रकुप्य च ।।१०२।। मयाद्य पूजनं कार्यं चिल्लदेवीगृहेऽब्रवीत् । अथ मङ्गलभूपालो वटुबाह्व-वलम्बितः ।।१०३।। जगाम कमलार्चायै चिल्लादेवीगृहं प्रति । अत्रान्तरे महालक्ष्मीर्बृद्धरूपं विधाय सा ।।१०४।। जिज्ञासार्थं गृहं तस्याः चोलदेव्याः समागता । तया दुराशयाऽत्यर्थं लक्ष्मीः साप्यवमानिता ।।१०५।। शशापाथमहालक्ष्मीश्चोलदेवी-मिति क्रुधा । कोलास्या भव घृष्टे त्वं ययाहमपमानिता ।।१०६।। चोलदेवी श्रियः शापात् कोलास्या तत्र साऽभवत् । कोलापुरमितिख्यातं क्षितौ तन्मङ्गलं पुरम् ।।१०७।। अथायाता महालक्ष्मीश्चिल्लदेवीनिकेतनम् । बहुधा चिल्लदेव्या च लक्ष्मीः-सम्मानिताऽर्च्चिता ।।१०८।। वृद्धारूपं परित्यज्य प्रत्यक्षा साऽभवत्तदा । पञ्चोपचारपूजाभिः श्रियं राज्ञी तदाऽर्च्चयत् ।।१०९।। **श्रीरुवाच**–प्रसन्नाभ्यर्च्चनैरेभिः चिल्लदेवी ! वरं वृणु । वरं बव्रे ततो राज्ञी चिल्लदेवी शुभाश्रया ।।११०।। ये करिष्यनित ते देवि व्रतमेतत् सुरेश्वरि । तद्वेश्म न त्वया त्याज्यं यावच्चन्द्र-दिवाकरौ ।।१११।। आद्यारभ्य कथा ह्येषा भूपसम्वधिनी च या । ख्यातिं यातु क्षितौ देवि भक्तिर्भवतु मे त्वयि ।।११२।। सद्भावेन कथामेनां येशृण्वन्ति पठन्ति च । तेषां हि वाञ्छितं सर्वं त्वया कार्य्यं सदैव हि ।।११३।। तथेत्युक्त्वा महालक्ष्मीः तत्रैवान्तरधीयत । अथ मङ्गलभूपालः तत्रागत्य श्रियोऽर्च्चनम् ।।११४।। चक्रे परमया भक्त्या चिल्लदेवी समन्वितः । अथेर्षया दुराचारा चिल्लदेवी गृहं प्रति ।।११५।। चोलदेवी समायाता द्वारिस्थैर्वारिता जनैः । जगाम विपिनं घोरं यत्रासीदङ्गिरा मुनिः ।।११६।। अथालोक्याद्भुताकारा ज्ञानदृष्ट्या विचिन्त्य च । स मुनिः श्रीव्रतं दिव्यं चोलादेवीमकारयत् ।। ११७।। व्रते कृतेऽथ सा जाता चोलादेवी शुभानना । दाक्षिण्ये केलिलीलाभिर्ल्लावण्यैक- निकेतना ।।११८।। ततः कदाचिदागत्य वनमाखेटकं नृपः । मुनेर्वेशमनि तां राजा ददर्श वामलोचनाम् ।।११९।। अथ राजा मुनिं प्राह केयं धन्येति कथ्यताम् । तद् वृत्तान्तं समाख्याय राज्ञे तामर्पयन्मुनिः ।।१२०।। अथागत्य निजं राज्यं चोलदेवी समन्वितः । चिल्लदेवी वरं बव्रे चोलदेवी-समागमम् ।।१२१।। समुद्रस्य यथा गङ्गायमुने मर्त्यमण्डले । तथा मंगलभूपस्य जाते ते बामलोचने ।।१२२।। परस्पराधिकप्रीते तस्य राज्ञे बभूवतुः । चिल्लदेव्या समञ्चोलदेव्या च सहितश्चिरम् ।।१२३।। सप्तद्वीपवतीं पृथ्वीं बुभुजे मङ्गलो नृपः । व्रतस्यास्यैव माहात्म्याद्वटुकः सोऽपि नूतनः ।।१२४।। अभून्मङ्गलभूपस्य मन्त्री तव यथा गुरुः । भुक्त्वा तु सकलान् भोगान् मङ्गलो भूभृताम्बरः ।।१२५।। स पुनः स्वर्गमेत्य भून्नक्षत्रं विष्णुदैवतम् ।। एतत्ते कथितं शुक्रव्रतानां व्रतमुत्तमम ।।१२६।।

यत्कथाश्रवणेनापि लभ्यते वाञ्छितं फलम् । प्रयाग इवतीर्थेषु देवेषु च यथा हरिः ॥१२७॥ नदीषु च यथा गङ्गा व्रतेष्वेतत्तथा व्रतम् । धर्म्मं चार्थं च कामञ्च मोक्षं च यदि वाञ्छसि ॥१२८॥ तदेतत् त्वं व्रतं शक्र कुरु श्रद्धासमन्वितः ॥ व्रतमिदमथ चक्रे नारदेनोपदिष्टं सुपतिरथ तस्माद्वाञ्छितार्थं स लेभे । त्वमपि कुरु तदेतद्धर्म्मसूनो यथास्यादभिमतफलसिद्धिः पुत्रपौत्रादिवृद्धिः ॥१२९॥

*॥ इतिभविष्योत्तरे कृष्णयुधिष्ठिरसम्बादे महालक्ष्मीव्रतकथा समाप्ता ॥*

तौर्य्यत्रिकादि कृत्वाऽन्येभ्योऽपि चतुर्वंशेभ्यो यथाशक्ति दत्वा षोडशादीपान् षोडशगोधूमकृतमोदकपिण्डान् ब्राह्मणेभ्यो दत्वा षोडशपात्रस्थितानि भक्तानि च दत्वा चन्द्रोदये ज्ञाते फलपूर्णशङ्खेनार्घं दद्यात् अनेन मन्त्रेण, नमोस्तु ते निशानाथ लक्ष्मीभ्रातर्न्नमोनमः। व्रतं सम्पूर्णतां यातं गृहाणार्घं विधो मम ॥ एषोऽर्घः नमश्चन्द्राय नमः ॥ पङ्कजं देवि सन्त्यज्य मम वेश्मनि संविश ॥ यथा सपुत्रभृत्योऽहं सुखी स्यां त्वत्प्रसादतः ॥ इतिवरं प्राथ्र्य भवति महालक्ष्मि मयि रमस्वेति विसर्ज्जयेत् । ततः कुशादिकमादाय :—

ॐ अस्यां रात्रो कृतैतन्महालक्ष्मीव्रतकथाश्रवणकर्मप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । इत्युत्सृज्य ब्राह्मणाय प्रतिपादयेत् । ततो ब्राह्मणान् भोजयित्वा सपरिवारः स्वयं भुञ्जीत । इत्येवं क्रमेण षोडशवर्षपर्य्यन्तं कृत्वा उद्यापनं कुर्य्यात्। तदुद्यपनविधिस्तु वक्ष्यते ॥

*॥ इति महालक्ष्मीपूजाविधिः ॥*

# अथ हरेः पार्श्वपरिवर्त्तनविधिः

अथ भाद्रशुक्लैकादश्यां द्वादश्यां वा सायं काले जलाशये हरेः पार्श्वपरिवर्त्तनोत्सवं कुर्य्यात् ॥ तथा च भविष्योत्तरे, प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि । कटिदानं भवेद्विष्णोर्म्महापातकनाशनम् ॥ कटिदानं=पार्श्वपरिवर्तनम् । शयनोत्सववच्चैव देवं नीत्वा जलाशयम्। कटिदानोत्सवं कुर्वे इति संकल्प्य पूजयेत् ॥ एकादश्यां सायं काले नौकोपरि विष्णोः प्रतिमां शालग्रामं वा समानीय यथासम्भवोपचारैः संपूज्य, ॐ देवदेव जगन्नाथ योगगम्य निरञ्जन। कटिदानं करोम्यद्य सायं भाद्रपदे शुभे ॥ इति मन्त्रेण पार्श्वपरीवृत्तिं दक्षिणाङ्गे प्रकल्प्य पुनर्म्महापूजां कृत्वा ॐ वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव। पार्श्वेन परिवर्तस्व सुखं स्वपिहि माधव ॥ त्वयि सुप्ते जगन्नाथ जगत्सुप्तम्भवेदिदम्। प्रबुद्धे त्वयि बुध्येत जगत् सर्वं चराचरम् । इति संप्रार्थ्य फलादिकं समर्प्य सुप्तमितिभावयित्वा स्वगृहमानयेत् ॥ इतिं कृत्यमाहार्णवे उक्तम्।

*॥ इति पार्श्वपरिवर्तनविधिः । भाद्रशुक्लद्वादश्यामिन्द्रपूजनं कुर्य्यात् तत्पद्धतिः राजकृत्येऽन्वेषणीया ॥*

# अनन्तपूजाविधिः

## भाद्रशुक्लचतुर्दश्यामनन्तव्रतम्

इदन्तु उभयदिनव्याप्तौ परेद्युरेवेति ॥ उदये त्रिमुहूर्तापि ग्राह्याऽनन्तव्रते तिथिरिति कालमाधवे । तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम । पौर्णमास्याः समायोगे व्रतं चानन्तकं चरेत् इति भविष्ये ॥ मुहूर्तमपि चेद्भाद्रे पूर्णिमायां चतुर्द्दशी। संपूर्णान्तां विदुस्तस्यां पूजयेद्विष्णुमव्ययमिति नानावचन-स्वरसात्सिद्धवल्लिखितम् ॥ पूर्वदिने कृतैकभुक्तादिसंयमो व्रती तद्दिने प्रातः कृतस्नानादिनित्यक्रियः जलाशये प्राङ्गणे वा तामपात्रेण गन्धपुष्पाक्षतयुतार्घ- मादाय उत्तिष्ठन् ॐ भगवन् सूर्य्य भगवत्यो देवता अद्यादिचतुर्दशवर्षाणि यावत् प्रतिभाद्रशुक्लचतुर्दश्यामनन्तव्रतमहमाचरिष्यामीति निवेद्य ततः पूजास्थानमागत्य परिकृतगोमयोपलिप्तभूमौ जलपूर्णकलशं संस्थाप्य तत्राम्रपल्लवं दत्वा दर्भमयं चतुर्भुजमनन्तं संस्थाप्य पूजासामग्रीमासादयेत् ॥ ततः कुशत्रयतिलजलान्यादाय ॐ अद्य भाद्रमासीय शुक्लपक्षीयचतुर्दशीमारभ्य चतुर्दशवर्षाणि यावत् प्रतिभाद्रशुक्लचतुर्दश्याममुकगोत्रस्यामुकशर्मणः अमुकीदेव्याः वा परमा-नन्तप्रीतिपूर्वकैहिकबहुगोधनधान्यरत्नादिमत्व-कल्पान्तस्थायिपुनर्वसुनक्षत्रभवन-कामनया अनन्तव्रतमहङ्करिष्ये इति संकल्प्य पूजामारभेत ॥ तत्र ताम्रपात्रेऽष्टदल-पद्मं विलिख्य तदुपरि शालग्रामं कुंकुमाक्तसुशोभितचतुर्दशग्रन्थियुतडोरकमुपस्थाप्य तिलेन ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञथ्ठंसमिमं दधातु विश्वेदेवास इह मादायन्तामोम्प्रतिष्ठ । ॐ भगवन्! अनन्त ! इह सुप्रतिष्ठितो भव इति प्राणप्रतिष्ठां कृत्वा ; वामेन पुष्पमेकं गृहीत्वा करकच्छपिकां बद्ध्वा ध्यायेत् ॥ फणासप्तान्वितं देवं चतुर्बाहुं किरीटिनम्। नवाम्रपल्लवाभासं पिङ्गलश्मश्रुलोचनम् ॥ पीताम्बरधरं देवं शंखचक्रगदाधरम् । कराग्रे दक्षिणे पद्मं शङ्खंतस्याप्यधः करे ॥ चक्रमूर्द्धवे तथा वामे गदां तत्याप्यधः करे। दधानं सर्वलोकेशं सर्वाभरणभूषितम् ॥ क्षीराब्धिमध्ये श्रीमन्तमनन्तं चिन्तयेद्धरिम् ॥ इति ध्यात्वा, अक्षतमादाय ॐ आगच्छानन्त देवेश तेजोराशे जगत्पते। क्रियमाणां मया पूजां गृहाण सुरसत्तम ॥ ओम् अनन्त इहागच्छ, इह तिष्ठेत्यावाह्य आसनमादाय ओम् नानारत्नसमायुक्तं कार्तस्वरविभूषितम्। स्वासनं देवदेवेश गृहाण पुरुषोत्तम ॥ इदमासनम् ॥ॐ गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् तोयमेतत् सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम्, इदं पाद्यम्० ॥ ॐ अनन्तानन्तदेवेश अनन्तगुणासागर। अनन्तानन्तरूपोसि गृहाणार्घ्यं नमोस्तु ते ॥ एषोर्घः०॥ गङ्गाजलं समानीतं सुवर्णकलशे स्थितम्। आचम्यताम् हृषीकेश त्रैलोक्यव्याधिनाशन ॥ इदमाचमनीयम्०। ॐ वाञ्छितं कुरु मे देव दुष्कृतञ्च निवारय । कुरुष्व मे दयां देव त्रैलोक्यार्तिभयापह ॥

एष मधुपर्कः० ॥ ॐ कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम्। आचम्यतां जगन्नाथ मया दत्तं सुभक्तितः ॥ इदमाचमनीयम्० ॐ शर्करामधुसम्मिश्रं पयो दधि घृतं तथा। पञ्चामृतेन स्नपनं गृहाण जगतः पते ॥ इदं पञ्चामृतस्नानीयम्० ॥ ॐ गङ्गा च यमुना चैव नर्म्मदा च सरस्वती। तापी पयोष्णी रेवा च ताभ्यः स्नानार्थमाहृतम् ॥ तोयमेतत् सुखस्पर्शं स्नानीयं प्रतिगृह्यताम् । इदं स्नानीयम्० ॥ ॐ पीताम्बरयुगं देव सर्वकामसमृद्धये। मया निवेदितं भक्त्या गृहाण सुरसत्तम इदं पीतवासोयुगं बृहस्पतिदैवतम्० ॥ ॐ दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात् ॥ ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम। इमे सोत्तरीययज्ञोपवीते बृ०दै० ॥ ॐ कस्तूरीकुंकुमोपेतं कर्पूरेण सुवासितम्। गन्धं दास्यामि देवेश अनन्ताय नमोनमः ॥ इदमनुलेपनम्० ॥ ॐ तिला यवाः सुरश्रेष्ठ कम्बुजाश्च सुशोभनाः। वासुदेव जगन्नाथ प्रीत्यर्थं स्वीकुरु प्रभो ॥ एते तिलयवाः० । ॐ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो। मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ॥ एतानि पुष्पाणि० ॥ पुनरनेनैव इदं माल्यम्० ॥ क्वचिदनन्तसंसारेति पुष्पदानमन्त्रः। एतानि दूर्वादलानि०। एतानि तुलसीपत्राणि० ॥ ॐधूपोयं ते महाभाग दशाङ्गोऽगुरुणा सह। मया दत्तः प्रभो विष्णो गृह्यतां सुरनायक ॥ एष धूपः० ॥ ॐ दीपं गृहाण भोऽनन्त जाज्वल्यमानमद्भुतम्। त्वं गृहाण सदा देव रक्षा माम् घोरसागरात् ॥ कर्पासवर्तिसंयुक्तं वह्निना योजितं मया। दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥ एष दीपः०। ॐअन्नं चतुर्विधं स्वादु पयोदधिघृतं तथा । नानाव्यञ्जनसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ एतानि नानाविधनैवेद्यानि० ॥ ॐनानाभक्ष्यसमायुक्तं चतुर्दशफलैर्युतम्। भक्त्या संपादितं देव सापूपं गृह्यतां विभो। नैवेद्यं गृह्यतां देव भक्तिर्मे ह्यचलां कुरु। ईप्सितं मे वरं देहि परत्र च परां गतिम् ॥ एतानि चतुर्दशविधफलसहितनानाविध पक्वान्नादीनि० ॥ पूर्वोक्तमन्त्रेण इदमाचनीयम्०। ॐ इदं फलं मया देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्। कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ इदं ताम्बूलम्०। इदमाचमनीयम्० ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शातिं प्रयच्छ मे ॥ इदं दक्षिणारूपं द्रव्यम् ॐ भगवते श्रीअनन्ताय नमः ॥ ॐ मालतीमल्लिका-पुष्पैर्न्नागचम्पकसंयुतैः। पुष्पाञ्जलिं गृहाणेदम् पादाम्बुजयुगार्पितम्। एष पुष्पाञ्जलिः ॐअनन्ताय नमः ३। ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च। त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् इदमारार्तिकम् ॐ भगवते श्री अनन्ताय नमः ॥

ॐ भूर्भुवः स्वः बलभद्र इहागच्छ इह तिष्ठेत्यावाह्य पाद्यादीनि ॥ एषोर्घः ॥ इदमनुलेपनम् ॥ एते तिलाः ॥ एतानि पुष्पाणि ॥ इदं माल्यम् ॥ इदं वस्त्रम् ।

एतानि नानाविधनैवेद्यानि इदमाचमनीयम् ।। एष पुष्पाञ्जलिः ।। ॐ बलभद्राय नमः इति पूजयेत् ।। ॐ बलभद्रं महात्मानं हलिनं लाङ्गलायुधम्। कादम्बरीमदोन्मत्तम् नमामि बलदेवकम्।। इति प्रणमेत् ।। ततः ॐ भूर्भुवः स्वः**सुमन्तो** इहागच्छ इहतिष्ठ।। एतानि पाद्यादानि ॐ **सुमन्तवे** नमः इत्यनेनोक्तोपचारैः संपूजयेत्।। ॐ **दीक्षे** इहा गच्छ इह तिष्ठ।। ॐ **दीक्षायै** नमः इत्यनेन पाद्यादिभिः पूजयेत्। ॐ इन्द्रादिदशदिक्पाला इहागच्छत इह तिष्ठत। एतानि पाद्यादीनि इन्द्रादिदशदिक्पालेभ्यो नमः । एवंगन्धादिभिरर्चयेत्। ॐ भूर्भुवःस्वः साधिदैवतस-प्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहाः इहागच्छत इह तिष्ठत। एतानि पाद्यादीनि ॐ साधिदैवत-सप्रत्यधिदैवत-विनायकादिपञ्चकसहितनवग्रहेभ्यो नमः। एवं गन्धादिभिः पंचोपचारैः पूजयेत् ।। ततश्चतुर्दशग्रन्थिषु क्रमेण नामकरणम् ।। ॐ अनन्तोऽसि।। ॐपुरुषोत्तमोऽसि। ॐ हृषीकेशोसि।। ॐ पद्मनाभोसि ।। ॐ माधवोसि । ॐ वैकुण्ठोसि।। ॐ श्रीधरोसि। ॐ त्रिविक्रमोसि। ॐ मधु-सूदनोसि। ॐ वामनोसि। ॐ केशवोसि। नारायणोऽसि ॐ दामोदरोसि। ॐ गोविन्दोसि।। १४।। एतान् प्रत्येकमावाह्य प्रणवादि-नमोन्त-चतुर्थ्यन्तपदेन पंचोपचारैः पूजयेत्। इति बहुनिबन्धस्वरसः।। ततो यानि कानीत्यादिना त्रिः प्रदक्षिणीकृत्य दण्डवत्प्रणम्य प्रार्थयेत् :-

ॐ अनन्तसंसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव। अनन्तरूपिन् विनियोजयस्व अनन्तरूपाय नमोनमस्ते ।।१।। ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये महस्रपादाक्षि-शिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटी-युगधारिणे नमः ।।२।। हृदिस्थं सर्वदेवानामिन्द्रियाणां गुणातिगम्।। सर्वपापहरं देवं प्रणामामि जनार्दनम् ।।३।। अनन्तरूपेण बिभर्षि पृथ्वीमनन्तलक्ष्मीं विदधासि तुष्टः। अनन्तभोगान् प्रददासि पुष्टो ह्यनन्तमोक्षं कुरुषे प्रहृष्टः ।।४।। प्रणमामि हृषीकेशं वासुदेवं जगद्गुरुम् । सृष्टिस्थितिविनाशानां कर्तारं प्रणमाम्यहम् ।।५।। राक्षसानामरिं नौमि, नौमि दैत्यारिमर्द्दकम् । जगतां हितकर्तारं नौमि पंकेरुहेक्षणम् ।।६।। जन्म जन्म कृतं यच्च बाल्ययौवनवार्द्धके । वृद्धिमायातु तत्पुण्यं पापं हर हलायुध ।।७।। भक्तिहीनं क्रियाहीनं मन्त्रहीनं यदर्च्चितम् ।। यथोद्दिष्टामिमां पूजां परिपूर्णं कुरुष्व मे ।।८।। पापोऽहं पापकर्म्माहं पापात्मा पापसम्भवः । त्राहि मां पुण्डरीकाक्ष हरे संसारसागरात् ।।९।। अनन्त कामान् मे देहि सर्वकामफलप्रद । अनन्ताय नमस्तुभ्यं पुत्रपौत्रान् प्रवर्द्धय ।।१०।। अनन्तः सर्वकामानामधिपः सर्वकामदः । व्रतेनानेन सुप्रीतो भवत्विह महान् मम ।।११।। नमस्ते देवदेवेश नमस्ते धरणीधर । नमस्ते कमलाकान्त नमस्ते ह्यमरप्रिय ।।१२।। नमस्ते सर्वभूतेश वासुदेवनमोस्तु ते ।। इति प्रार्थ्य, प्रथमं जीर्णडोरकं स्पृशन् ॐ सम्वँत्सरकृतां पूजां संपाद्य विधिवन्मम ।

व्रजेदानीं सुरश्रेष्ठ ह्यनन्तफलदायक ।। न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि । सर्वाणि चैतानि मम क्षमस्व प्रयाहि तुष्टः पुनरागमाय ।। इति जीर्णडोरकं विसृज्य नवीनडोरकमादाय तैजसपात्रे[1] गोक्षीरं कृत्वा जीर्णेन मन्थयन् **'किं मन्थसे'** ? इत्यन्येनोक्ते, **क्षीरनिधिमिति** तं वदेत् ।। पुनः **किं मृग्यसे** ? इत्यन्येनोक्ते, **अनन्तमिति** वदेत् ।। ततः **प्राप्तस्त्वयेत्यन्येनोक्ते 'प्राप्तो मया'** इत्युक्त्वा शिरसि निधाय प्रणम्य विसर्जयेत् ।। नूतनडोरकन्तु ॐ अनन्ताय नमस्तुभ्यं सहस्रशिरसे नमः । नमोस्तु पद्मनाभाय नागानां पतये नमः ।। अनन्त संसार महासमुद्रे मग्नान् समभ्युद्धर वासुदेव । अनन्तरूपे विनियोजयस्व ह्यनन्तसूत्राय नमोनमस्ते इति प्रार्थ्य, ॐ संसारसागरगुहासु सुखं विहर्तुं वाञ्छति ये कुरुकुलोद्भव शुद्धसत्त्वाः। संपूज्य च त्रिभुवनेशमनन्तदेवं बध्नन्ति दक्षिणकरे बरडोरकन्ते ।। ॐ इदं डोरकमनन्ताख्यं चतुर्द्दशगुणात्मकम् । सर्वदेवमयं विष्णो स्वकरे धारयाम्यहम् ।। इत्यनेन पुरुषो दक्षिणकरे, स्त्रीचेत् वामकरे बध्नीयात् ।।

ततः कथां श्रुत्वा प्रणम्य पुनरुक्तमन्त्रेण पुष्पाञ्जलिं दत्वा पादोदकं पात्रान्तरे धृत्वा ॐ यान्तु देवगणाः सर्वे पूजामादाय मामकीम् । इष्टकामप्रसिध्यर्थं पुनरागमनाय च । ॐ अनन्तादिसर्वदेवताः पूजिताःस्थ क्षमध्वं स्वस्थानं गच्छत ।। इति विसृज्य कुशादिकमादाय ॐ अद्य कृतैतदनन्तपूजनतत्कथाश्रवणकर्मप्रतिष्ठार्थमेतावद्-द्रव्यमूल्यक-हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ।। इति दक्षिणां दत्वा यथाशक्ति पक्वान्नादिभिर्ब्राह्मणान् भोजयित्वा स्वयमपि भुञ्जीत ।।

## अथ कथा

ॐ अरण्ये वर्तमानास्ते पाण्डवाः दुःखकर्शिताः । कृष्णं दृष्ट्वा महात्मानं प्रणिपत्येदमब्रुवन् ।।१।। **पाण्डवा ऊचुः**—वयं दुःखाय संजाताः पृथिव्यां पुरुषोत्तम । कथं मुक्ति र्वदास्माकमनन्तदुःखसागरात् ।।२।। **श्रीकृष्ण उवाच**—अनन्तव्रतमस्त्येकं तिथावस्यामनुत्तमम् ।। सर्वपापहरं नृणां स्त्रीणां चैव युधिष्ठिर ।।३।। शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेत् । तस्यानुष्ठानमात्रेण सर्वपापाद्व्यपोहति ।।४।। **युधिष्ठिर उवाच**—कृष्ण कोऽयमनन्तेति प्रोच्यते यस्त्वया विभो। किं शेषनाग आहोस्विदनन्तस्तक्षकः स्मृतः ।।५।। परमात्माऽथवाऽनन्तः उताहो ब्रह्म उच्यते । क एषोऽनन्तसंज्ञो वै तथ्यं मे ब्रूहि केशव ।।६।। **श्रीकृष्ण उवाच**—अनन्त इत्यहं पार्थ मम रूपं निबोध वै । आदित्येन्द्वादिचारेण यः काल उपपद्यते ।।७।। कालाकाष्ठा-मुहूर्तादि दिनरात्रिशरीरवान् । पक्षमासर्तुवर्षादि-युगकल्पव्यवस्थाया ।।८।। योऽयं कालो मयाख्यातः सोऽनन्त इति कीर्त्यते । सोऽहं कालो ऽवतीर्णोऽत्र भुवो

१. धातुनिर्मितपात्रं।

भारावतारणात् ।।९।। दानवानां विनाशाय वसुदेवकुलोद्भवः । अनन्तं विद्धि मां पार्थ कृष्णं विष्णुंहरिं शिवम् ।।१०।। ब्रह्माणं भास्करं शेषं सर्वव्यापकमीश्वरम् । विश्वरूपं महाकायं सृष्टिसंहारकारकम् ।।११।। प्रत्ययार्थं मया रूपं फाल्गुनाय प्रदर्शितम् । सर्वमेव महाबाहो योगिध्येयमनुत्तमम् ।।१२।। विश्वरूपमनन्तञ्च यस्मिन्निन्द्राश्चतुर्दश । वसवोऽष्टौ द्वादशार्का रुद्रा एकादशामलाः ।।१३।। सप्तर्षयः समुद्राश्च पर्वताः सरितो द्रुमाः । नक्षत्राणि दिशो भूमिः पातालं भूर्भुवः स्वह ।।१४।। मा कुरुष्वात्र सन्देहं सोऽहं पार्थ न संशयः । **युधिष्ठिर उवाच**—अनन्तव्रतमाहात्म्यं विधिं विधिविदां वर ।।१५।। किं पुण्यं किं फलं यत् स्यादनुष्ठानवतां नृणाम् । केन वाऽऽदौ पुरा चीर्णं मर्त्ये केन प्रकाशितम् ।।१६।। एवं सविस्तरं कृष्ण ब्रूह्यनन्तव्रतं मम । **श्रीकृष्ण उवाच**—आसीत् पुरा कृतयुगे सुमन्तुर्नाम वै द्विजः ।।१७।। वसिष्ठगोत्रे चोत्पन्नः सुस्वरूपां भृगोः सुताम् । दीक्षां नामोपयेमे तां वेदोक्तविधिना नृप ।।१८।। तस्याः कालेन सञ्जाता दुहिताऽनन्ददायिनी । शीला नाम सुशीला सा न्यवसन् मातृसद्मनि ।।१९।। ततः कालेन कियता ज्वरदाहेन पीड़िता । विननाश नदीतोये ययौ स्वर्गं पतिव्रता ।।२०।। सुमन्तुस्तु ततो यज्ञे धर्मपुंसः सुतां पुनः। उपयेमे विधानेन कर्कशां नाम नामतः ।।२१।। दुःशीलां कर्कशां चण्डीं नित्यं कलहकारिणीम्। साऽपि शीला पितुर्गेहे गृहार्चनरता बभौ ।।२२।। कुड्य-स्तम्भगृहद्वारेदेहलीतोरणादिषु। वर्णकैश्चित्रमकरोन्नीलपीतसितासितैः ।।२३।। स्वस्तिकैः शङ्खपद्मैश्च अर्चयन्ती पुनः पुनः । ततः काले बहुतिथे गते मारदशानुगा ।।२४।। पित्रा दृष्टा तदा तेन स्त्रीचिह्ने यौवने स्थिता। कस्मै देया मया शीला विचार्य्यैवं सुदुःखितः ।।२५।। एतस्मिन्नेव काले तु कन्यार्थी द्विजपुंगवः। सुमन्तोश्च गृहं प्राप्तः कौण्डिल्यो गतकल्मषः ।।२६।। पिता ददौ द्विजेन्द्राय कौण्डिल्याय शुभे दिने। गृह्योक्तविधिना पार्थ विवाहमकरोत्तदा ।।२७।। निर्वर्त्यौद्वाहिकं सर्वं प्रोक्तवान् कर्कशां द्विजः। किञ्चिद् दायादिकं देयं जामातुः परितोषकम् ।।२८।। तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोञ्छाय गृहमण्डनम्। पेटायां सुस्थितं कृत्वा स्वगृहं गम्यतामिति ।।२९।। भोज्यावशिष्टचूर्णेन पाथेयञ्च चकार सा। कौण्डिल्योपि विवाह्यैनां पथि गच्छन्शनैः शनैः ।।३०।। शीलां सुशीलामादाय नवोढां गोरथेन हि। मध्याह्ने भोज्यबेलायां समुत्तीर्य्य सरित्तटे ।।३१।। ददर्श शीला स्त्रीणां सा समूहंरक्तवाससाम्। चतुर्दश्यामर्चयन्तं भक्त्या देवं जनार्दनम् ।।३२।। उपगम्य शनैः साऽथ प्रपच्छ स्त्रीकदम्बकम्। आर्य्याःकिमेतन् मे ब्रूत किन्नाम व्रतमीदृशम् ।।३३।। ता उचुर्य्योषितस्तां तु शीलां शीलविभूषणाम्। अनन्तव्रतमेतद्धि व्रतेऽनन्तस्तु पूज्यते ।।३४।। साऽब्रवीदहमप्येतत् करिष्ये व्रतमुत्तमम्। विधानं कीदृशं तत्र किं दानं कोऽत्र पूज्यते ।।३५।। **स्त्रिय ऊचुः**—शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे

भवेत् । कृत्वा दर्भमयं देवं सर्व्वालङ्कार-भूषितम् ।।३६।। शीले सदन्नप्रस्थस्य पुन्नागसंस्कृतस्य च। अर्धं विप्राय दातव्यमर्द्धमात्मनि भोजनम् ।।३७।। शक्त्या च दक्षिणां दद्याद्वित्तशाठ्य-विवर्जिताम्। कर्त्तव्यं तु सरित्तीरे विधिनानेन मानिनि ।।३८।। स्नात्वा ऽनन्तं समभ्यर्च्च्य गन्धलेपनधूपनैः। पुष्पमाल्यैः सुगन्धैश्च नैवेद्यैः पीत-वस्त्रकैः ।।३९।। तस्याग्रतो दृढं सूत्रं कुंकुमाक्तं सुडोरकम् । चतुर्द्दशग्रन्थियुतं वामे करतले न्यसेत् ।।४०।। मन्त्रेणानेन सुश्रोणि ! यावद्वर्षं समाप्यते ।।४१।। अनन्त संसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव। अनन्तरूपे विनियोजयस्व अनन्तसूत्राय नमो नमस्ते ।।४२।। अनेन डोरकं बद्ध्वा भोक्तव्यं स्वस्थमानसैः। ध्यात्वा नारायणं देवमनन्तं विश्वरूपिणम् ।। भुक्त्वा चान्तो व्रजेद्वेश्म भद्रे प्रोक्तं व्रतं तव ।।४३।। योऽनन्तस्य व्रतं कुर्याद् वर्षाणि नव पञ्च च। सर्वान् कामानवाप्नोति विष्णुलोकंच गच्छति ।।४४।। **श्रीकृष्ण उवाच**—एवमाकर्ण्य राजेन्द्र प्रहृष्टेनान्तरात्मना।साऽपि चक्रे व्रतं शीला करे बद्ध्वा सुडोरकम् ।।४५।। पाथेयमर्द्धं विप्राय दत्वा भुक्तं स्वयं तथा। पुनर्जगाम संहृष्टा गोरथेन पतेर्गृहम् ।।४६।। भर्त्रा सहैव शनकैः प्रत्ययस्तक्षणादभूत्। तेनानन्तव्रतेनास्याः बभौ गोधन संकुलम्।।४७।। गृहाश्रमं श्रिया जुष्टं धनधान्यसमन्वितम्। कुलमव्याकुलं रम्यं सर्वत्रातिथिपूजनम् ।।४८।। सापि माणिक्यकाञ्चीभिर्मुक्ताहारविभूषिता। दिव्यवस्त्रैश्चसंछन्ना सावित्रीप्रतिमाऽभवत् ।।४९।। कदाचिदुपविष्टायाः दृष्टो बद्धः सुडोरकः। शीलाया हस्तमूले तु भर्त्रानेन द्विजन्मना ।।५०।। श्रीमदान्धेन कौरव्य साक्षेपं त्रोटितो रुषा। कोऽनन्त इतिमूढेन जल्पता पापकारिणा ।।५१।। क्षिप्तो ज्वालाकुले वह्नौ,हा हा कृत्वा प्रधाविता। शीला गृहीत्वा सूत्रञ्च क्षीरमध्ये समाक्षिपत् ।।५२।। तेन कर्मविपाकेन तस्य सा श्रीः क्षयं गता। गोधनं तस्करैर्न्नीतं गृहं मुष्टमकाञ्चनम् ।।५३।। यद्यथैवागतं तत्र तत्रैव च विनिर्गतम्। स्वजनैः कलहो मित्रैर्वञ्चनम् भर्जनं तथा ।।५४।। अनन्ताक्षेपदोषेण दारिद्र्यं पतितं गृहे । न कश्चिद्वदतो लोके तेन सार्द्धं युधिष्ठिर ।।५५।। शरीरेणातिसन्तप्तो माययाप्यतिदुःखितः । निर्वेदं परमं प्राप्तः कौडिल्यः प्राह तां प्रियाम् ।।५६।। शीले किमेतदुत्पन्नं सहसाऽश्रीककारकम् । येनातिदुःखतोऽस्माकं जातः सर्वधनक्षयः ।।५७।। स्वजनैः कलहो गेहे न कश्चिन्मे प्रभाषते । शरीरे तीव्रसन्तापः खेदश्चेतसि दारुणः ।।५८।। जानासि दुर्न्नयः कोऽत्र किं कृतं दुःकृतं भवेत्। प्रत्युवाच हि तं शीला सुशीला शीलमण्डना ।।५९।। प्रायोऽनन्तकृताक्षेप-पापसम्भवजं फलम् । भविष्यति महाभाग तदर्थं यत्नमाचर ।।६०।। एवमुक्तः स विप्रर्षिर्जगाम मनसा हरिम् । निर्वेदी निर्जगामाथ कौण्डिल्यः प्रयतो वनम् ।।६१।। तपसे कृतसंकल्पो वायुभक्ष्यो द्विजोत्तमः । मनस्याधाय चानन्तं क्व द्रक्ष्यामि ततो विभुम् ।।६२।। यस्य प्रसादात् संजातमाक्षेपान्निर्धनं गतम् । धनादिकं ममातीव

सुखदुःखप्रदायकम् ॥६३॥ एवं सञ्चिन्तयन्सोऽथ बभ्राम विजने वने । तत्रापश्यन्महाचूतं फलितं पुष्पितं तथा ॥६४॥ वर्जितं पक्षिसंघातैः कीकटे विभवं यथा । तमपृच्छत्त्वयानन्तः कश्चिदद्दृष्टो महातरो ॥६५॥ ब्रूहि सौम्य ममातीव दुःखं चेतसि वर्त्तते । सोऽब्रवीद्भद्र नानन्तं वेद्मि द्रक्ष्यामि वा द्विज ॥६६॥ एवं निराकृतस्तेन जगामाथ द्विजस्ततः । क्व द्रक्ष्यामीति गच्छन् स गाम-पश्यत्सवत्सकाम् ॥६७॥ तृणमध्ये प्रधावन्तीमितश्चेतश्च पाण्डव । अपृच्छद्धेनुके ब्रूहि यद्यनन्तस्त्वयेक्षितः ॥६८॥ सा चोवाचाथ कौण्डिल्यं नानन्तं वेद्म्यहंद्विज । ततो व्रजन् ददर्शाग्रे रम्यं पुष्करिणीद्वयम् ॥६९॥ अन्योन्यजल-कल्लोलबीचिपर्य्यङ्क-सङ्गमम् । छन्नं किंजल्कह्लार-कमलोत्पलमण्डलैः॥७०॥ सेवितं भ्रमरैर्हंसैश्चक्रैः कारण्डवैर्वकैः। ते चापृच्छद्द्विजोऽनन्तो भवतीभ्यां न लक्षितः ॥७१॥ जल्पतस्ते द्विजश्रेष्ठ नानन्तं विद्महे किल। ददर्शाथ वने तस्मिन् गर्द्दभं कुञ्जरं तथा ॥७२॥ तावथ तौ द्विजेनोक्तौ ऊचतुर्नैव विद्महे। एवं सम्यक् क्व द्रक्ष्यामि तत्रैव भुवि तादृशः ॥७३॥ कौण्डिल्यो विह्वलीभूतो निराशो जीविते नृप। दीर्घमुष्णञ्च निश्वस्य पपात भुवि भारत ॥७४॥ प्राप्य संज्ञामनन्तेतिजल्पन्नुत्थाय स द्विजः। नूनंबुत्यक्ष्याम्यहं प्राणानिति संकल्प्य चेतसि ॥७५॥ उत्थायोब्दुध्य वृक्षेऽस्मिन् तावद् भरतसत्तम । कृपयाऽनन्तदेवाऽस्य प्रत्यक्षं समजाऽयत। वृद्धब्राह्मणरूपेण एह्येहि चेत्युवाच तम्। प्रगृह्य दक्षिणे पाणौ गुहामावेश्य तं स्वतः ॥७७॥ स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युताम्। तस्यां निविष्टमात्मानं दिव्यसिंहासने शुभे ॥ ७८॥ पार्श्वस्थं शंखचक्रञ्च गदागरुड़शोभितम्। दर्शयामास विप्राय विश्व-रूपमनन्तकम् ॥७९॥ विभूतिभेदैश्चानन्तैरनन्तममितौजसम्। तं दृष्ट्वा तादृशं रूपमनन्तमपराजितम् ॥८०॥ वेपमानो जगादोच्चैर्जयशब्दपुरःसरम्। जय कृष्ण जयानन्त विश्वमूर्त जयाव्यय ॥८१॥ जय सर्वैककर्त्रे च संहर्त्रे च जयाच्युत। अनादिनिधनाव्यक्त जय नित्य जयाक्षर ॥८२॥ जय सर्वग सर्वात्मन् सर्वस्य हृदयेशय। एवमादि प्रणम्याथ पुनरप्याह तं द्विजम् ॥८३॥ पापोऽहं पापकर्माहं पापात्मा पापसम्भवः। त्राहि मां पुण्डरीकाक्ष सर्वपापहरो भव ॥८४॥ तच्छ्रुत्वाऽनन्तदेवश्च प्राह सुस्निग्धया गिरा। मा भैस्त्वं ब्रूहि विप्रेन्द्र यत्ते मनसि वर्तते ॥८५॥ **कौणिडल्य उवाच**—मया भूत्या विलुप्तेन त्रोटितोऽनन्तडोरकः। तेन पापविपाकेन भूतिर्म्मे प्रलयं गता ॥८६॥ स्वजनैः कलहो गेहे न कश्चिन् मां प्रभाषते। निर्वेदाद् भ्रमितोऽरण्ये तव दर्शनकांक्षया ॥८७॥ कृपया देवदेवश्च त्वयाऽस्माकं प्रदर्शितः। तस्य पापस्य मे शान्ति कारुण्याद् वक्तुमर्हसि ॥८८॥ **श्रीकृष्ण उवाच**—तच्छ्रुत्वाऽनन्तदेवेश उवाच द्विजसत्तम्। भक्त्या माता पिता देवः किन्न दद्यात् युधिष्ठिर ॥८९॥ **अनन्त उवाच**—स्वगृहं गच्छ कौण्डिन्य मा विलम्बं

करिष्यसि। वरानन्तव्रतं कुर्य्यान्नव वर्षाणि पञ्च च ।।९०।। ततः पापविशुद्धात्मा प्राप्स्यसे ऋद्धिमुत्तमाम्। पुत्रपौत्रान् समुत्पाद्य भुक्त्वा भोगान् मनोऽनुगान् ।।९१।। अन्ते च स्मरणं प्राप्य मामुपैष्यस्यसंशयम्। अन्यच्च ते वरं दद्मि सर्व-लोकोपरकारम् ।।९२।। इदमाख्यानकं श्रुत्वा शीलानन्तव्रतादिकम्। करिष्यति नरो यस्तु कुर्वन् व्रतमिदं शुभम् ।।९३।। सोऽचिरात्पापनिर्मुक्तः प्राप्नोति परमां गतिम्। गच्छ विप्र गृहं शीघ्रं यथा येनागतोह्यसि ।।९४।। **कौण्डिल्य उवाच**–स्वामिन् पृच्छामि मे ब्रूहि किञ्चित्कौतूहलं मया। अरण्ये भ्रमता दृष्टं न तद्वेद्मि जगद्गुरो ।।९५।। स चूतवृक्षस्तस्मिन् गौरेका च बृषभस्तथा।। कमलोत्पलकह्लारैः शोभितं सुमनोहरम् ।।९६।। मया दृष्टं महारण्ये किं तत् पुष्करिणीद्वयम्। कः खरः कुञ्जरःकोऽसौ कोऽसौ बृद्धो द्विजोत्तमः ।।९७।। **अनन्त उवाच**–स चूतवृक्षो विप्रोऽसौ वेदार्थत्वविशारदः। सोऽर्थितोऽपि न वै प्रादाच्छिष्येभ्यस्तरुताङ्गतः ।।९८।। सा गौः वसुन्धरा दृष्टा सुफला या त्वया द्विज। वृषधर्म्मस्त्वया दृष्टः शाद्वलं सत्यमाश्रितः ।।९९।। धर्माधर्मव्यवस्थानं यद्यत्पुष्करणीद्वयम्। ब्राह्मण्यौ के चिदप्यास्तां भगिन्यौ ते परस्परम् ।।१००।। धर्माधर्मादि यत्किञ्चित् तन्निवेदयतो मिथः। विप्राय न क्वचिद् दत्तमतिथौ दुर्बलेपि वा ।।१०१।। भिक्षा दत्ता न चार्थिभ्यो तेन पापेन कर्मणा। बीचीकल्लोलमालाभिर्गच्छतस्ते परस्परम् ।।१०२।। खरः क्रोधस्त्वया दृष्टः कुञ्जरो रोग उच्यते। ब्राह्मणोऽसावनन्तोऽहं गुहासंसारगह्वरे ।।१०३।। इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत। स्वप्नप्रायञ्च तद्दृष्ट्वा ततः स्वगृहमागतः ।।१०४।। कृत्वाऽनन्तव्रतं सम्यक् नव वर्षाणि पञ्च च। भुक्त्वा सर्वमनन्तेन यथोक्तं पाण्डुनन्दन ।।१०५।। अन्ते च स्मरणं प्राप्य गतोऽनन्तपुरं द्विज। तथा त्वमपि राजेन्द्र कथां शृण्वन् व्रतं कुरु ।।१०६।। प्राप्स्यसे चिन्तितं सर्वमनन्तस्य वचो यथा। यच्चतुर्दशमे वर्षे फलं प्राप्तं द्विजन्मना ।।१०७।। वर्षैकेन तदाप्नोति कृत्वा साख्यानकं व्रतम्। यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।।१०८।। येऽपि शृण्वन्ति सततं तथान्ये च पठन्ति ये। तेऽपि पापविनिर्मुक्ताः प्राप्स्यन्ति च हरेः पदम् ।।१०९।। संसारगह्वरगुहासु सुखं विहर्त्तुं वाञ्छन्ति ये कुरुकुलोद्वह शुद्धचित्ताः। संपूज्य च त्रिभुवनेशमनन्तदेवं बध्नन्ति दक्षिणकरे वरडोरकं ते ।।११०।।।।

*।। इति भविष्योत्तरे अनन्तव्रतकथा समाप्ता ।।*

# अथ भाद्रीयपौर्णमास्यामगस्त्यार्घदानविधिः

अगस्त्यार्घदानं सौरेण, सिंहराशौ विधानात्।। यथा ब्रह्मवैवर्त्तेः–अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्द्दिनैः। अर्घन्दद्युरगस्त्याय गौडदेशनिवासिनः।। भीमपराक्रमे–यस्तु भाद्रपदस्यान्ते उदिते कलशोद्भवे। अर्घं दद्यादगस्त्याय सर्वान् कामान् लभेत्तु

सः।। नारसिंहे—शंखे तोयं विनिःक्षिप्य सितपुष्पाक्षतैर्युतम्। मन्त्रेणानेन वै दद्यात् दक्षिणाशामुखः स्थितः।। ॐ काशपुष्पप्रतीकाश अग्निमारुतसम्भव। मित्रावरुणयोः पुत्र ! कुंभयोने ! नमोस्तु ते ।। ओं कुम्भयोनिसमुत्पन्न! मुनीनां मुनिसत्तम। उदयस्तेलङ्काद्वारे अर्घोऽयं प्रतिगृह्यताम् ।। ओं शंखं पुष्पं फलं तोयं रत्नानि- विविधानि च। उदयन्ते० ।। एषोऽर्घः ॐ अगस्त्याय नमः ।। ॐ आतापीभक्षितो येन वातापिश्च महासुरः। समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ।। इतिप्रार्थयेत् ।। गन्धादिकन्तु अगस्त्याय नमः इत्यनेन देयम् ।। विशेषानुपदेशे सामान्यतः प्राप्तत्वात् ।। दक्षिणाशामुखस्थित इति गन्धादावपि प्रयोगाङ्गकर्तृधर्मत्वादिति रत्नाकरः ।। तत्पत्न्या अर्घमन्त्रस्तु ॐ लोपामुद्रे ! महाभागे ! राजपुत्रि ! पतिव्रते ! गृहाणार्घ्यम्मया दत्तं मैत्रावरुणिवल्लभे! ।। एषोर्घः ॐ लोपामुद्रायै नमः ।।

## अथाश्विनकृत्यम्

ब्रह्मपुराणे—आश्विने कृष्णपक्षे तु श्राद्धन्देयं दिने दिने। त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा ।। मनुः—कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्। श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ।। अत्र कृष्णादिरेव मासः ।। आषाढीमवधिंकृत्वा यः स्यात्पक्षस्तु पञ्चमः। तत्र श्राद्धं प्रकुर्वीत कन्यां गच्छतु वा न वा ।। तद्वाक्येन स्फुटमभिधानात् ।। युवानस्तु गृहे यस्य मृतास्तेषान्तु दापयेत् ।। शस्त्रेण वा हता ये वै तेषां दद्याच्चतुर्दशीम् ।। चतुर्दशीम् चतुर्दश्यामित्यर्थः ।। युवानस्तु षोडशवर्षोपरि त्रिंशद्वर्षाणि यावत् ।।

## अथ प्रसंगात् वाजसनेयिनामपात्रकपार्वणश्राद्धप्रयोगः

तत्र[1] पूर्वदिने कृतसंय्यमः श्राद्धदिने स्नातः शुक्लद्विवासाः कृतनित्यक्रियः शुचिराचम्य प्राङ्मुख उपविश्य सिद्धान्नसंभवे सिद्धमिति पाचिकां पृष्ट्वा दीपं प्रज्वाल्य कुशत्रयहस्तः—ओम् अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वाः। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ।। ओम् पुण्डरीकाक्षः। इति कुशत्रयोदकेन श्राद्धीयद्रव्याण्यात्मानं चाभिषिच्य कुशत्रयं पूर्वतस्त्यक्त्वाऽन्य कुशत्रयतिलजलान्यादाय, ओम् अद्य महालयनिमित्तकपर्वणश्राद्धमहङ्करिष्ये ।। इति संकल्प्य गायत्रीं त्रिर्जपित्वा ।। ओम् देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ।। इति त्रिर्जपेत्। ततः कुशत्रययवजलान्यादाय

1. यत्तु नायं मन्त्रो द्विजातीनामिति वदन्ति तदसङ्गतमेव, पौराणिकमन्त्रस्य सर्वत्र प्रशस्तत्वात् परम्परासिद्धत्वाच्च।

प्राङ्मुख उदङ्मुखो वा दक्षिणोत्तरक्रमेणासादितपूर्वाग्रकुशत्रयात्मकासनद्वयं सयवमुत्सृजेत्। ओम् अद्य विश्वेदेवा इदमासनं वो नमः[1] ॥ ततोऽपसव्यं कृत्वा पातितवामजानुर्मोटकतिलजलान्यादाय पूर्व-पश्चिमक्रमेणासादितमोटकरूपाणि षडासनानि तिलजलप्रोक्षितानि दक्षिणाग्राणि प्रत्येकं पित्रादिभ्यः पश्चिमत आरभ्योत्सृजेत्॥ ओम् अद्यामुकगोत्र पितरमुकशर्मन्निदमासनन्ते स्वधा। एवं पितामहप्रपितामहयोः ॥ ओम् अद्यामुकगोत्रमातामहामुकशर्मन्निदमासनं ते स्वधा। एवमेव प्रमातामहवृद्धप्रमातामहयोः।

ततः सव्यं कृत्वा ओम् विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ओम् विश्वेदेवास आगत शृणुतेमꣳहवम्। एदम्बर्हिर्निषीदत ॥ इति देवानावाह्य ॥ ओम् यवोऽसि यवयास्मद्द्वेषो यवयारातीः । इतिदेवान्नेपात्रे यवान्विकीर्य ओम् विश्वेदेवाः शृणुतेमꣳहवम्मे ये अन्तरिक्षे य उपद्यविष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ ओम् आगच्छन्तु महाभागा विश्वेदेवा महाबलाः। ये यत्रायोजिताः श्राद्धे सावधाना भवन्तु ते ॥ इति पठेत्। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः ओम् पितॄनहमावाहयिष्ये इत्युक्त्वा ओम् उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशत आवह पितृन् हविषे अत्तवे। इति पितृनावाह्य ओम् अपहता असुरा रक्षाꣳसि वेदिषदः इति पित्राद्यन्नपात्रेषु तिलान्विकीर्य, ओम् आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन्यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ इति पठेत्।

ततः सव्येन देवार्घपात्रद्वये पूर्वाग्रे पवित्रे धृत्वा अपसव्येन पित्राद्यर्घपात्रेषु प्रत्येकं दक्षिणाग्रे पबित्रे धृत्वा सव्येन देवार्घपात्रद्वये ओम् शन्नो देवीरभिष्टय आपो भवन्तु पीतये शंय्योरभिस्रवन्तु नः। इति मन्त्रेण जलं प्रक्षिप्य अपसव्येन पित्राद्यर्घपात्रषट्केऽनेनैव मन्त्रेण पितृतीर्थेन जलं निक्षिपेत्। ततः सव्येन ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः ॥ इतिमन्त्रेण देवार्घपात्रद्वये प्रत्येकं यवान्विकीर्य अपसव्येन पित्राद्यर्घपात्रेषु प्रत्येकं ओम् तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वधया पितृँलोकान् प्रीणाहि नः स्वाहा ॥ इति मन्त्रेण तिलान् प्रक्षिपेत्। ततः सव्येन देवार्घपात्रद्वये तूष्णीमेव गन्धपुष्पे प्रक्षिप्य अपसव्येन पित्राद्यर्घपात्रेषु षट्सु तूष्णीं गन्धपुष्पे दद्यात् ॥

ततः सव्यं कृत्वैकं देवार्घपात्रं वामहस्ते कृत्वा तत्र स्थितं पवित्रं देवान्नपात्रे पूर्वाग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्त्वोत्तानपाणिना दक्षिणेन पात्रमाच्छाद्य, ओम्

1. पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥ अत्र मातृकम् अन्वष्टका (मातृनवम्यादि), पैतृकं = पार्वणम्, एकोद्दिष्टं = मातुर्वा पितुर्वा वार्षिकम्, वृद्धिः = आभ्युदयिकम्।

या दिव्या आपः पयसा सम्बभूवुर्या आन्तरिक्षा उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्तान आपः शिवाः सꣳस्योनाः सुहवा भवन्तु।। इति पठित्वा कुशत्रययवजलान्यादाय ओम् अद्य विश्वेदेवा एष वोऽर्घो नमः।। इति देवान्नपात्रे पवित्रोपरि दक्षिणहस्तेन देवतीर्थेनार्घ्यं दद्यात्। एवमपरत्राप्यर्घं दद्यात्।। ततोऽपसव्यं कृत्वा पित्र्यर्घपात्रं वामहस्ते कृत्वा पित्रन्नपात्रे उत्तराग्रं पवित्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्वाऽधोमुखदक्षिणहस्तेनार्घपात्रमाच्छाद्य ओम् या दिव्या इति पूर्वोक्तमन्त्रं पठित्वा मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र पितरमुकशर्मन्नेष तेऽर्घः स्वाधा इति पित्रन्नपरिवेषपात्रे पवित्रोपरि दक्षिणहस्तेन पितृतीर्थेन किञ्चिज्जलं दद्यात्। एवमेव पितामहादिभ्यः पञ्चभ्यः। ततः सव्यं कृत्वा पवित्रसहितावशिष्टजलयुतं देवार्घपात्रद्वयं यथाक्रमं प्रत्येकं देवासनदक्षिणपार्श्वे ओम् विश्वेभ्यो देवेभ्यः स्थानमसि इत्युक्त्वोत्तानमेव धारयेत्। ततोऽपसव्यं कृत्वा प्रपितामहार्घपात्रस्थितपवित्रादीनि पितामहार्घपात्रे कृत्वा तानि सर्वाणि पित्रर्घपात्रे कृत्वा पित्रर्घपात्रं पितामहार्घपात्रोपरि तदुभयं प्रपितामहार्घपात्रोपरि धृत्वा पित्राद्यासनपश्चिमे ओम् पितृभ्यः स्थानमसि, इत्युक्त्वा तान्यर्घपात्राणि मिलितान्येव न्युब्जीकुर्यात्। ततो वृद्धप्रमातामहार्घपात्रस्थितजलादीनि प्रमातामहार्घपात्रे धृत्वा तान्यपि सर्वाणि पुनर्मातामहार्घपात्रे कृत्वा तत्पात्रं प्रमातामहार्घपात्रोपरि धृत्वा तदुभयं वृद्धप्रमातामहार्घपात्रोपरि धृत्वा मातामहाद्यासनवामदिशि ओम् पितृभ्यः स्थानमसि इत्युक्त्वा मिलितान्येव तान्यर्घपात्राणि न्युब्जीकुर्यात् ।। तानि दक्षिणादानपर्यन्तं न चालयेत्।

ततः सव्यं कृत्वा कुशत्रययवजलान्यादाय ओम् अद्य विश्वेदेवा एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतसासांसि वो नमः। इति पित्रादिसम्बन्धिभ्यो विश्वेभ्यो देवेभ्यो यथासंभवं गन्धादिकमुत्सृज्य मातामहादिसम्बन्धिभ्योऽपि तथैव दद्यात्।। ततोऽपसव्यं कृत्वा मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र पितरमुकशर्मन्नेतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते स्वधा।। इति यथासम्भवं गन्धादिकं पित्रे दद्यात्।। अनेनैव क्रमेण पितामहादिभ्यः पञ्चभ्यः ।।

ततः सव्येन देवपात्रासनयोश्चतुष्कोणं मण्डलं विधाय अपसव्येन पित्रादिपात्रासनेषु चतुष्कोणं मण्डलं कुर्यात्। ततः सव्यं कृत्वा प्राङ्मुखः क्षारव्यञ्जनवर्जितं सघृतं श्राद्धदेयान्नाग्रभागमुद्धृत्यैकस्मिन्पुटके कृत्वा तदन्न द्विभागं कृत्वा एकत्र भागे यवघृतमधूनि अपरत्र तिलघृतमधूनि दत्त्वा पुटकान्तरे जलं कृत्वा तज्जलेनैव प्रदक्षिणक्रमेण पुटकं वेष्टयित्वा पातितदक्षिणजानुः पूर्वोपकल्पितपुटकान्नं गृहीत्वा क्रमेणाहुतिद्वयं जुहुयात्। ओम् अग्नये कव्यवाहनाय स्वाहा ।।१।। ओम् सोमाय पितृमते स्वाहा ।।२।। ततोऽपसव्येनैकस्मिन्पुटके

जलतिलघृतमधुसहितं व्यञ्जनयुतमन्नं कृत्वा मोटकतिलजलान्यादाय ओम् इदमन्नमेतद्भू स्वामि पितृभ्यो नमः। इति स्ववामभागे भूस्वामिनेऽन्नं दद्यात् ।। ततो हुतशेषमन्नं किञ्चिद्देवपात्रद्वये सव्येन दत्वा अपसव्येन पित्रादिपात्रेषु षट्सु दद्यात् ।। ततः सव्यञ्जनमुत्कृष्टमन्नं सिद्धमामं वा पुरुषाहारक्षमं सव्येन देवपात्रद्वये अपसव्येन पित्रादिपात्रषट्के प्रत्येकं परिविष्य संमार्ज्य च यथासंभवमुपकरणमष्टासु पुटकेषु घृतं जलञ्च तत्रोपनीय सव्येन देवान्नोपरि यवघृतमधूनि दत्वा अपसव्येन पित्राद्यन्नोपरि तिलघृतमधूनि दत्वा सव्येन सकुशत्रयदक्षिणकरेण देवान्नं स्पृष्ट्वा ओम् मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः ।।१।। मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः। मधुद्यौरस्तु नः पिता ।।२।। मधुमान्नो वनस्पतिर्म्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः ।।३।। इति पठेत् ।। ततोऽपसव्येन पित्राद्यन्नं स्पृष्ट्वा प्रत्येकं ओम् मधुवातेति ऋचं पठेत् ।।६।। ततः सव्येनोत्तानपाणिभ्यां देवान्नं स्पृष्ट्वा, ओम् पृथिवी ते पात्रं द्यौरपिधानम्ब्राह्मणस्य मुखे अमृते अमृतञ्जुहोमि स्वाहा ।। ओम् इदंव्विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुरे ।। ओम् कृष्णहव्यमिदं रक्ष मदीयम्।। इति पठित्वा वामेन पाणिना पात्रमत्यजन्नेव ओम् इदमन्नम् इत्यन्ने, ओम् इमा आपः इति जले, इदमाज्यम् इति घृते, ओम् इदं हविरिति पुनरन्ने दक्षिणकरांगुष्ठं निवेश्य ओम् यवोऽसि यवयास्मद्द्वेषो यवयारातीः ।। इतिदेवान्नोपरि यवान्विकीर्य्य ओम् अद्य विश्वेदेवा इदमन्नं सोपकरणं वो नमः ।। इति-कुशत्रययवजलैरुत्सृजेत् ।। एवमेवापरविश्वेदेवान्नमप्युत्सृजेत् ।। यद्युभयत्राप्येकः मेवान्नपात्रम्भवेत्तदा पुनः पात्रालंभनं न कार्यम्, पृथिवीतइति मन्त्रञ्च न पठनीयम्, किन्तु ओम् इदंविष्णुरित्यंत आरभ्य सर्वं पुनः कर्त्तव्यम् ।। एवमेवाग्रे पित्राद्यन्नपात्राणां भिन्नत्वे एव तावत्संख्यया पृथिवीत इतिमन्त्र आवर्तते न त्वेकत्वे ।। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः पित्रन्नपात्रं व्यस्तानुत्तानपाणिभ्यामालभ्य ओम् पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतञ्जुहोमि स्वाहा। ओम् इदंविष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पाꣳसुरे। ओम् कृष्णहव्यमिदंर-क्षमदीयम्। इति पठित्वा ओम् इदमन्नमित्यन्ने, ओम् इमा आप इति जले, ओम् इदमाज्यमिति घृते, ओम् इदं हविरिति पुनरन्ने दक्षिणहस्तांगुष्ठं निवेश्य ओम् अपहता असुरा रक्षाꣳसि वेदिषदः इति पित्रन्नोपरि तिलान्विकीर्य्य मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र पितरमुकशर्म्मन्निदमन्नं सोपकरणं ते स्वधा ।। इति पित्रेऽन्नमुत्सृजेत्। एवमेव पितामहादिभ्योऽपि पञ्चभ्यो दद्यात् ।।

ततस्त्रिर्गायत्रीं जपित्वा ओम् मधुवाता ऋताय ते मधुक्षरन्ति सिन्धवः। माध्वीर्न्नः सन्त्वोषधीः।। मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः। मधु द्यौरस्तु नः

पिता।। मधुमान्नो वनस्पतिर्म्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।। ओम् मधु मधु मधु इति च जपित्वा । ओम् अन्नहीनं क्रियाहीनं विधिहीनञ्च यद् भवेत्। तत्सर्वमच्छिद्रमस्तु ।। इति पठेत्।। ततो गायत्रीं जपित्वा कुशेषूपविश्य पुनर्मधुवाता इति ऋचं मधु मधु मध्विति च जपेत् ।। ततो बद्धाञ्जलिः ओम् कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ इभेन। तृष्वीमनु प्रसितिन्द्रूणानोस्तासि विध्य रक्षसस्तपिष्ठैः ।। तव भ्रमास आशु या पतन्त्यनुस्पृश घृषता शोशुचानः तपूꣳष्यग्ने जुह्वापतंगा न सन्दितो विसृजविष्व गुल्काः ।। प्रतिस्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः। यो नो दूरे अधसꣳसो यो अन्त्यग्ने मा किष्टे व्यथिरादघर्षीत् ।। उद्‌ग्ने तिष्ठ प्रत्या तनुष्वन्यमित्राँ ओषतात्तिग्महेते। योनो अरातिꣳसमिधानचक्रे नीचातन्धक्ष्यत सन्न शुष्कम् ।। उद्धर्वो भव प्रतिविध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अवस्थिरा तनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् ।। इति रक्षोघ्नीर्ऋचः पठेत्। ततो भूमौ तिलान्विकिरेत्। ॐ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः असुर्य्यँईयुरवृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ।। अङ्गिरसो नः पितरो नवग्वा अथर्वाणोभृगवः सोम्यासः। तेषां वयꣳसुमतौ यज्ञियानापि भद्रे सौमनसे स्याम। ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथव्वँसिष्ठाः। तेभिर्य्यमः सꣳरराणो हवीꣳष्युशन्नुशद्भिः प्रतिकाममत्तु ।। इति पित्र्यमन्त्रान् ।। ओम् सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् सभूमिꣳसर्वतस्पृत्वात्यतिष्ठद्दशांगुलमित्यादि षोडशर्चात्मकं पुरुषसूक्तम्, ओम आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनो निमिष एकवीरः शतꣳसेना अजयत्साकमिन्द्रः ।। इत्यप्रतिरस्थम् ।। अन्यानि च पवित्राणि यथाशक्ति जपेत् ।। ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ।। ओम् नमस्तुभ्यं विरूपाक्ष ! नमस्तेऽनेकचक्षुषे। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ।। ओम् सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ। चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ।। तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ ।। ओम् रुचीरुचीरुचिः ।।

ततः पिण्डिकापश्चिमदिशि उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रोक्ष्य सर्वप्रकारमन्नं तिलघृतमधुसहितमेकस्मिन्पुटके कृत्वा सर्वमेकीकृत्य जलेनाप्लाव्य मोटकेन कुशोपरि विकिरेत् :–ओम् अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ।। ततः सव्येनाचम्य हरिं स्मृत्वा अपसव्येन त्रिर्गायत्रीं मधुवाता इति ऋचं मधु मधु मध्विति च जपेत्।। ततः पिण्डपातनार्थं निर्म्मितहस्तमात्रचतुरस्रचतुरङ्गुलोच्छ्रितदक्षिणप्लवसैकतपिण्डिकां जलसिक्तां मध्ये स्थानद्वये प्रादेशमात्रं परिमाय, वामेन पाणिना

दर्भपिञ्जल्यादिकं गृहीत्वा, दक्षिणहस्तेनादाय तन्मूलेन वामान्वारब्धदक्षिणकरेण ओम् अपहता असुरा रक्षाᳬसि वेदिषदः इति मन्त्रेण तत्र दक्षिणाग्र प्रादेशमात्रं रेखाद्वयं कुर्यात्। कुशमैशान्यां क्षिपेत्। ततो रेखाद्वयोपरि ओम् ये रूपाणि प्रतिमुञ्चमाना असुरा सन्तः स्वधया चरन्ति, परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् इति मन्त्रेण ज्वलदङ्गारं प्रत्येकं भ्रामयेत्। अङ्गारं दक्षिणतो निदध्यात्। ततो रेखाद्वयोपरि प्रत्येकं छिन्नमूलकुशानास्तीर्य सव्येन देवताभ्य इति त्रिर्जपेत्।

ततोऽपसव्यं कृत्वा पुटकषट्के जलतिलगन्धपुष्पाणि कृत्वैकं पात्रं वामहस्ते कृत्वा मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र ! पितरमुकशर्मन्नत्रावनेनिक्ष्व ते स्वधा इत्युत्सृज्य दक्षिणहस्तेन छिन्नमूलकुशमूलेऽवनेजनन्दत्त्वा पात्रे किञ्चिज्जलमवशेषयेत्। एवं पितामहायापरपात्रमादाय कुशमध्ये, तृतीयपात्रमादाय प्रपितामहाय कुशाग्रे दद्यात्। एवमपरच्छिन्नमूलकुशमूले मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र मातामहामुकशर्मन्नत्रावनेनिक्ष्व ते स्वधा इत्युत्सृत्य मातामहायावनेजनन्दत्वा, कुशमध्ये प्रमातामहाय, कुशाग्रे वृद्धप्रमातामहाय च दद्यात् ॥ सर्वपात्रेषु प्रत्यवनेजनार्थं किञ्चित्किञ्चिज्जलमवशेषयेश्च्च।

ततः सव्यञ्जनतिलमध्वाज्ययुतशेषान्नेन षट्पिण्डान्निर्म्माय मधुघृताभ्यामभिघार्य तदुपरि तिलान् दत्वा प्रथमं पिण्डं गृहीत्वा मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र ! पितरमुकशर्मन्नेष ते पिण्डः स्वधा इतिप्रथमावनेजनस्थाने पित्रे पिण्डं दद्यात्। एवमेव पितामहप्रपितामहाभ्यां क्रमेण तत्तदवनेजनस्थाने प्रत्येकं पिण्डं दद्यात्। ततो द्वितीयरेखाऽऽस्तृतच्छिन्नमूलकुशमूले मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र ! मातामहामुकशर्मन्नेष ते पिण्डः स्वधा इतिमातामहायावनेजनस्थाने पिण्डं दद्यात्। एवमेव प्रमातामहवृद्धप्रमातामहाभ्यां तत्तदवनेजनस्थाने प्रत्येकं पिण्डं दद्यात्। ततः प्रपितामहादूर्ध्वं त्रयाणां लेपभागभुजां तृप्तिमुद्दिश्य ओम् लेपभागभुजस्तृप्यन्तु इति पठित्वा पित्रादित्रिकपिण्डाधारकुशमूले करं प्रोञ्छ्य, मातामहादित्रिकपिण्डाधरकुशमूलेऽपि तूष्णीं करं प्रोञ्छेत्।

ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणाभिमुखः ओम् अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ॥ इति पठित्वा वामावर्तेनोदङ्मुखीभूय प्रीतमनाः क्लांतिपर्यन्तं श्वासं नियम्य तेनैव पथा परावर्तमानः पितॄन्भास्वरमूर्त्तीन् ध्यायन् ओम् अमीमदन्त पितरो यथाभागमावृषायिषत इति जपेत्।

ततः पूर्वदत्तावशिष्टजलयुतमवनेजनपात्रमादाय ओम् अद्यामुकगोत्र पितरमुकशर्म्मन्नत्र प्रत्येवनेनिक्ष्व ते स्वधा इति प्रथमपिण्डोपरि पित्रे प्रत्यवनेजनं

दत्वा, एवमेव तत्तदवनेजनपात्रावशिष्टजलेन पितामहप्रपितामहपिण्डोपरि प्रत्यवनेजनं दद्यात्। द्वितीयभागे ओम् अद्यामुकगोत्र मातामहामुकशर्म्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधा इति प्रथमपिण्डोपरि मातामहाय प्रत्यवनेजनन्दत्वा प्रमातामहवृद्धप्रतामहाभ्यामपि तत्तत्पिण्डोपरि तथैव प्रत्यवनेजनं दद्यात्।

ततो नीवीं विस्रंस्य सव्येनाचम्य हरिं स्मृत्वा अपसव्यं कृत्वा वामेन पाणिना सूत्रमादाय दक्षिणेन धृत्वा ओम् नमो वः पितरो रसाय, नमो वः पितरः शोषाय, नमो वः पितरो जीवाय, नमो वः पितरः स्वधायै, नमो वः पितरो घोराय, नमो वः पितरो मन्यवे, नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्म ।। इतिपठित्वा ओम् एतद्वः पितरो वासः इत्युक्त्वा षट्सु पित्रादिपिण्डेषु प्रत्येकं सूत्रं धृत्वा मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र पितरमुकशर्म्मन्नेतत्ते वासः स्वधा इत्युत्सृतेत्। एवमपरपिण्डपञ्चके पितामहादिनाम्ना उत्सृजेत्। ततस्तूष्णीमेव पित्रादीनुद्दिश्य गन्धपुष्पधूपदीपताम्बूलानि प्रतिपिण्डं दद्यात्। ततस्तत्तत्पिण्डशेषान्नं तत्तत्पिण्डसमीपे विकिरेत् ।। ततः ओम् शिवा आपःसन्तु इति सव्येन देवान्नपात्रयोरपसव्येन पित्रादिपात्रेषु जलं तथैव ओम् सौमनस्यमस्तु इति पुष्पम् ।। ओम् अक्षतञ्चारिष्टमस्तु इति तण्डुलाँश्च दद्यात्। ततः सव्येन ओम् विश्वेदेवाः प्रीयन्ताम् इति देवान्नपात्रद्वये प्रत्येकं जलं दद्यात् । ततः पात्रषट्के तिलजलादिकं कृत्वा मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्रस्य पितुरमुकशर्म्मणो दत्तैतदन्नपानादिकमक्षय्यमस्तु इति पित्रन्नोपरि अक्षय्योदकं दद्यात्। एवमेव पितामहादीनां षष्ठ्यन्तनाम्ना प्रत्येकमुत्सृजेत्। ततः सव्यं कृत्वा पुटकस्थं जलमादाय दक्षिणां दिशं पश्यन् सुमनाः, ओम् अघोराः पितरः सन्तु इति पठन् पूर्वाग्रां वारिधारां पिण्डोपरि दद्यात् ।। एवमपरत्रापि।

ततः कृताञ्जलिः प्राङ्मुख आशिषः प्रार्थयेत् ।। ओम् गोत्रन्नो वर्द्धताम् दातारो नोऽभिवर्द्धन्ताम्, वेदास्सन्ततिरेव च। श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नो अस्तु ।। अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नःसन्तु मा च याचिष्म कञ्चन ।। एताः सत्याशिषः सन्तु ।। ततोऽपसव्यं कृत्वा सपवित्रकरेण सूत्रादिकं पिण्डेभ्योऽपसार्य एकं सपवित्रकुशत्रयं पित्रादित्रिकपिण्डोपरि अपरञ्च मातामहादित्रिकपिण्डोपरि दक्षिणाग्रमास्तीर्य पुटकद्वये सघृतञ्जलं निधाय वामेन पाणिनोद्घृतमुदकपात्रं दक्षिणेनादाय ओम् ऊर्ज्जं वहन्तीरमृतं घृतम्पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ।। इति पित्रादिपिण्डसपवित्रकुशोपरि वामान्वारब्धदक्षिणकरेण दक्षिणाग्रां वारिधारां दद्यात्। एवं मातामहादिपिण्डसपवित्रकुशोपरि ।। ततः स्वस्थानस्थितानेव पिण्डान्नम्रीभूयाघ्रायोत्थापयेत्! पिण्डाधारकुशादीनि वह्नौ क्षिपेत् ।।

ततः सव्येन देवार्घपात्रद्वयं सञ्चाल्य अपसव्येन पित्राद्यर्घपात्राण्युत्तानीकृत्य सव्यं कृत्वा प्राङ्मुख उदङ्मुखो वा दक्षिणं जानु नमयित्वा कुशत्रययवजलान्यादाय ओम् अद्य विश्वेषान्देवानां कृतैतच्छ्राद्धप्रतिष्ठार्थमिदं[1] हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे इति दक्षिणां दद्यात्। एवमपरविश्वेदेव श्राद्धदक्षिणांच दद्यात् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुर्मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदं रजतञ्चन्द्रदैवतंय्यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ।। इति दक्षिणां दद्यात् ।। एवं पितामहप्रपितामहयोः ।। ओम् अद्यामुकगोत्रस्य मातामहस्यामुकशर्मणः कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदं रजतञ्चन्द्रदैवतँय्यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ।। इति दक्षिणां दत्वा प्रमातामहवृद्धप्रमातामहयोरपि पार्वणश्राद्धदक्षिणां दद्यात् ।। हिरण्यरजतासम्पत्तावन्यद्रव्यसत्त्वे एतावद्द्रव्यमूल्यकहिरण्यमेतावद्द्रव्यमूल्यकरजतमित्यादिवाक्यमूह्यम्। ततः सव्येन प्राङ्मुख ओम् देवताभ्यः पितृभ्य इति त्रिर्जपेत्। ततोऽसव्येन रक्षादीपं निर्वाप्य सव्यं कृत्वा हस्तौ पादौ च प्रक्षाल्याचम्य ओम् प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्, स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादितिश्रुतिः । इति पठित्वा, ओम् विष्णुर्विष्णुर्हरिर्हरिः, इति कर्मपूर्णतार्थं विष्णुं स्मृत्वा श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत् । तदलाभेऽम्भसि वा क्षिपेत्। इति वाजसनेयिनामपात्रकपार्वणश्राद्धप्रयोगः।

## अथ वाजसनेयिनामेकोद्दिष्टविधिः

तत्र पूर्वदिने कृतनियमः श्राद्धदिने प्रातर्वस्त्रयुगेन कृतस्नानः पञ्चगव्योपलेपनज्वलदङ्गारभ्रामणगौरमृत्तिकाच्छादनैः श्राद्धभूमिं संस्कृत्य पित्रासनस्थानाद्वामभागे श्राद्धवस्तून्यासाद्य सपिण्डस्त्रीद्वारा स्वयं वा पचेत्। ततो हस्तौ पादौ च प्रक्षाल्याचम्य शुद्धासने उपविश्य दीपं ज्वालयित्वा परकर्तृकपाकपक्षे सिद्धमितिपाचिकां पृष्ट्वा पूर्वाभिमुखः ओम् अपवित्रः पवित्रो वा सर्व्वावस्थाङ्गतोऽपि वा। यःस्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ।। ओम् पुण्डरीकाक्षः पुनातु इति कुशत्रयजलैः श्राद्धीयद्रव्याण्यात्मानञ्चाभिषिच्य कुशत्रयं पूर्व्वतस्त्यक्त्वाऽन्यकुशत्रयतिलजलान्यादाय ओम् अद्यामुके मास्यमुके पक्षेऽमुक तिथौ अमुकगोत्रस्य पितुरमुकशर्म्मणः[2] सांव्वत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये इतिसंकल्पं कुर्य्यात्। ततो गायत्रीं त्रिर्ज्जपित्वा ओम् देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च, नमःस्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्ज्जपेत्। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुर्म्मोटक-

---

१. मेतावद्द्रव्यमूल्यकं वा।
२. 'अमुकगोत्राया मातुरमुकीदेव्याः' इति। मातुरेकोद्दिष्टं मध्याह्न एव कार्यम्।

तिलजलान्यादाय ओम् अद्यामुकगोत्रपितरमुकशर्म्मन्निदमासनं ते स्वधेति पूर्व्वोपकल्पितमोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रं पितृतीर्थेनोत्सृजेत्। ततः ॐ अपहता असुरा रक्षाᳩसि वेदिषदः इति भोजनपात्रे तिलान्विकीर्य्य ॐ आयन्तु नः पितरः सोम्यासो ऽग्निष्वात्ताः पथिभिर्द्देवयानैः अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् इति पठित्वाऽर्घकरणपुटके दक्षिणाग्रं पवित्रं धृत्वा ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शँय्योरभिस्रवन्तु नः इत्यर्घपात्रे जलं क्षिपेत्। ॐ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा इति पुटके तिलान् क्षिप्त्वा, गन्धपुष्पे तूष्णीं क्षिपेत्। ततोऽर्घपात्रं वामहस्ते कृत्वा भोजनपात्रे उत्तराग्रं पवित्रं धृत्वा उदकान्तरेण सिक्त्वा पाणिना पुटकमाच्छाद्य ॐ या दिव्या आपः पयसा सम्बभूवुर्य्या अन्तरिक्षा उत पार्थिवीर्य्याः। हिरण्यवर्णा यज्ञियास्तान आपः शिवाः सᳩस्योनाः सुहवा भवन्तु इति पठित्वा मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र ! पितरमुकशर्म्मन्नेष तेऽर्घः स्वधा इति पवित्रोपरि किञ्चिज्जलं दत्वा पवित्रमर्घपात्रे निधाय आसनवामभागे ॐपित्रे स्थानमसीति न्युब्जीकुर्य्यात्। तच्च दक्षिणादानपर्य्यन्तं न चालयेत् ॥

ततो गन्धादिदानम् ॥ मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकशर्म्मन्नेतानि गन्धपुष्पधूप-दीप-ताम्बूलयज्ञोपवीतवासांसि ते स्वधा इति गन्धादीनि दद्यात् ॥ ततो जलेन भोजनपात्रासनयोश्चतुर्दिशं मण्डलं कृत्वा एकस्मिन् पुटके सव्यञ्जनतिलजलघृतमन्नं कृत्वा किञ्चिदग्रभागमुद्धृत्य मोटकादिना ॐइदमन्नमेतद्भूस्वामिपितृभ्यो नमः इतिस्ववामभागे भूस्वामिनेऽन्नं दद्यात् ॥ ततः सिद्धमुष्णमन्नं रजतादिपात्रस्थं कराभ्यामादाय पितरं ध्यायन् भोजनपात्रे पुरुषाहारक्षमं परिविष्य व्यञ्जनादीनि चोपनीय अन्नं सम्मार्ज्य तिलघृतमधूनि दत्वा एकस्मिन् पुटके सतिलजलघृतानि कृत्वा पाणिनाऽन्नं स्पृशन् ॐ मधुव्वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्न्नः सन्त्वोषधीः। मधु नक्तमुतोषसो मधुमत्पार्थिवᳩरजः मधुद्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्म्मधुमाँ अस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः। ओम् मधु मधु मधु इति च पठित्वा व्यस्तपाणिभ्यामधोमुखं पात्रमालभ्य, ओम् पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॥ ओम् इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदं, समूढमस्य पाᳩसुरे। ओम् कृष्णकव्यमिदं रक्ष मदीम् इतिपठित्वा वामेन पाणिना पात्रमत्यजन्नेव, ओम् इदमन्नं, इमा आपः, इदमाज्यं, इदं हविः इत्यन्ने जले घृते पुनरन्ने च दक्षिणहस्ताङ्गुष्ठन्निवेश्य, ॐ अपहता असुरा रक्षाᳩसि वेदिषदः इत्यन्नोपरि तिलान्विकीर्य्य, मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र पितरमुकशर्म्मन्निदमन्नं सोपकरणं ते स्वधा इत्युत्सृजेत्।

ततो वामहस्तमप्युद्‌धृत्य गायत्रीं त्रिर्ज्जपित्वा ॐ मधुव्वातेति ओम् मधु-मधुमध्विति च जपेत् ।। ततः ओम् अन्नहीनं क्रियाहीनं विधिहीनश्च यद्भवेत् तत्सर्व्वमच्छिद्रमस्तु ।। ततो गायत्रीं जपित्वा कुशेषूपविश्य पुनर्म्मधुवातापाठः, ओम् मधुमधुमध्विति च जपेत्। ततो बद्धाञ्जलिः, ओम् कृणुष्वपाजः प्रसितिन्न पृथ्वींय्याहि राजेवामवाँ इभेन तृष्वीमनु प्रसितिन्द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ।। तव भ्रमास आशुया पतन्त्यनु स्पृश घृषता शोशुचानः तपूꣳष्यग्ने जुह्वा पतङ्गा न सन्दितो विसृत विष्वगुल्काः ।। प्रतिस्पशो विसृज तूर्णितमो भवा पायुर्व्विशो अस्या अदब्धः । यो नो दूरे अघशꣳसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ।। उदग्ने तिष्ठ प्रत्या तनुष्वन्य मित्राँ ओषतात्तिग्महेते। यो नो आरातिꣳसमिधा न चक्रे नीचा तं धक्ष्यत सन्न शुष्कम् ।। ऊर्द्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अवस्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ।। इति भूमौ तिलान्विकीर्य ॐउदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः। असुंय ईयुरवृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ।। अङ्गिरसो नः पितरो नवग्वा अथर्व्वाणो भृगवः सोम्यासः तेषां वयꣳसुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ।। ये नः पूर्व्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वशिष्ठाः। तेभिर्य्यमः सꣳरराणो हवीꣳष्युशन्नुशद्भिः प्रतिकाममत्तु ।। ओम् सहस्रशीर्षा पुरुषः सहक्षः सहस्रापात्। स भूमिꣳसर्व्वतस्पृत्वा त्यतिष्ठद्दशाङ्गुलम् ।। ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमिष एकवीरः शतꣳसेना अजयत् साकमिन्द्रः ।। ओम् नमः शम्भवाय च मयोभवाय च नमः, शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ।। ॐनमस्तुभ्यं विरूपाक्ष ! नमस्तेऽनेकचक्षुषे। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ।। ओम् सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ।। तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दूरमध्वानं यूयन्तेभ्योऽवसीदथ। ओम् रुचीरुचीरुचिः । ततः पिण्डिकापश्चिमदिशि कुशत्रयं धृत्वा जलेन सिक्त्वा एकस्मिन् पुटके तिलघृतमन्नं कृत्वा ॐ मध्विति मधु दत्वा मोटकेन कुशोपर्य्यन्नं विकिरेत् ।। ॐ अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम् ।। ततस्सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्येन गायत्रीं मधुवाता इत्यादिकं मधुमधुमध्विति च जपेत् ।।

ततोऽपसव्यं कृत्वा हस्तमात्रचतुरस्रचतुरङ्गुलोच्छ्रितदक्षिणप्लवपिण्डिकां निर्म्माय सिक्त्वा दर्भपिञ्जलीं गृहीत्वा तन्मूलेन पिण्डस्थाने प्रादेशमात्रां, ओम् अपहता असुरा रक्षाꣳसि वेदिषद इति मन्त्रेण दक्षिणाग्रां रेखामुल्लिख्य, दर्भ-पिञ्जलीमैशान्यां त्यजेत् । ततः ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया

चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात् प्रणुदात्यस्मात् ।। इत्यङ्गारं भ्रामयित्वा दक्षिणस्यां क्षिपेत् ।। ततस्तत्र छिन्नमूलकुशानास्तीर्य्य सव्यं कृत्वा देवताभ्य इतित्रिर्ज्जपित्वा, अपसव्यं कृत्वैकस्मिन् पुटके तिलजलगन्धपुष्पाणि कृत्वा, पुटकं वामहस्ते कृत्वा मोटकतिलजलान्यादाय, ॐ अद्यामुकगोत्र पितरमुकशर्म्मन्नत्रावनेनिक्ष्व ते स्वधा इतिच्छिन्नमूलोपर्य्यवनेजनं दद्यात् । किञ्चिज्जलं पुटकेऽवशेषयेत् ।। ततस्तिलजलघृतव्यञ्जनसहितान्नेन बिल्वमात्रं पिण्डं कृत्वा पुनर्म्मधुघृताभ्यामभिघार्य्य मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र ! पितरमुकशर्म्मन्नेष ते पिण्डः स्वधा इतिच्छिन्नमूलकुशोपरि पिण्डं दद्यात् ।। ततः पिण्डाधारकुशमूले करं प्रोञ्छ्य सव्यं कृत्वा द्विराचम्य हरिं स्मृत्वाऽपसव्यं कृत्वा दक्षिणाभिमुखः ॐ अत्र पितर्म्मादयस्व यथाभाग मावृषायस्व इति पठित्वा उत्तराभिमुखः श्वासं धृत्वा ॐ अमीमदत पिता यथाभाग मा वृषायिष्ट इति पश्चिमाभिमुखः श्वासं त्यजेत् । ततोऽवनेजनावशिष्टजलसहितं पुटकमादाय मोटकादीनि चादाय ॐ अद्यामुकगोत्र ! पितरमुकशर्म्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधा इति पिण्डोपरि प्रत्यवनेजनं दद्यात् ।। ततो नीवीं विश्रंस्य सव्येनाचम्य अपसव्यं कृत्वा वामेन पाणिना सूत्रमादाय दक्षिणेन धृत्वा ॐ नमस्ते पिता[१] रसाय, नमस्ते पितःशोषाय, नमस्ते पितर्जीवाय, नमस्ते पितः स्वधायै, नमस्ते पितर्घोराय, नमस्ते पितर्म्मन्यवे, नमस्ते पितः पितर्न्नमस्ते नमो वो गृहान्नः पितर्देहि सतस्ते पितर्द्देष्म इति पठित्वा ॐएतत्ते पितर्व्वासः इति मन्त्रेण पिण्डोपरि सूत्रं दद्यात् ।। ततो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र ! पितरमुकशर्म्मन्नेतद्वासस्ते स्वधा इति सूत्रमुत्सृजेत् ।। ततः पितरमुद्दिश्य पिण्डे गन्धपुष्पताम्बूलादीनि तूष्णीं दद्यात् ।। पिण्डशेषान्नं पिण्डसमीपे विकरेत् ।। ततो भोजनपात्रे ॐशिवा आपः सन्तु इतिजलम्, ॐ सौमनस्यमस्तु इति पुष्पं, ॐ अक्षतञ्चारिष्टमस्तु इत्यक्षतञ्च दद्यात् ।। ततो मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्म्मणो दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठताम्। इत्यक्षय्योदकं दद्यात् । ततःसव्यं कृत्वा दक्षिणाऽभिमुखः ॐअघोरःपिताऽस्तु इतिपूर्व्वाग्रां वारिधारां पिण्डोपरि दद्यात् ।।

ततः पूर्व्वाभिमुखः कृताञ्जलिः ॐ गोत्रन्नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।। श्रद्धा च नो मा व्यगमद् बहुदेयञ्च नो अस्तु। अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नःसन्तु, मा च याचिष्म कञ्चन एताः सत्याशिषःसन्तु ।। ततोऽपसव्यं कृत्वा सपवित्रकरेण पिण्डस्थसूत्रादिकमपनीय दक्षिणाग्रं सपवित्रं पिण्डोपरि निधाय तदुपरि दक्षिणाग्रां वारिधारां दद्यात् :—

१. मातुरुद्देशे पितृस्थाने सर्वत्र मातृपदं देयम्।

ॐ ऊर्ज्जव्वहन्तीरमृतं घृतं पयःकीलालं परिस्रुतम्, स्वधा स्थ तर्प्पयत मे पितरम् इतिमन्त्रेण ।। ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् ।। छिन्नमूलाङ्गारौ च वह्नौ क्षिपेत् ।। ततोऽर्घपात्रमुत्तानीकृत्य दक्षिणां दद्यात् ।। ॐ अद्यामुकगोत्रस्य पितुरमुकशर्म्मणः कृतैतत्साँव्वत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं यद्दीयमानमूल्यकरजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । ततः सव्यं कृत्वा देवताभ्य इति त्रिर्ज्जपेत् । अपसव्येन हस्ताभ्यां दीपं निर्व्वाप्य हस्तौ पादौ प्रक्षाल्य सव्येनाचम्य विष्णुं ध्यायेत् ॐ प्रमादात् कुर्व्वतां कर्म्म, प्रच्यवेताध्वरेषु यत्स्मिरणदेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ।। ॐ विष्णुर्व्विणुर्हरिर्हरिः ।। ततःश्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत्, जले वा क्षिपेत् ।। पिण्डिकां छित्वा सूर्य्यं प्रणमेत् ।।

*।। इति वाजसनेयिनामेकोद्दिष्टविधिः समाप्तः ।।*

# अथ छन्दोगानां

## प्रतिहस्तकानुसारेण श्रीदत्तानुसारेण च पार्वणाश्राद्धप्रयोगः।

तत्र पूर्वदिने कृतसंय्यमः श्राद्धदिने प्रातः स्नातः कृतनित्यक्रियः प्रथमं दक्षिणाभिमुखः हस्तौ पादौ प्रक्षाल्य पवित्रं कुशत्रयञ्च धृत्वा प्राङ्मुख उदङ्मुखो वा आचम्य सिद्धान्नसंभवे सिद्धमिति पाचिकां पृष्ट्वा ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः। ॐ पुण्डरीकाक्षः इति द्विभुजं पीतवाससं शंखचक्रधरं पुण्डरीकाक्षं हरिं स्मृत्वा श्राद्धीयद्रव्याण्यात्मानञ्च सिञ्चेत् ।। ततः कुशत्रयतिलजलान्यादाय[1] ॐ अद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्राणां पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां मातामह-प्रमातामह-वृद्धप्रमातामहानाममुकामुकामुकशर्मणाममुकनिमित्तकपार्वणाश्राद्धमहं करिष्ये। इति **प्रतिहस्तकमते** संकल्पः ।। **श्रीदत्तमते** तु ॐ अद्यपार्वणश्राद्धमहं करिष्ये इत्याचारपरिप्राप्तमेव संकल्पं कुर्य्यात् ।। ततो गायत्रीं त्रिर्जपेत् ।। ततः ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।। नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति । इति त्रिर्जपेत् ।। ततः कुशत्रययवजलान्यादाय प्राङ्मुख उदङ्मुखो वा दक्षिणोत्तरक्रमासादितऋजुकुशत्रयात्मकासनद्वयं सयवं दक्षिणत आरभ्य प्रत्येकमुत्सृजेत्—ॐअद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणाममुकनिमित्तकपार्वणश्राद्धसम्बन्धिनो विश्वेदेवा इदमासनं वो नमः। ॐ अद्यामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणाममुकनिमित्तकपार्वणश्राद्धसम्बन्धिनो विश्वेदेवा इदमासनं वो नमः ।। **इतिप्रतिहस्तकमते ।।**

---

1. अपराह्णः पार्वणकालः। गजच्छाया-ग्रहणदिषु तत्समयाभ्यन्तर एव।

**श्रीदत्तमते** तु, ॐ अद्य विश्वेदेवा इदमासनं वो नमः[१] ।। ततः पूर्वपश्चिमक्रमासादितदक्षिणाग्र-सतिलमोटकरूपाणि षडासनानि पश्चिमत आरभ्य पित्रादिभ्यः प्रत्येकमुत्सृजेत् । **अपसव्यं कृत्वा दक्षिणाभिमुखः** पातितवामजानुः मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र ! पितरमुकशर्मन् ! अमुकनिमित्तकपार्वणश्राद्धे इदमासनं ते **स्वधा** ।। **श्रीदत्तमते** तु अद्यामुकगोत्र ! पितरमुकशर्मन्निदमासनं ते स्वधा ।। इति पित्रे दत्वा, पितामहप्रपितामहाभ्यामेवमेवं दद्यात् । ॐ अद्यामुकगोत्र ! मातामहामुंकश्शर्मन् ! इदमासनन्ते **स्वधा** ।। एवं प्रमातामहवृद्धप्रमातामहाभ्यामपि दद्यात् ।

ततः आवाहनम्। सव्यं कृत्वा कुशहस्तः ॐ विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ॐ विश्वेदेवास आगत शृणुताम इमं हवम्, एदं बर्हिर्न्निषीदत। इत्यावाह्य, ॐ यवोसि यवयास्मद्द्वेषो यवयारातीः इत्येनेन देवपात्रयोर्य्यवान्विकीर्य्य, ॐ विश्वेदेवा शृणुतेमं हवं मे ये अन्तरिक्षे उपद्यविष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ।। ॐ ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृष्णोति ब्राह्मणस्तं राजन् ! पारयामसि ।। ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः। ये यत्र योजिताः श्राद्धे सावधाना भवन्तु ते, इति पठेत् । ततो दक्षिणाभिमुखः कृतापसव्यः कुशहस्तः ॐ पितॄनहमावाहयिष्ये इत्युक्त्वा ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवे ।। ॐ एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः । दत्तास्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्ववीरं यच्छत ।। ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्द्देवयानैः। अस्मिन्यज्ञे स्वधया मदन्तोधि ब्रुवन्तु तेऽवन्त्वस्मान् ।। इति पठित्वा ॐ अपहता असुरा रक्षांसि वेदिषदः इति पित्रादिषट्पात्रेषु तिलान् विकिरेत् ।। ततः सव्येन देवार्घपात्रद्वये पवित्रे पूर्वाग्रे धृत्वा अपसव्येन पित्राद्यर्घपात्रषट्के दक्षिणाग्राणि पवित्राणि प्रत्येकं धारयेत् ।। ततः[१] सव्येन ॐ शन्नोदेवीरभिष्टये शन्नोभवन्तु पीतये। शँय्योरभिस्रवन्तु नः । इत्यनेन देवार्घपात्रद्वये जलं दत्वा, अपसव्येन प्रत्येकमिममेव मन्त्रं पठित्वा पित्राद्यर्घपात्रेषु षट्सु पितृतीर्थेन जलं दद्यात् ।। ततः सव्येन ओम् यवोसीत्युक्तमन्त्रेण देवार्घपात्रद्वये यवान् दत्वा अपसव्येन ॐ तिलोसि पितृदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वधा ।। इतिमन्त्रेण पित्राद्यर्घपात्रषट्के तिलान् विकीर्य्य सव्येन देवार्घपात्रद्वये, अपसव्येन पित्राद्यर्घपात्रषट्के गंधपुष्पे तूष्णीं दद्यात् ।

ततः सव्येन देवान्नपात्रे पूर्वाग्रं पवित्रं धृत्वा उदकान्तरेण सिक्त्वा एकार्घपात्रं

---

१. सव्येन यदुच्यते तत पूर्वाभिमुखेनोत्तराभिमुखेन वा कार्यम्। अपसव्येन यदुच्यते तद्दक्षिणभिमुखेन ।

वामहस्ते कृत्वा दक्षिणेनोत्तानपाणिनाच्छाद्य, ओम् या दिव्या आपःपयसा सम्बभूवुर्य्या आन्तरिक्षा उत पार्थिवीर्य्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा भवन्तु इति पठित्वा कुशत्रययवजलान्यादाय ॐ अद्य विश्वेदेवा इदमर्घ्यं वो नमः ।। प्रतिहस्तकानुसारी तु ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणाममुकनिमित्तकपार्वणश्राद्धसम्बधिनो विश्वेदेवा इदमर्घ्यं वो नमः। इत्यर्घंदद्यात् ।। एवमपरविश्वेदेवान्नपात्रेऽर्घदानम् । ततोऽपसव्येन पित्रर्घपात्रमादाय भोजनपात्रे पवित्रमुत्तराग्रं धृत्वा जलान्तरेण सिक्त्वाऽर्घपात्रं वामहस्ते कृत्वा दक्षिणहस्तेनाधोमुखेनाच्छाद्य,ॐया दिव्याइति मन्त्रं पठित्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र ! पितरमुकशर्मन् ! अमुकनिमित्तकपार्वणश्राद्धे इदमर्घ्यं ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा ।। श्रीदत्तमते अमुकनिमित्तकपार्वणश्राद्ध इति न योजयेत् ।। इति पित्रेऽर्घं दत्वा पितामहादिभ्यः पञ्चभ्यो दद्यात् ।। ततः सव्यं कृत्वा ओम् विश्वेभ्यो देवेभ्यः स्थानमसि इति देवार्घपात्रद्वयमासनदक्षिणपार्श्वे उत्तानमेव स्थापयेत् ।। ततोऽपसव्येन पितृपात्रे पितामहप्रपितामहार्घपात्रस्थपवित्रादीनि कृत्वा पित्राद्यासनपश्चिमे ओम् पितृभ्यः स्थानमसि इत्युक्त्वा पित्रार्घपात्राणि न्युब्जीकुर्य्यात् ।। अधोमुखपितृपात्रोपरि पितामहपात्रं तदुपरि प्रपितामहपात्रञ्चाधोमुखं स्थापयेत् ।। एवं मातामहादीनामर्घपात्राणि ओम् पितृभ्यः स्थानमसीत्युक्त्वा न्युब्जीकुर्य्यात् ।। तानि च दक्षिणादानपर्य्यन्तं न चालयेत् ।।

ततः सव्यं कृत्वा कुशत्रययवजलान्यादाय ओम् अद्य विश्वेदेवा एतानि गंधपुष्पधूपदीपताम्बूलयज्ञोपवीताच्छादनानि वो नमः ।। प्रतिहस्तकानुसारी तु, ओम् अद्यामुकगोत्राणां पितृपितामहानाममुकामुकामुकशर्मणाममुकनिमित्तकपार्वणश्राद्धसम्बन्धिनो विश्वेदेवा इति योजयेत् ।। एवं मातामहादीनां विश्वेदेवकार्येऽपि ।। ततोऽपसव्येन मोटकतिलजलान्यादाय ॐआद्यामुकगोत्र ! पितरमुकशर्मन् ! अमुकनिमित्तकपार्वणाश्राद्धे एतानि गंधपुष्पधूपदीपताम्बूलयज्ञोपवीताच्छादनानि ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इति पित्रे गन्धादिकं दत्वा पितामहादिभ्यः पञ्चभ्यो दद्यात् । ततः सव्येन देवान्न पात्रयोः, अपसव्येन पित्रादिषट्पात्रेषु मण्डलानि कृत्वा सव्यं कृत्वा प्राङ्मुखो भूत्वैकस्मिन् पुटकेऽन्नं कृत्वा तदन्नं द्विधा विभज्य एकस्मिन् भागे घृतयवमधूनि, अपरभागे घृततिलमधूनि दत्वा पुटकान्तरे जलं कृत्वा, तज्जलेनैव पुटकं वेष्टयित्वा, ओम् स्वाहा इति घृताक्तमन्नं जले हुत्वा, सोमाय-पितृमते इति पठेत् ।। ततः ओम् स्वाहा इति हुत्वा, अग्नये कव्यवाहनाय इति पठेत् ।। ततोऽपसव्यं कृत्वैकस्मिन् पुटके सव्यञ्जनमन्नं कृत्वा तदुपरि घृततिलमधूनि दत्वा मोटकादिकमादाय ओम् इदमन्नमेतद्भूस्वामिपितृभ्यो नमः इति भूस्वामिने

दद्यात् ।। ततोहुतशेषमन्नं किञ्चद्देवपात्रद्वये सव्येन दत्वा अपसव्येन पित्रादिपात्रेषु षट्सु दद्यात् ।।

ततः सव्येन सव्यञ्जमन्नं पुरुषाहारक्षमं देवपात्रद्वये परिविष्य घृतं जलं चोपनीय अपसव्येन पित्रादिपात्रेषु सव्यञ्जनमन्नं पुरुषाहारक्षमं परिविष्य घृतं जलं चोपनयेत् ।। ततः सव्येन देवान्नयोर्घृतयवमधूनि दत्वा अपसव्येन पित्राद्यन्नेषु घृततिलमधूनि दत्वा सव्येन सकुशत्रयदक्षिणकरेण देवान्नं स्पृष्ट्वा ॐ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्न्नः सन्त्वोषधीः। मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः ।। इति ऋक्त्रयं पठेत् ।। एवमपरदेवान्नं स्पृशन्पृठेत् ।। अपसव्येन पित्राद्यन्ने स्पृष्ट्वा प्रत्येकं ॐ मधुवातेति ऋचं पठेत्। ततः सव्येनोत्तानपाणिभ्यां देवान्नपात्रमालभ्य ॐ पृथ्वी ते पात्रं द्यौःपिधानम्ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ।। ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे। ॐ कृष्णहव्यमिदं रक्ष मदीयम् इति पठित्वा ॐ इदमन्नमित्यन्ने ॐ इमा आपः इत्यप्सु, ॐ इदं हविः इतिसघृतेऽन्ने दक्षिणहस्ताङ्गुष्ठं संयोज्य ॐयवोसीति यवान् अन्नोपरि विकीर्य्य, कुशत्रययवजलान्यादाय, **प्रतिहस्तकमते** ॐ अद्य अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्म्मणाममुकनिमित्तकपार्वणश्राद्धसम्बन्धिनो विश्वेदेवा इदमन्नं सोपकरणं वो नमः इत्युत्सृजेत् ।। **श्री दत्तमते** तु ॐ अद्यविश्वेदेवा इदमन्नं सोपकरणं वो नमः एतावदेव । एवमपरत्रापि ।। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः पित्रन्नपात्रं व्यस्तानुत्तानपाणिभ्यामालभ्य ॐ पृथ्वी ते पात्रमित्याद्युक्तमन्त्रं पठित्वा ॐइदं विष्णुरित्युक्तमन्त्रं पठित्वा ॐ कृष्णकव्यमिदं रक्षमदीयमिति पठित्वा ॐ इदमन्नमित्यन्ने, ॐ इमा आपः इत्यप्सु, ॐ इदं हविरितिसघृतेऽन्ने दक्षिणहस्ताङ्गुष्ठं संयोज्य, ॐ अपहता असुरा रक्षांसि वेदिषदः इत्यन्नोपरि तिलान्विकीर्य्य, मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र ! पितरमुकशर्मन् ! अमुकनिमित्तकपार्वणश्राद्धे इदमन्नं सोपकरणं ते स्वधा इति **प्रतिहस्तकमते**। **श्रीदत्तमते** तु ॐ अद्यामुकगोत्रपितरमुकशर्म्मन् इदमन्नं सोपकणं ते स्वधा। एवं पितामहादिपञ्चभ्यो दद्यात् । यदि चान्नपात्रं नाना तदा पृथ्वीते इति मन्त्रस्यावृत्तिः **पात्रैक्ये** तु सकृदेव पाठः ।। ततो गायत्रीं त्रिर्जपित्वा मधृवातेति ऋचम् मधु मधु मधु इति च जपेत् ।। ततः ॐअन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् । तत्सर्वमच्छिद्रमस्तु ।। ततो गायत्रीं जपन् कुशेषूपविश्य मधुवातेति ॐ मधु मधु मधु इति च जपेत् ।।

ॐकृणुष्व पाजः प्रसितिन्न पृथ्वीय्याँहि राजेवमवाँ इभेन तृष्वीमनु प्रसितिन्द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः। तव भ्रमास आशु या पतन्त्यनु

स्पृशधृषता शोशुचानः तपूंष्यग्ने जुह्वा पतङ्गा न सन्दितो विसृज विष्वगुल्काः ।। प्रतिस्पशो विसृज तूर्णितमो भवा पयुर्विशो अस्या अदब्धः । यो नो दूरे अघशंसो योअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ।। उदग्ने तिष्ठ प्रत्या तनुष्वन्यमित्राँ ओषतात्तिग्महेते यो नोअरातिं समिधा न चक्रे नीचा तं धक्ष्यत सन्नशुष्कम् ।। ऊर्द्ध्वो भव प्रतिविध्या ध्यसमदाविष्कृणुष्व दैव्यान्यग्ने । अवस्थिरा तनुहि यातुजूनां जामिमजामिम्प्रमृणीहि शत्रून् ।। इति भूमौ तिलान्विकीर्य्य, ॐ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुर्य्यँ ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ।। अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामिपि भद्रे सौमनसे स्याम ।। ये नः पूर्वे पितरः सोम्यासो नूहिरे सोमपीथं वसिष्ठाः । तेभिर्य्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ।। ॐ सहस्रशीर्षा, पुरुष सहस्राक्षः सहस्रपात् ।। स भूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम्, इत्यादि षोडशर्च्चम् । आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनां, संक्रन्दनो निमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः । ॐ नमः सम्भवाय च मयोभवाय च नमः, शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ।। ओम् नमस्तुभ्यं विरूपाक्ष ! नमस्तेऽनेकचक्षुषे । नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ।। ओम् सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे । तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणः वेदपारगाः । प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ ।। ओम् नमस्येऽहं पितृन् स्वर्गे ये वसन्त्यधिदेवताः । देवैरपि हि तृप्यन्ति ये च श्राद्धे स्वधोत्तरे ।। ॐ रुची रुची रुचिः ।। ततः पिण्डकापश्चिमदिशि उच्छिष्टसंनिधौ दक्षिणात् कुशत्रयं धृत्वा जलेन सिक्त्वा एकस्मिन् पुटके तिलघृतमधुसहितमन्नं कृत्वा जलेनाप्लाव्य मोटकेनालोड्य ओम् अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम् ।। इति कुशोपरि विकिरेत् ।। ततः सव्येनाचम्य हरिं स्मृत्वा अपसव्येन गायत्रीं त्रिर्जपित्वा ओम् मधुवातेति ऋचम् ओम् मधु मधु मधु इति च जपेत् ।

ततश्चतुरस्रससैकतदक्षिणा वनतचतुरङ्गुलोच्छ्रितपिण्डिकां निर्म्माय सिक्त्वा वामेन पाणिना मोटकमादय दक्षिणहस्ते कृत्वा तन्मूलेन वामान्वारब्धदक्षिकरेणॐअपहता असुरा रक्षांसि वेदि षदः इत्यनेन दक्षिणाग्रं प्रादेशमात्रं मध्ये रेखाद्वयं कुर्य्यात् । मोटकं चोत्तरतस्त्यजेत् । ततो रेखाद्वयोपरि प्रत्येकं नव छिन्नमूलान् कुशानास्तीर्य्य सिक्त्वा सव्येन देवताभ्य इति त्रिःजपेत् । ततोः अपसव्येन ॐ एत पितरः सोम्यास इत्यादिनाऽवाह्य षट् पुटकेषु जलतिलगन्धपुष्पाणि दत्वा मोटकतिलजलान्यादाय एकं पात्रं वामहस्ते कृत्वा ओम् अद्यामुकगोत्र ! पितरमुकशर्मन् ! (**प्रतिहस्तकमते** )

अमुकनिमित्तक पार्वणश्राद्धे अत्रावनेनिक्ष्व ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा ।। ( **श्रीदत्तमते** अमुकनिमित्तकेति न वाच्यम् ) इत्युत्सृज्य दक्षिणहस्तेनादाय छिन्नमूलकुशमूलेऽवनेजनजलं पितृतीर्थेन दत्वा जलं स्पृशेत् ।। एवमेवापरपात्रेण कुशमध्ये पितामहाय दत्वा जलं स्पृष्ट्वा कुशाग्रे तृतीयपात्रमादाय प्रपितामहाय दत्वा जलं स्पृशेत् ।। एवमपरछिन्नमूलकुशमूले मोटकादिकमादाय ओम् अद्यमुकगोत्र ! मातामहामुकशर्मन् अमुकनिमित्तकपार्वणश्राद्धे अत्रावनेनिक्ष्व ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इत्युत्सृज्य मातामहायावनेजनं दत्वा जलं स्पृष्ट्वा, कुशमध्ये प्रमातामहाय दत्वा जलं स्पृष्ट्वा कुशाग्रे वृद्धप्रमातामहाय दत्वा जलं स्पृशेत् ।। ततः सव्यञ्जनतिलघृतमधुयुतशेषान्नेन षट् पिण्डान्निर्म्माय मधुघृततिलान्दत्वा प्रथमं पिण्डं गृहीत्वा मोटकादीन्यादायॐअद्यामुकगोत्र ! पितरमुकर्म्मन् ! अमुकनिमित्तकपार्वणश्राद्धे एष ते पिण्डो ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इति पित्रवनेजनस्थाने पित्रे पिण्डं दत्वा जलं स्पृशेत् ।। एवं कुशमध्ये पितामहाय पिण्डं दत्वा जलं स्पृष्ट्वा, कुशाग्रे प्रपितामहाय पिण्डं दत्वा जलं स्पृशेत् ।। ततोद्वितीयरेखास्तृतछिन्नकुशमूलमध्याग्रेषु यथाक्रमम्मातामहादिभ्यः पूर्ववत् पिण्डान् दत्वा त्रिष्वपि जलं स्पृशेत् ।। ततः पित्रादित्रिकपिण्डाधारकुशमूले ॐ लेपभागभुजस्तृप्यन्तु इति करं प्रोञ्छ्य, मातामहादित्रिकपिण्डाधारकुशमूलेऽपि करं प्रोञ्छेत् ।

ततः सव्यं कृत्वाऽचम्य हरिं स्मृत्वाऽपसव्यं कृत्वा पिण्डपात्रप्रक्षालनजलानि षट्सु पुटकेषु निधाय तिलचन्दनपुष्पाणि च दत्वा ॐअद्यामुकगोत्र ! पितरमुक-शर्म्मन् ! अमुकनिमित्तकपावर्णश्राद्धे अत्र प्रत्यवनेनिक्ष्व ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इति पित्रे पिण्डोपरि प्रत्यवनेजनं दत्वा जलं स्पृष्ट्वा, पितामहादिभ्यः पञ्चभ्यो दद्यात्, सर्वत्र जलं सपृशेत् ।। ततः ॐअत्र पितरो मादयध्वंय्यथा-भागमावृषायध्वम् इति पठित्वा वामावर्त्तेनोदङ्मुखीभूय क्लान्तिपर्य्यन्तं श्वासं नियम्य तेनैव पथा परावृत्य भास्वरमूर्तीन् पितॄन् ध्यायन् ओम् अमीमदन्त पितरो यथाभागमावृषायिषत इति जपेत् ।। ततः श्वासन्त्यक्त्वा नीवीं विस्रंस्य सव्येन हरिं स्मृत्वा अपसव्येन वामेन पाणिनोद्घृतं सूत्रं दक्षिणेनादाय ॐएतद्वः पितरो वासः इति पठित्वा प्रत्येकं पित्रादीनां षट् पिण्डेषु दत्वा मोटकादिकमादाय ॐअद्यामुगोत्र ! पितरमुकशर्म्मन् (**प्र० मते**) अमुकनिमित्तकपार्वणश्राद्धपिण्डे एतत्ते वासो ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इति सूत्रमुत्सृतेज्जलं स्पृशेच्च ।। एवं पितामहादिभ्यः पञ्चभ्यः सूत्रमुत्सृज्य जलं स्पृशेत् ।। ततस्तूष्णीमेव तत्तत्पिण्डेषु पित्रादीनुद्दिश्य यथाक्रमं गन्धपुष्पधूपदीपताम्बूलानि दद्यात्।

ततः पुष्पं गृहीत्वा ओम् वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमोनमः वर्षाभ्यश्च

शरत्संज्ञ ऋतवे च नमस्सदा ॥ हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च । माससम्वत्सरेभ्यश्च दिवसेभ्यो नमस्सदा ॥ इति पाठित्वा ओम् वसन्तादिषड्ऋतुभ्यो नमः इति पिण्डोपरि पुष्पन्दत्वा षड्तुस्वरूपतया पितॄन्प्रणमेत् ॥ ततः सव्येन देवपात्रयोः ओम् शिवा आपः सन्तु इतिजलम्, ओम् सोमनस्यमस्तु इति पुष्पम्, ओम् अक्षतञ्चारिष्टमस्तु इत्यक्षतञ्च दत्वाऽपसव्येन पित्रादिषट्पात्रेषु यथाक्रमेण तत्तदुक्तमन्त्रेण जलं पुष्पम् अक्षतञ्च दद्यात् ॥ ततस्सव्येन कुशहस्तः, ओम् विश्वेदेवाः प्रीयन्तामिति देवान्नद्वये प्रत्येकं जलं दत्वा अपसव्येन पात्रषट्के तिलजलादिकं निधाय मोटकादीन्यादाय ओम् अद्यामुकगोत्रस्य पितुरमुकशर्म्मणो (**प्रतिहस्तक मते**) **अमुकनिमित्तकपार्वणश्राद्धे** दत्तैतदन्नपानादिकमक्ष्य्यमस्त्विति पित्रन्नोपरि अक्षय्योदकन्दद्यात् ॥ एवं पितामहादिपञ्चभ्यो दद्यात् ॥ **श्रीदत्तमते** अमुक-निमित्तकेति न वाच्यम् ॥ ततः सव्येन पुटकस्थं जलमादाय दक्षिणान्दिशं मनसा पश्यन् ओम् अघोराः पितरः सन्तु इति पित्रादिपिण्डोपरि पूर्वाग्रां वारिधारां दद्यात् । एवमपरत्रापि।

ततोऽञ्जलिम्बध्वा ओम् गोत्रन्नो वर्धताम् इति पठेत् । ततोऽपसव्यं कृत्वा सपवित्रकरेण सूत्रादिकं पिण्डेभ्योऽपसार्य एकं सपवित्रकुशत्रयं पित्रादित्रिक-पिण्डोपरि, अपरञ्च मातामहादित्रिकपिण्डोपरि दक्षिणाग्रमास्तीर्य्य पुटकद्वये सघृतं जलं निधाय वामेन करेणोद्घृतमुदकपात्रं दक्षिणेनादाय ओम् ऊर्ज्जव्वँहन्तीरमृतं घृतं पयःकीलालं परिस्रुतम्। स्वधा स्थ तर्प्पयत मे पितॄन् ॥ इत्युभयत्रापि पिण्डस्थसपवित्रकुशोपरि वामान्वारब्धदक्षिणकरेण दक्षिणाग्रां वारिधारां दद्यात् । ततो नम्रीभूय पिण्डानाघ्रायोत्थाप्य पिण्डाधारकुशान् वह्नौ क्षिपेत् ॥ ततः सव्येन देवार्घपात्रद्वयं सञ्चाल्य, अपसव्येन पिण्डाद्यर्घपात्राण्युत्तानीकृत्य सव्येन कुशत्रययवजलान्यादाय, **प्रतिहस्तकमते** ओम् अद्य अमुकगोत्राणां पितृपितामह-प्रपितामहानाममुकामुकामुकशर्मणां अमुकनिमित्तकपार्वणश्राद्धसम्बन्धिनां विश्वेषां देवानां कृतैतच्छ्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । इति दक्षिणां दद्यात् । एवमपरत्रापि । ततोऽपसव्येन मोटकादीन्यादाय ओम् अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतदमुकनिमित्तकपार्वणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहं समुत्सृज्ये। एवं पितामहादीनां पंचानाम् ॥

ततः सव्येन पूर्वाभिमुखः। ओम् गोत्रं नो वर्द्धताम् दातारो नोभिवर्द्धन्तां वेदाःसन्ततिरेव च। श्रद्धा च नो मा व्यगमद् बहुदेयञ्च नो अस्तु । अन्नं च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याविष्म कञ्चन । ओम् एताः

सत्याशिषः सन्तु ।। ओम् देवताभ्य इति त्रिर्जपेत् । **ततो वामदेव्यगानम्** । कयान इति महावामदेवऋषिर्गायत्रीछन्द इन्द्रो देवता अग्निष्टोमादौ द्वितीयपृष्ठे शान्तिकर्मणि च जपे विनियोगः ।। ओम् कया नश्चित्र आभुव दूती सदावृधः सखा, कया शचिष्ठया वृता ।। कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढाचिदारुजे वसु ।। अभीषुणः सखीनामविता जरितॄणाम् शतम्भवा स्यूतये ।। ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्वेदाः । स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।। प्राजापत्यं वै वामदेव्यं प्रजापतावेव प्रतिष्ठायोत्तिष्ठन्ति । ओम् पशवो वै वामदेव्यं पशुष्वेव प्रतिष्ठायोत्तिष्ठन्ति । ओम् शान्तिर्वै वामदेव्यं शान्तावेव प्रतिष्ठायोत्तिष्ठिन्ति ओम् अत एतत्कर्माछिद्रमस्तु ।। ततोऽपसव्येन दीपं निर्वाप्य सव्येन हस्तौ पादौ प्रक्षाल्याचम्य विष्णुं स्मरेत् ।। ॐप्रमादात्कुर्वतामित्युक्तं पठेत् ।। ॐ विष्णुर्विष्णुर्हरिर्हरिः। ततः श्राद्धीयद्रव्याणि ब्राह्मणेभ्यः प्रतिपादयेदम्भसि वा क्षिपेत् ।।

*।। इति छन्दोगानां पार्वणश्राद्धविधिः ।।*

# अथ छन्दोगानामेकोद्दिष्टविधि

परकृतपाकपक्षे सिद्धमिति पृच्छेत् ।। कुशत्रयतिलजलान्यादाय[१] ॐ अपवित्रः पवित्रो वा सर्व्वावस्थाङ्गतोऽपि वा। यःस्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः । ॐ पुण्डरीकाक्षः पुनातु इति श्राद्धीयद्रव्याण्यात्मानञ्च सिञ्चेत् । ततः कुशत्रयं पूर्व्वतस्त्यक्त्वा पूर्व्वाभिमुखोऽन्यकुशत्रयतिलजलान्यादाय ॐ अद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्रस्य पितुरमुकशर्म्मणः सांव्वत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये इति सङ्कल्प्य गायत्रीं त्रिर्ज्जपेत् ।। कुशहस्तः ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति इति त्रिःपठेत् ।। ततो दक्षिणाभिमुखो भूत्वा अपसव्येन मोटकतिलजलान्यादाय पांतितवामजानुः ॐ अद्यामुकगोत्रपितरमुकशर्म्मन्निदमासनं ते स्वधा इत्यासनं दद्यात् । ततः ॐअपहता असुरा रक्षांसि वेदिषदः इति पितृपात्रे तिलान्विकीर्य्य पुटके दक्षिणाग्रं पवित्रं धृत्वा ॐ शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये शँय्योरभिस्रवन्तु नः ।। इत्यनेन पितृतीर्थेन जलं दत्वा ॐ तिलोऽसि पितृदेवत्यो गोसवो देवनिर्म्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वधा इति तिलान् दत्वा, गन्धपुष्पे तूष्णीं दत्वा, अर्घपात्रं वामहस्ते कृत्वा, पवित्रमुत्तराग्रं परिवेषणपात्रे धृत्वा, जलान्तरेण सिक्त्वा, दक्षिणहस्तेनाधोमुखेनाच्छाद्य ॐया दिव्या आपःपयसा सम्बभूवुर्य्या अन्तरिक्षा उत

१. मातुर्वा पितुर्वाऽन्यस्यवा एकोदिष्टं मध्याह्न एव।

पार्थिवीर्य्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शंस्योनाः सुहवा भवन्तु ॥ इति पठित्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकशर्म्मन्निदमर्घं ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इत्यर्घपात्रे पवित्रोपरि पितृतीर्थेन जलं दत्वा, पवित्रमर्घपात्रे कृत्वा, दक्षिणहस्तेनादाय ॐ पित्रे स्थानमसि इति पित्रासनवामभागे न्युब्जीकुर्य्यात्, दक्षिणादानपर्य्यान्तं न चालयेत् ॥

ततो गन्धादिदानम् ॥ मोटकतिलजलान्यादायॐअद्यामुकगोत्र ! पितरमुक-शर्म्मन्नेतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इतिगन्धादि दत्वा, पितृपात्रे चतुष्कोणं मण्डलं कृत्वा, एकस्मिन् पुटके सव्यञ्जनमन्नं कृत्वा, घृततिलमधूनि दत्वा, मोटकतिलजलान्यादाय ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः इति भूस्वामिने अन्नं दद्यात् ॥ ततः सिद्धमुष्णमन्नं रजतादिपात्रस्थं कराभ्यामादाय, भास्वरमूर्तिं पितरं ध्यायन् पितृपात्रे पितृतीर्थेन पुरुषतृप्तिक्षमम्परिविष्य तत्पार्श्वे घृतं पानीयं मांसादिव्यञ्जनानि पृथक् पृथक् भूमावेव पात्रस्थानि स्थापयेत् ॥ ततोऽन्नसमार्ज्जनं कृत्वा, तदुपरि घृततिलमधूनि दत्वा, एकस्मिन् पुटके जलं कृत्वा, पिण्डिकोपरि धृत्वा, पात्रान्नमधोमुखेन दक्षिणहस्तेन स्पृष्ट्वा ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः, माध्वीर्न्नः सन्त्वोषधीः। मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः, मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्म्मधुमाँ अस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः ॥ ततः कुशत्रयहस्त एव व्यस्तानुत्तानपाणिभ्यां पात्रमालभ्य ॐ पृथ्वी ते पात्रम् द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे । ॐ कृष्णकव्यमिदं रक्ष मदीयम् ॥ ओम् इदमन्नं इत्यन्ने, ॐ इमा आपः इत्यप्सु, इदंहविः इतिपुनरन्ने अङ्गुष्ठं संय्योज्य, मोटकतिलजलान्यादाय वामेन पाणिना पात्रमत्यजन्नेव (**प्रतिहस्तकमते**) ओम अद्यामुकगोत्र ! पितरमुकशर्म्मन् ! सांव्वत्सरिकैकोद्दिष्टश्राद्ध इदमन्नं सोपकरणं ते स्वधा इत्यन्नमुत्सृज्य, गायत्रीं त्रिर्ज्जपित्वा, ओम् मधुवातेति ओम् मधु मधु मधु इति च जपेत् ॥ ततः ओम् अन्नहीनं क्रियाहीनं विधिहीनञ्च यद् भवेत् तत्सर्व्वमच्छिद्रमस्तु ॥

ततो गायत्र्या कुशोपवेशनं मधुवाता पाठश्च। ओम्कृष्णुष्वपाजःप्रसितिन्न पृथ्वींय्याहि राजे वामवाँ इभेन तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ तव भ्रमास आशु या पतन्त्यनु स्पृश घृषता शोशुचानः । तपूँष्यग्ने जुह्वा पतङ्गा न सन्दितो विसृज विष्वगुल्काः ॥ प्रतिस्पशो विसृज तूर्णितमो भवा पायुर्व्विशो अस्या अदब्धः। यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्। उदग्ने तिष्ठ प्रत्या तनुष्वन्यमित्राँ ओषतात्तिग्महेते। यो नो अरातिं समिधा न चक्रे नीचा तं ध्यक्ष्यत

सन्नशुष्कम् ।। ऊर्द्धवो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने अवस्थिरा तनुहि यातु जूनां जामिमजामिम्प्रमृणीहि शत्रून् । इत्यन्नपात्रे तिलान्विकर्य्य, ओम् उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः असुय्यँ ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ।। अङ्गिरसो नः पितरो नवग्वा अथर्व्वाणो भृगवः सोम्यासः। तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ।। ये नःपूर्व्वे पितरः सोम्यासो नूहिरे सोमपीथं वशिष्ठाः ।। तेभिर्य्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ।। ओम् सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्व्वतः स्पृत्वाऽत्यतिष्ठद्दशांगुलम् इत्यादि ।। ओम् आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः । ॐनमः शम्भवाय च मयोभवाय च नमः । शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ।। ॐ नमस्तुभ्यं विरूपाक्ष ! नमस्तेऽनेकचक्षुषे। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ।। ॐ सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ। चक्रवाकाः शरद्वीपे हंसाःसरसि मानसे।। तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ ।। ॐ नमस्येऽहं पितॄन् स्वर्गे ये वसन्त्यधि देवताः। देवैरपि हि तृप्यन्तु ये च श्राद्धैः स्वधोत्तरैः । ॐ रुची रुची रुचिः । ततः पिण्डिकापश्चिमदिशि कुशत्रयं धृत्वा सिक्त्वा एकस्मिन् पुटके तिलघृतमधुसहितमन्नं जलेनाप्लावितं कृत्वा ओम् अग्निदग्धाश्च ये जीवा येऽप्यदगधाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम्। इति मोटकेन कुशोपरि दद्यात् ।। ततः सव्येनाचम्य हरिं स्मृत्वाऽपसव्येन गायत्रीं त्रिर्ज्जपित्वा ओम् मधुमधुमधु इति पठेत्।

ततः पिण्डकानिर्म्माणम्। ओम् अपहता असुरा रक्षांसि वेदिषदः इतिमन्त्रेण सेकः प्रादेशकरणञ्च मोटकेन ।। तदुपरि छिंन्नमूलास्तरणं तत्सेकः ।। सव्येन देवताभ्य इति त्रिर्ज्जपेत् । ततोऽपसव्येन पुटके जलतिलगन्धपुष्पाणि दत्वा पुटकं वामहस्तेनादाय दक्षिणेन मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र ! पितरमुकशर्म्मन् अत्रावनेनिक्ष्व ये चात्र त्वानुयाँञ्च त्वमनु तस्मै ते स्वधा इति पितृतीर्थेनच्छिन्नमूलकुशोपर्य्यवनेजनं दद्यात् ।। अत्र जलस्पर्शः । ततस्तिलघृतमधु सहितं बिल्वप्रमाणपिण्डं निर्म्माय दक्षिणहस्तेनादाय वामहस्ते धृत्वा दक्षिणेन मोटकतिजलान्यादाय ओम् अद्यामुक गोत्र ! पितरमुकशर्म्मननेष ते पिण्डो ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इति छिन्नमूलोपरि पिण्डं दत्वा जलं स्पृशेत् । ततः पिण्डाधारकुशमूले करं प्रोञ्छय सव्यं कृत्वाऽऽचम्य हरिं स्मरेत् ।। अपसव्यं कृत्वा पिण्डपात्रप्रक्षालनजलपुटके निधाय वामहस्ते कृत्वा दक्षिणहस्तेन मोटकतिलजलान्यादाय, ओम् अद्यामुकगोत्र ! पितरमुकशर्म्मन्नत्र प्रत्यवनेनिक्ष्व ये चात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इति

पिण्डोपरि प्रत्यवनेजनं दत्वा जलस्पर्शः। ततः ओम् अत्र पितर्मादयस्व यथाभागमावृषायस्व इति श्वासं नियम्यैशान्याभिमुखो भूत्वा ओम् अमीमदत पिता यथाभागमावृषायिष्ट इति मन्त्रं पठन् श्वासं त्यजन् तेनैव पथा परावृत्य दक्षिणां दिशंमुखमानयेत् । ततो दक्षिणहस्तेन नीवीं विस्रंस्य सव्येन करौ प्रक्षाल्य विष्णुं स्मरेत् । ततोऽसव्येन वामेन पाणिना सूत्रमादाय दक्षिणहस्तेन ओम् एतत्ते पितर्व्वासः इति पिण्डोपरि सूत्रं दत्वा, मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्र ! पितरमुकशर्म्मननेतद्वासो ये यात्र त्वानुयाँश्च त्वमनु तस्मै ते स्वधा इत्युत्सृज्य, जलस्पर्शः ।। ततः पिण्डोपरि तूष्णीं गन्धपुष्पधूपदीपताम्बूलानि दत्वा पिण्डशेषान्नं पिण्डसमीपे विकिरेत् ।।

ततः पुष्पमादाय, ओम् वसन्ताय नमस्तुभ्यं, ग्रीष्माय च नमो नमः । वर्षाभ्यश्च शरत्संज्ञऋतवे च नमः सदा ।। हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च । माससंवत्सरेभ्यश्च दिवसेभ्यो नमः सदा ।। ओम् वसन्तादिषड्तुभ्यो नमः इति पठेत् ।। ततो ऽन्नपात्रोपरि ओम् शिवा आपः सन्तु इति जलम् । ओम् सौमनस्यमस्तु इति पुष्पम् । ओम् अक्षतञ्चारिष्टमस्तु इत्यक्षतञ्च दद्यात् ।। ततः पुटके जलन्निधाय मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्रस्य पितुरमुकशर्म्मणो दत्तैतदन्नपानादिकमुपतिष्ठताम् इतिजलं पिण्डोपरि दद्यात् ।। ततःसव्येन ओम् अघोरःपिताऽस्तु इतिपूर्वाग्रां वारिधारां दद्यात् ।। ततः पूर्व्वाभिमुखः ओम् गोत्रन्नो वर्द्धताम् इति पठेत् ।। ततोऽपसव्येन सपवित्रकुशत्रयेण सूत्रादिकं पिण्डादपनीय पिण्डोपरि दक्षिणाग्रं सपवित्रं धृत्वा पुटके सघृतं जलं निधाय ओम् उर्ज्जव्वँ-हन्तीरमृतं घृतं पयःकीलालं परिस्रुतम् , स्वधा स्थ तर्प्पयत मे पितरम्[1] । इति मन्त्रेण सपवित्रपिण्डोपरि दक्षिणाग्रां वारिधारां दद्यात् ।। ततो नम्रीभूय पिण्डमाघ्रायोत्थाप्य पिण्डाधारकुशान् वह्नौ क्षिपेत् ।। ततोऽर्घपात्रमुत्तनीकृत्य मोटकतिलजलान्यादाय ओम् अद्यामुकगोत्रस्य पितुरमुकर्म्मणः कृतैतत्साँव्वत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथनामगोत्राय ब्राह्मणाय दक्षिणामहं ददे इति दक्षिणां दद्यात् ।। ततः सव्यं कृत्वा ओम् गोत्रन्नो वर्द्धताम्, दातारोनोऽभिविर्द्धन्तां, वेदाः सन्ततिरेव च श्रद्धा च नो मा व्यगमद् बहुदेयञ्च नो अस्तु, अन्नञ्च नो बहुभवेदतिथींश्च लभेमहि याचितारश्च नः सन्तु, मा च याचिष्म कञ्चन। ओम् एताः सत्याशिषस्सन्तु ।। ओम् देवताभ्य इति त्रिर्ज्जपेत् ।। अपसव्येन दीपं निर्वाप्य, सव्येन हस्तौ पादौ प्रक्षाल्य वामदेव्यगानं कुर्यात्[2]।।

---

१. मातुः प्रसंगे 'मातरम्' ।
२. वामदेव्यगानं ७२ पृष्ठे ।

ततः ओम् प्रमादात् कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ ओम्विष्णुर्विष्णुर्हरिर्हरिः । ततः श्राद्धीयद्रव्याणि ब्राह्मणेभ्यः प्रतिपादयेदम्भसि वा क्षिपेत् ॥ ततः पिण्डिकां छित्वा सूर्य्यं प्रणमेत् ॥ इति छन्दागानामेकोद्दिष्टविधिः समाप्तः।

## जीमूतवाहनव्रतम्

अथाश्विनकृष्णाष्टम्यां प्रदोषे जीमूतवाहनं पूजयेत् । तथाहि जीवितपुत्रिकाव्रते अष्टमी प्रदोषव्यापिनी ग्राह्या यदाह भविष्ये—इषे मास्यसिते पक्षे चाष्टमी या तिथिर्भवेत्। पुत्रसौभाग्यदा स्त्रीणां ख्याता सा जीवपुत्रिका । शालिवाहनराजस्य पुत्रो जीमूतवाहनः । तस्यां पूज्यस्स नारीभिः पुत्रसौभाग्यलिप्सया ॥ प्रदोषसमये स्त्रीभिः पूज्यो जीमूतवाहनः । पुष्करिणीं विधायाथ प्राङ्गणे चतुरस्रिकामिति **विद्यापतिठक्कुरादिकृतवर्षकृत्यादिभ्यः**। उभयदिनव्याप्तौ सप्तमीयुतैव ग्राह्या ॥ तथा च **विश्वरूपनिबन्धे** सप्तम्यामुदिते सूर्य्येपरतश्चाष्टमी भवेत्। तत्र व्रतोत्सवं कुर्यान्न कुर्य्यादपरेऽहनि ॥ (व्रतमात्रेऽष्टमी कृष्णा पूर्वा शुक्लाष्टमी परा इति **तिथितत्वचिन्तामणौ महेशठक्कुरः** ॥ पूर्वाह्णे पारणां कुर्य्यादित्यादिवाक्यानुरोधेन नवम्यलाभेऽष्टम्यामपि कुर्य्यादिति बहुनिबन्धस्वरसः ॥ वस्तुतस्तु[१] पूर्वेद्युर्वा परेद्युर्वा यस्यामुदयते रविरित्यादि वचनस्वरसादष्टम्यां भोजने दोषश्रवणाच्चोभयदिने प्रदोषाव्याप्तौ परेद्युरेवेति म० म० शुभंकरठक्कुरकृततिथिनिर्णये म० म० श्रीरज्जेमिश्रकृततिथिनिर्णये च निर्धारितम् ॥)

## अथ पूजाविधिः

आश्विनकृष्णाष्टम्यां प्रातरेव कृतस्नानादिराचान्ता व्रतकर्त्री जलाशये प्राङ्गणे वा पूर्वाभिमुखी भूत्वा ताम्रपात्रेणार्घमादाय नम एषोर्घः सूर्याय नमः इत्यर्घं दत्वा कुशत्रयतिलजलान्यादाय नमोऽद्यारभ्य षोडशवर्षाणि यावत् प्रतिवर्षीयाश्विनकृष्णाष्टम्यां प्रदोषे जीमूतवाहनव्रतमहमाचरिष्यामीति निवेद्य प्रदोषसमये गोमयोपलिप्तपरिष्कृतभूमौ प्राङ्गणे पुष्करिणीं कारयित्वा तत्र पर्कटीवृक्षमारोप्य तदुपरि मृद्गोमयनिर्मितां चिल्हीं शाखोपरि, तथैव श्रृगालीमधः कोटरे धृत्वा मध्ये जलपूर्ण-कलशं धृत्वा तत्र दर्भमयीं जीमूतवाहनप्रतिमां निर्माय धृत्वा नानावर्णपताकादिभिरलंकृत्य कुशत्रयतिलजलान्यादाय नमोऽस्यां रात्रावाश्विनमासीयकृष्णपक्षीयाष्टम्यां तिथौ अमुकगोत्राया अमुकीदेव्या मम सकलपुत्रपौत्रादिचिरजीवित्वसकलसुखसौभाग्यावैधव्यगोधान्यादिसमृद्धिकामनयाऽद्यादिषोडशवर्षाणि यावत् जीमूतवाहनपूजनमहङ्करिष्ये ॥

---

१. क[illegible]ष्ठान्तर्गतः पाठोजगद्धरशर्मणा योजितः। यथा एकादश्यां भोजननिषेधो व्रतदिनस्यैव, व्रतस्यावश्यकत्वं बाधयति तथैवेहापि तेन मूलोक्तं सम्यगेव।

इति संकल्प्य ब्राह्मणद्वारा ''मनोजूतिरि'' त्यनेन प्राणप्रतिष्ठां कारयेत् ।। ब्राह्मणालाभे स्वयमेव मन्त्रं विनैव अक्षतमादाय नमो जीमूतवाहन! इहागच्छ इह सुप्रतिष्ठितो भव इत्यावाह्य एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि नमो जीमूतवाहनाय नमः ।। इदमनुलेपनम् ।। इदं रक्तानुलेपनम् ।। इदमक्षतम् ।। एतानि पुष्पाणि ।। इदं पीतवस्त्रम् ।। इमे यज्ञोपवीते बृहस्पतिदैवते ।। इदं माल्यम् ।। एष धूपः ।। एष दीपः ।। एतानि सताम्बूलनानाविधनैवेद्यानि ।। इदमाचमनीयम् ।। एष पुष्पाञ्जलिः ।। नमो जीमूतवाहनाय नमः ।। एतानि नानाविधफलशष्कुलीपोलिकातालफलयुत-पीतवस्त्राच्छादितसप्तडल्लकानि नमो जीमूतवाहनाय नमः ।। एवं वंशपत्राणि च दत्वा प्रणम्य रूपं देहीति वरं प्रार्थयेत्। ततो नमः चिल्हि ! इहागच्छ इह तिष्ठ ।। एतानि पाद्यादीनि नमः चिल्ह्यै नमः ।। एवं गन्धादिभिः पूजयेत् ।। ततो नमः शृगालि! इहागच्छ इह तिष्ठ ।। एतानि पाद्यादीनि नमः शृगाल्यै नमः ।। एवं गन्धादिभिः संपूज्य, नमः पर्कटीवृक्ष ! इहागच्छ इह तिष्ठ ।। एतानि पाद्यादीनि नमः पर्कटीवृक्षाय नमः ।। एवं गन्धादिभिः पूजयेत् ।। नमो बाहूटार ! इहागच्छ इह तिष्ठ ।। एतानि पाद्यादीनि बाहूटाराय नमः ।। एवं गन्धादिना संपूज्य, नमो मरुस्थल ! इहागच्छ इह तिष्ठ ।। एतानि पाद्यादीनि नमो मरुस्थलाय नमः एवं गन्धादिपञ्चोपचारैः सर्वान् पूजयेत् ।। त्रिवारं प्रदक्षिणीकृत्य प्रणम्य कथां शृणुयात् ।।

# अथ जीमूतवाहन व्रतकथा

कैलासशिखरे रम्ये गौरीपृच्छति शङ्करम्। यदहं श्रोतुमिच्छामि तत् त्वं कथितुमर्हसि ।।१।। **पार्वत्युवाच**—व्रतेन केन तपसा पूजया नियमेन वा। ससौभाग्या हि जायन्ते स्त्रियो जीवितपुत्रिकाः ।।२।। **शङ्कर उवाच**—आश्विने कृष्णपक्षे तु या भवेदष्टमी तिथिः। पूजयन्ति स्त्रियस्तस्यां पुत्रकामाः सहर्षिताः ।।३।। शालिवाहनराजस्य पुत्रं जीमूतवाहनम्। देवं दर्भमयं कृत्वा स्थापयेद्वारिभाजने ।।४।। पीतलोहितवर्णैश्च कार्पासास्थिभिरेव च। नानावर्णपताकाभिर्गन्धपुष्पादिभिस्तथा ।।५।। प्रकल्प्य प्राङ्गणे कोष्ठं कृत्वा पुष्करिणीं ततः। तत्रैव पर्कटीशाखा धर्त्तव्या जलसन्निधौ ।।६।। चिल्ही शृगाली धर्त्तव्या सिन्दूरारुणमस्तका। ते उभे तत्र कर्त्तव्ये गोमयैर्मृत्तिकादिभिः ।।७।। वंशपत्रेण कर्त्तव्या पूजा वंशविवृद्धये। पञ्चोपचारपूजाभिस्तं देवं विप्ररूपिणम् ।।८।। पूजयित्वा कथामेनां याः शृण्वन्ति वरस्त्रियः। उपवासं प्रकुर्वन्ति ताः स्युः पूर्णमनोरथाः ।।९।।

अस्मिन् महामण्डले समुद्रोपकण्ठे नर्मदातटे दक्षिणापथे कनकावती नाम नगरी। तत्रानेककरितुरगपदाति-सामग्रीसहितो निर्जितसकलभूपालो मलयकेतुर्नाम राजा बभूव। नदीपश्चिमकूले बाहूटालनाम मरुस्थलं, यत्र महान् घूघूपर्कटी-तरुरति-

कोटरयुक्तो वर्तते। तत्रैकाशृगाली प्रतिवसति स्म। तद्वृक्षशाखायामनेकदिवसादारभ्यैका चिल्ही प्रतिवसति स्म। ताभ्यां चिल्हीशृगालीभ्यामनुदिनेनाधिका प्रीतिर्म्मित्रता च सञ्जाता। तत्रैव कदाचिदाश्विनकृष्णाष्टमीदिने तन्नगरवासिनीभिः स्त्रीभिरुत्तमाधममध्यमाभिर्ज्जीमूतवाहनपूजा समाचरिता, कथा च श्रुता। ताभ्यामपि कथां श्रुत्वा पूजां विधाय स्वं स्वं वासस्थानमागत्य स्थितिश्च कृता। अत्रान्तरे तद्दिनसंध्यायां तन्नगरवासिदन्तासेठिपुत्रो लोकान्तरितः। तत्रैव नर्म्मदातटे तं शवं चितायामारोपयाग्निं दत्वा तद्बान्धवाः स्वगृहमागताः। ततो रात्रिसमये निबिडान्धकारे घनतरमेघ-गर्जितविद्युल्लता-स्फुरितदिग्भागे अतिक्षुधाकुलया सन्निधिमेत्यानिशं शवमांसलुब्धया शृगाल्या चिल्ही साभिहिता। मित्र! स्निग्धे। चिल्हि ! जागर्षि, तत्काले चिल्ह्या हर्षितयोक्तं सखि! जागर्मि ॥ एवं वारं वारं शृगाल्या साऽभिहिता ॥ तया तदेवोत्तरं दत्तम् ॥ ततश्चिल्ह्या मनसाचिन्तितं एषा शृगाली किमर्थं वारं वारं मामभिभाषते । तदेतस्याश्चरितं जानामीति कृत्वा निद्रां भावयित्वा निवृत्तीभूय स्थिता। ततोऽतिलुब्धया चिल्ही संभाषिता, पुनस्तदा तया किमप्युत्तरं न दत्तम् ॥ तदेतावता निद्राधिक्यमवगत्य कोटरवनान्निर्गत्य नदीतीरं गत्वा मुखेन जलं नीत्वा चिताग्निं निर्वाप्य शवमांसं यथेष्टं खादित्वा खंडं खंडं च कृत्वा समानीय कोटरे धृतम् । एतत् सकलवृत्तान्तम् शाखाग्रस्थायिन्या चिह्ल्या दृष्टम्। ततः प्रभाते वृत्ते शृगाल्या चिल्ही साऽभिहिता प्रिये! चिल्हि! पारणाचर्चा किमिति न क्रियते। ततस्तया रात्रिवृत्तान्तं मनसि कृत्वोदासीनबुद्धया चोक्तं प्रिये! पारणां कुरु, मयाऽपि स्त्रीदत्तद्रव्यादिना पारणा कर्त्तव्या। ततः शृगाल्या रात्रिधृतकोटरस्थशवमांसेन पारणा कृता। ततः चिल्ह्या च नगरस्त्रीदत्तकलायाङ्कुरिकात्रिपोषद्रव्येण पारणा कृता ॥

ततः कालक्रमेण प्रयागतीर्थे दैवगत्या तयोर्म्मरणकाल एकदैवाऽभवत् । तत्-कालेशृगाल्याभिहितम् अहं जन्मान्तरे मलयकेतोर्महाराजस्य महामहादेवी भविष्यामीति इतिकामनां कृत्वा सा लोकान्तरमगमत्। चिल्हीच महामहत्तकस्य बुद्धिसेनस्याहं पत्नी भविष्यामीति जातिस्मरणसंयुक्तेति कामनां कृत्वा लोकान्तरं गता । ततस्तद्व्रतमाहात्म्येन तीर्थमरणेन च तन्नगरवासिवेदज्ञभास्करनाम्नो भिक्षुक-ब्राह्मणस्य गृहे तयोर्ज्जन्म युगपद् वृत्तम् । ततस्ते प्रतिदिनोपचीयमाने कन्यके विलोक्य बुद्धिसेननाम्ना महामहत्तकेन तत्रैका ज्येष्ठा शीला परिणीता। मलयकेतुना राज्ञा कर्पूरावती नाम्नी कनिष्ठा परा परिणीता। ततः कालक्रमेण सा शीलवती गर्भवती वृत्ता प्रसूता च । अनेन क्रमेण सा शीलवती सप्तपुत्रा वृत्ता । कर्पूरावती च राज्ञी मृतसप्तपुत्रानुदिनं क्षीयमाणा वैराग्यवती बभूव ॥ ततश्चैकदा राज्ञी तस्याः सप्तपुत्रान् सेवार्थमागतान् विलोक्य मनस्तापवती भूयो जीमूतवाहनपूजावसरे खट्वायां सुप्ता स्थिता। राज्ञा च महादेवीमनवलोक्याभिहितम्। महामहादेवि ! क्व गता । ततस्तत्

सख्या लीलावत्याऽभिहितम्। अस्मिन् धवलगृहे खट्वायां सुप्ता तिष्ठति। गत्वा राज्ञाऽभिहितं प्रिये! कर्पूरावति! किमर्थं खट्वायां सुप्ता तिष्ठसि। तयोक्तं सुखेनेति। तदा राज्ञाभिहितम् प्रिये! उत्तिष्ठ। तयोक्तं, यदि ममाकाङ्क्षितं क्रियते तदा परमहमुत्तिष्ठामि, नोचेन्नेति। ततो राज्ञा पुनरभिहितम्, सर्वं करिष्यामीति। पुनस्तयोक्तं यद्येवं तदा सत्यं कुरु। ततस्तद्वचसा राज्ञा त्रिः सत्यं कृतम्। ततः कर्पूरावत्या शय्यातः सहसोत्थायाभिहितम्। मद्भगिन्याः शीलावत्याः सप्तपुत्रमस्तकान् छित्वा मयि ददस्वेति। ततो राजा भूमिं स्पृष्ट्वा कर्णौ स्पृशति त्वं पापिष्ठे ! कथमेवं भाषसे ! एवं वारं वारमुत्तरे वृत्ते राज्ञा तत्स्वीकृतम्, कल्पमेतेषां शिरांसि छित्वा त्वयि निवेदितव्यानि ॥ तद्वचनं दृढमवगत्य तया जीमूतवाहनपूजा कृता। ततोऽग्रिमदिने राज्ञा सत्यरक्षार्थं द्वारदेशे यन्त्रकर्तृकाचक्रेण सेवार्थमागतानां महामहत्तकसप्तपुत्राणां शिरांसि छित्वा कर्पूरावत्यै दत्तानि ॥ तत् दृष्ट्वा जातहर्षा बभूव ॥ तानि शिरांसि प्रक्षाल्य सप्तडल्लकेषु कृत्वा सप्तवस्त्रखण्डैराच्छाद्य पारणादिने शीलवतीषु वायनानि दत्वा प्रहितानि। शीलवत्या सप्तपुत्रवधूषु समर्पितान्यभिहितं च, स्वीयस्वीयस्वामिनि समायाते भक्षयितुं दास्यथेति।

अस्मिन्नेवावसरे तद्वृतान्तज्ञानानन्तरं राज्ञो जीमूतवाहनो राजसेवां कृत्वा स्नानार्थं स्वमावासं गच्छन् हडिपादिना परिखाक्षिप्तकबन्धानवलोक्याचिन्तयत् एतेषां मात्रा शीलवत्या मम व्रतं कृतम् इति मनसा विमृश्य मृत्तिकाघटितसप्त- मस्तकानि सप्तकबन्धेषु नियोज्यामृतेनाभिषिक्तानि, उक्तं च, कर्पूरावत्या यानि शिरांसि सप्तडल्लकेषु कृत्वा शीलवत्या कृते प्रहतानि, तानि सप्ततालफलानि भवन्त्वित्युक्त्वा स्ववासमगमत्। ततस्तदनुभावेन ते सर्वे जीविताः सहसोत्थाय पुष्टदेहाः स्फीताकाराः स्वं स्वं घोटकमारुह्य स्वं स्वं गृहं प्रति चलिता बभूवुः। तत्र गते स्नानादिकं विधायोपविष्टाः। तेषां तेषां च वध्वा राज्ञो गृहादागतं श्वश्र्वा निवेदितडल्लकावस्थितवस्तुजातं स्वीयस्वीयस्वामिनि निवेदितम्। ततस्तदनुभावात्तानि शिरांसि सप्ततालफलानि वृत्तानि। तानि तैः सप्तभिर्भ्रातृभिः सप्तफलानि भक्षितानि ॥

ततो राज्ञी च महामहत्तकावासे सप्तपुत्रवधशोकेन क्रन्दनं भविष्यतीत्याकर्णयन्ती स्थिता वर्त्तते स्म । यदा तत्क्रन्दनं न श्रुतम्, तदा तज्जिज्ञासार्थमाशु शूद्री प्रहिता। शूद्रया तत्रागत्य सहर्षं सकलाश्रमीयलोकमवगत्य स्वस्वामिन्यै निवेदितम् । तदवगत्य निवृत्तीभूय स्थिता। ततः प्रभाते वृत्ते पुनस्ते शीलवतीसप्तपुत्राः सेवा कर्तुमागताः । तान् सर्वानवलोक्यातीव दुःखिता महामहादेवी राजानं पप्रच्छ राजन् मलयकेतो ! कल्यं चौरादीनां सप्तशिरांसि छित्वा मयि निवेदितानि, ननु शीलवतीपुत्राणाम्। राज्ञोक्तं, प्रिये ! कल्यं तवाग्रे यन्त्रकर्तृकाचक्रेण तेषां शिरांसि छित्वा त्वयि निवेदितानि ॥ तथापि कथमेवं भाषसे । वयमपि तान् सर्वानवलोक्य सविस्मयं

तिष्ठाम इति। पुनस्तया विमृश्योक्तम्, तदा अद्य कथं पुनस्ते सेवां कर्तुमागताः। राज्ञा विमृश्योक्तम्, प्रिये ! शृणु। त्वद्भगिन्या पूर्वजन्मनि सद्व्रतमाचरितम्, तदनुभावादिह सा जीवितसप्तपुत्रा। त्वया तद्व्रतं नाचरितं, तेन त्वं मृतपुत्रा अतिदुःखिनी वर्त्तसे। तच्छ्रुत्वा निवृत्तीभूय स्थिता। तद्वृत्तान्तम् महामहत्तकेन शीलवत्या ज्ञातम् ॥

ततोऽग्रिमवर्षे व्रतदिने कर्पूरावत्या शीलवतीष्वभिधाय शूद्री प्रहिता, अद्यैकस्थाने पूजा कर्त्तव्या कथाश्रवणं च। शीलवत्योक्तम् मलयकेतोर्महाराजस्य सा महामहादेवी तया सह कथाश्रवणं सर्वथैव न संभवतीत्यवगत्य शूद्री समागत्य राज्ञीषु निवेदितवती। तच्छ्रुत्वा उक्तम् सप्तपुत्रैः सा गर्विता इति। ततो महामहादेवी तद्दिने निवृत्तीभूय स्थिता। ततः प्रभाते वृत्ते पुनः कर्पूरावत्या पारणार्थमभिधाय शीलवत्याः स्थानं प्रति शूद्री प्रहिता। शीलवत्या च पुनस्तदेवोत्तरं दत्तम्। सा महामहादेवी तया सहैकत्र पारणा न संभवतीति दासी तदवगत्य पुरर्निवेदितवती। तच्छ्रुत्वा सा महामहादेवी रोषाद्राजमदान्धहृदया दण्डिकायानमारुह्य पारणार्थमनेकसंभृतिमादाय शीलवतीस्थानं प्रति प्रचलिता। तत्र गता शीलवत्या पानीयमादायासनमुपकल्प्य चरणप्रक्षालनादिकं विधायालिङ्ग्य उपवेश्याभिहितम्, भगिनि ! कुशलन्ते, किमर्थमत्रागमनम्। कर्पूरावत्योक्तम् भगिनि ! त्वया सहैकत्र पारणां कर्त्तुमहमागतास्मि। शीलवत्योक्तम् भगिनि ! त्वया सहैकत्र पारणा न कर्त्तव्या। पुनर्महादेव्याभिहितम्, भगिनि ! सत्वरमुत्तिष्ठ, पारणावेला महती वर्त्तते। ततस्तया शीलवत्या पुनरुक्तम्, महामहादेवि ! राज्यभोगं कुरु, इदानीमपि कुग्रहं त्यज। ततः पुनर्महादेव्या दुर्दैवगृहीतयाऽभिहितम्, अद्यावश्यमेव त्वया सह पारणा कर्त्तव्या। शीलवत्यास्तद्वचनं दृढमवगत्य पारणार्थमनेकसंभृतिमुत्पाद्याभिहितम्, यद्यवश्यं मया सह पारणा कर्त्तव्या तदा नर्म्मदातीरं गम्यतामित्युक्त्वा कर्पूरावती शीलवती च नर्म्मदा तीरं प्रति प्रचलिते ॥ तत्र गते शीलवती कर्पूरावतीमालिङ्ग्य नमस्कृत्याभिहितवती भगिनि ! कर्पूरावति ! इदानीमपि कुग्रहं त्यज, राज्यभोगं गत्वा कुरु ॥ ततः कर्पूरावत्योक्तम् भगिनि कदाचिदप्येवं न संभवतीति ॥ ततः शीलवत्या स्नानं कृत्वा लोकधर्मौ पुरस्कृत्याभिहितम्, अये कर्पूरावति ! पूर्वजन्मवृत्तान्तं किमपि न स्मरसि ॥ तयोक्तं किमपि न स्मरामि। ततः शीलवत्याऽभिहितम्, एषा नर्मदानदी। असौ बाहूटारः। एषा धूधूपर्कटी। अत्र त्वं पूर्वजन्मनि श्रृगाली स्थिता, अहं पुनश्चिल्ही। एतत्पर्कटीकोटरे तवावस्थानम्। एतदग्रशाखायां ममावस्थितिः। तदा तन्नगरवासिनीभिस्त्रीभिर्जीमूतवाहनपूजा समाचरिता कथा च श्रुता। तत् त्वया मयापि तत्सन्निधानं गत्वा जीमूतवाहनपूजां विधाय कथां श्रुत्वा स्वस्ववासस्थानमागत्य स्थितम् ॥ अत्रान्तरे तद्दिनसन्ध्यायामेतन्नगरवासिदन्तासेठिपुत्रो लोकान्तरितः। तं स्वजनबान्धवा नगराच्चितास्थानमानीय चितां विरचय्य दग्ध्वा स्वभवनं प्रति गताः।

ततो रात्रौ त्वया कोटरावस्थितयाऽहमुक्ता, प्रिये ! चिल्हि ! जागर्षि, ततो वारद्वयं जागर्मीत्यभिधायाहं पुनस्त्वदीयचरितं ज्ञातुं निद्रां भावयित्वा निवृत्तीभूय स्थितास्मि । त्वया पुनर्निद्राधिक्यमवगत्य कोटरभवनान्निर्गत्य नर्मदां गत्वा मुखेन जलं नीत्वा चिताग्निं निर्वाप्य यथेष्टं शवमांसं खादित्वा कोटराभ्यन्तरे शवमांसं धृतं, तत्सकलवृत्तान्तं मया ज्ञातम्। अग्रे प्रभाते याते पारणार्थं त्वया मय्यभिहतिम्, प्रिये ! पारणा न कर्त्तव्या ? त्वदीयरात्रिवृत्तान्तमधिगम्योदासीनहृदयया मयाऽभिहितम्, सखि ! पारणां कुरु । मयापि स्त्रीदत्ताङ्कुरिकात्रिपोषादिना पारणा कर्त्तव्या ।। ततस्त्वया शवमांसेन पारणा कृता । मया च स्त्रीदत्तद्रव्यादिना पारण कृता । तदत्रागच्छ पश्येत्युक्त्वा तां हस्ते गृहीत्वा कोटरावस्थितशवमांसास्थिखण्डं कर्पूरावत्यै दर्शयामास । अनेन व्रतभङ्गदोषेण त्वं मृतपुत्रातिदु:खिता । अहं च व्रतपालनाज्जीवितपुत्रा सुखिनी स्वाम्यवियोगयुक्तास्मीति शीलतवती पूर्वजन्मवृत्तान्तं कथयन्ती स्म यावत्तावदेव सा कर्पूरावती पूर्वजन्मचरितमधिगम्य विमुक्तशोकसन्तापा तत्रैव नर्मदातीरे लोकान्तरमगमत् । शीलवती च स्नात्वा सहर्षा मङ्गलतूर्य्यरवेण स्वावासमाजगाम। राजा च मलय- केतुस्तस्या: श्राद्धादिकं कृत्वा राज्यचिन्तां चक्रे ।।

ततो राज्ञा बहुकरितुरगादि-सामग्री-यौतुकं दत्वा स्वपुत्री वसन्तमञ्जुराजाय दत्ता ।। अधुनाऽपि मर्त्यमण्डले या: श्रीजीमूतवाहनं संपूज्य कथां श्रुत्वा उपवासं कृत्वा ब्राह्मणसन्तोषं विधाय पारणां कुर्वन्ति, तास्ता जीवितपुत्रा: सन्तानवत्य: पूर्णमनोरथा भवन्तीति निश्चितम् ।।

*।। इति श्रीगौरीप्रस्तारे श्रीशंकरकथिते जीमूतवाहनकथा समाप्ता ।।*

# अथ आश्विनकृष्णाष्टम्यां महालक्ष्मीपूजा

आश्विनकृष्णाष्टम्यां चन्द्रोदये सति कृतनित्यक्रियो व्रती पूजास्थानमागत्य श्वेतासने उपविश्य श्वेतपत्रकमष्टदलं विलिखेत् ततोऽष्टदलकर्णिकायं पुष्पहस्तेन ॐ कर्पूरधवलाङ्गीं च सर्वसम्पत्तिदायिनीम् । शुभ्रवस्त्रपरीधानां मुक्ताभणभूषिताम् । पङ्कजासनसंस्थानां स्मेराननंसरोरुहाम् । शारदेन्दुकलाकान्तिं मृगनेत्रां चतुर्भुजाम् ।। अभितो गजयुग्मेन सिच्यमानां घटाम्बुना ।। इति ध्यात्वा–एवंभूतां महालक्ष्मीं कर्पूरागरुचन्दनैर्लिखित्वा पुष्पाक्षतमादाय–ॐ महालक्ष्मि समागच्छ पद्मनाभपदादिह । पञ्चोपचारपूजेयं त्वदर्थन्देवि संभृतम् । इत्यनेन ॐ श्रीमहालक्ष्मि इहागच्छ । ॐ आलयन्ते विकसितं कमलं कमलालये । अमले कमलेऽस्मिन् त्वं स्थितिं मत्कृपया कुरु । इत्यनेन ॐ श्री महालक्ष्मि इहतिष्ठ । ॐगङ्गादिसलिलाधारं तीर्थमन्त्राभिमन्त्रितम् । दूरयात्रा श्रमहरं पाद्यं देवि गृहाण तम् ।। इदं पाद्यम्० । अनेनैव एषोर्घ्य:। ॐ मलायाचलसंपन्नं नानापन्नगरक्षितम् । शीतलं बहुलामोदं चन्दनं विन्ध्यतामिदम् ।।

इदमनुलेपनम्० । इदं सिन्दूरम्० । ॐ मिलत्परिमलामोदमत्तालिकुलसंकुलम् । आनन्दिनन्दनोद्यानं पद्मायै कुसुमन्नमः । एतानि पुष्पाणि० । इदं माल्यम्० । ॐ तन्तुसन्तानसन्नद्धं कलाकौशलकल्पितम् । सर्वांगाभरणश्रेष्ठं वसनं परिधीयताम् । इदं वस्त्रं बृहस्पतिदै० । ॐ गन्धसंभारसन्नद्धं पृथुवस्तुसमुद्भवम् । सुरासुरनरानन्दं धूपं देवि गृहाणतम् एषधूपः०। ॐ मार्तण्डमण्डलाखण्डचन्द्रबिम्बाग्नितेजसाम् । निदानं देवि दीपोयं निर्मितस्तव भक्तितः। एष दीपः। ॐदेवतालयपातालभूतलाधारधान्यजम् । षोडशाकरसंभारं नैवेद्यं तन्नमः श्रियै । एतानि नानाविधनैवेद्यानि० । स्नानादिकं विधायापि यतः शुद्धिरवाप्यते । तदेतदाचमनीयम्महालक्ष्मि विधीयताम् । इदमाचमनीयम्० । ॐ पातालतलसंभूतवदनाम्भोजभूषणम् । नानपुष्पसमाकीर्णं ताम्बूलं देवि ते नमः । इदं ताम्बूलम्० एष पुष्पाञ्जलिः ॐ श्रीमहालक्ष्म्यै नमः । इति संपूज्य अञ्जलिं बद्ध्वा–ॐ विष्णोर्वक्षसि पद्मे च शङ्खचक्रे तथाम्बरे । लक्ष्मि नित्या यथासि त्वं मम नित्या तथा भव ।। इत्यनेन प्रार्थयेत् । ॐ लक्ष्मि देवि गृहाण त्वं डोरकं यन्मया धृतम् । व्रतं संपूर्णतां यातं कृपा कार्या मयि त्वया । इत्यनेन बाहोर्डोरकमुत्तार्य लक्ष्म्याः पार्श्वे निवेदयेत् ।। ततः भाद्रकृत्योक्तकथां श्रुत्वा प्रणम्य विसर्जयेत् ।

*।। इति श्रीमहालक्ष्मीपूजा समाप्ता ।।*

# अथाश्विने हस्तार्के खञ्जनदर्शनम्

तत्र मन्त्रः, ॐ नीलग्रीवस्वरूपेण सर्वकामफलप्रद । पृथिव्यामवतीर्णोऽसि खञ्जरीट नमोस्तु ते ।।१।। त्वं योगयुक्तो मुनिपुत्रकस्त्वमदृश्यतामेषि शिखोद्गमेन । संदृश्यसे प्रावृषि निर्गतायां त्वं खञ्जनाश्चर्य्यमयो नमस्ते ।।२।।

**तद्दर्शनफलम्**–अश्वेषु गोषु गजवाजिमहोरगेषु राज्यप्रदः कुशलदः शुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषु दृष्टो दुःखं ददाति बहुशः खलु खञ्जरीटः ।।१।।

## आश्विनकृष्णनवम्यामन्वष्टका श्राद्धं कुर्य्यात्

तत्र कात्यायनः ।। अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् । पित्रादिमातृमध्ये च तथा मातामहान्तिकमिति ।।१।। यथाह ब्राह्मपुराणे ।। पितॄणां प्रथमं दद्यान्मातॄणां तदनन्तरम् । ततो मातामहादीनामन्वष्टकमितिक्रमः ।।२।। यथा ।। सर्वासामेव मातॄणां श्राद्धं कन्यां गते रवौ । नवम्यामेव कर्त्तव्यं ब्रह्मलब्धवरा च सा ।। ३।। इति श्राद्धसूत्रोक्तेः श्राद्धविवेके रुद्रधरोपाध्याया–"अन्वष्टकास्तु साग्नीनामावश्यक-श्राद्धकालः । अन्वष्टकाश्राद्धविधाने साग्निकर्तृकत्वलिङ्गदर्शनादिति" । देवपूर्वमेव

पित्रादिभ्यः पिण्डं दत्वा मात्रे पितामह्यै प्रपितामह्यै च दत्वा मातामहादिभ्यो दद्यात् इतिक्रमः ।।[१] श्राद्धानधिकारणिस्तु केवलं ब्राह्मणान् भोजयेयुः ।। अकरणे प्रायश्चित्तमाह कात्यायनः ।। अमावास्याव्यतीपाते पौर्णिमान्वष्टकासु च ।। विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ।। इयं पूर्वाह्णव्यापिन्येव[२] ग्राह्या ।। उभयदिनव्याप्तौ परैव इति तिथितत्वचिन्तामण्यादिनिबन्धेषु निर्णीतत्वात्।

## अथात्र त्रयोदश्यां हस्तार्के गजच्छायायोगः

तद्यथा, योगो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञकः । भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते ।। इति ।। दिवायोग एव गजच्छायायोगः ।। दिवैव योगः शस्तोयं नतु रात्रौ कदा च नेत्यादिमहाभारतवचनात् । अत्रश्राद्धं[३] दानं ब्राह्मणानाञ्च भोजनमावश्कम् । यावद् गजच्छायायोगस्तावद् ब्राह्मणादिभिर्नभोक्तव्यम् । सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः । छायायां कुंजरस्याथ भुक्त्वा तु नरकं व्रजेत् ।। प्रमादाद् ब्राह्मणो भुक्त्वा तत्र चान्द्रायाणं चरेदिति ब्रह्मपुराणवचनादिति ।। (मलमासे गजच्छायायोगो न भवतीति मलमासप्रकरणाद्बोध्यमित्येतत्कृत्यमहार्णवद्वैतपरिशिष्टस्मृतिसारस्मृतिसमुच्चयादिनिबन्धैर्मया[४] लिखितम्)।।

## अत्र चतुर्दश्यां शस्त्रहतश्राद्धम्

युवानस्तु गृहे यस्य मृतास्तेषान्तु दापयेत् । शस्त्रेण च हता ये च तेषां दद्याच्च्तुर्दशीम् ।। चतुर्दशीं चतुर्दश्यामित्यर्थः । युवानस्तु षोडशवर्षोपरि त्रिंशद्वर्षाणि यावत् ।।

## अथाश्विनशुक्लप्रतिपदि नवरात्रव्रतारम्भः

तद्यथा हेमाद्रौ भविष्ये, एवञ्च विन्ध्यवासिन्यां नवरात्रोपवासतः । एकभुक्तेन नक्तेन तथैवायाचितेन च ।। पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।। स्नातैःसमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः । वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ।। तथा देवीपुराणदौ, कन्यासंस्थे रवौ शक्र ! शुक्लामारभ्य नन्दिकाम् ।.अल्पाशी ह्यथवैकाशी नक्ताशीवाथ वाय्वदः ।। इत्यादिनानावचनस्वरसात् सर्वैः कर्त्तव्यमेवेति ।। तथाहि, आश्विनशुक्लाप्रतिपद् द्वितीयायुतैव ग्राह्या । यो मां पूजयते भक्त्या द्वितीयायां

---

१. श्राद्धतत्व-श्राद्धचिन्तामण्यादिमतेन अन्वष्टकाश्राद्धे नित्यहवनकर्त्तुरेवाधिकारो नान्यस्येति । निर्णयसिन्धौ तु अत्र सर्वेषामधिकारः कथितः ।।

२. सार्धप्रहररूपः पूर्वाह्णः । तत्रापि सूर्योदयानन्तरत्रिमुहूर्तप्रातःकालानन्तर-त्रिमुहूर्तात्मक-संगवकाले मातृनवमीकृत्यं, ब्राह्मणभोजनमपि तध्यन्तर एव ।

३. पिण्डरहितं पार्वणं, घृतमधुयुतैः पायसैः कार्यम् ।

४. कोष्टान्तर्गतः पाठो जगद्धरशर्मणः ।

गुणान्विताम् । प्रतिपच्छारदीं ज्ञात्वा सोऽश्नुते सुखमक्षयम् ।। यदि कुर्य्यादमायुक्तप्रतिपत्स्थापनम्मम । तस्मै शापायुतं दत्वा भस्मशेषं करोम्यहम् ।। देशभंगो भवेत्तत्र दुर्भिक्षं चोपजायते ।। इति देवीपुराणवचनात् ।। **कृत्यरत्नाकरे चण्डेश्वरः**, मुहूर्त्तपर्य्यन्तमप्युत्तरदिने प्रतिपल्लाभे तत्र परयुतैव ।। यदा तु पूर्वदिने षष्टिदण्डात्मिकापि वर्धमानोत्तरदिने लभ्यते तदा द्वितीयायोगमनादृत्य पूर्वदिने एव कपालाधिकरणन्यायात्, उत्तरत्र तिथिमलत्वेन निषेधात् ।। यदा क्षयवशादमायुतैव लभ्यते तदा अमाविद्धायामपि प्रतिपदि पूर्वाह्णे कलशस्थापनादि कार्य्यम्, द्वितीयायोगसम्भव एव पूर्वोक्तविधिनिषेधानां प्रवृत्तेः ।।

अथाश्विनशुक्लद्वितीयायामुदयगामिन्यामेव रेवन्तपूजनम् इति सर्वे निबन्धकाराः ।। अथाश्विनशुक्लषष्ठ्यां बिल्वाभिमन्त्रणम् । **तथाहि तिथितत्वचिन्तामणौ कृत्यसागरे** च देवीपुराणे, ज्येष्ठानक्षयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् । सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् ।। पूर्वाषाढयुताष्टम्यां पूजाहोमाद्युपोषणम् । उत्तरेण नवम्यान्तु बलिभिः पूजयेच्छिवाम् ।। श्रवणेन दशम्यान्तु प्रणिपत्य विसर्जयेत् इति ।। सर्वत्र नक्षत्रयोगः प्राशस्त्यबोधकः । तिथिः शरीरं देवानं तिथौ नक्षत्रमाश्रितम् । तस्मात्तिथिं प्रशंसन्ति नक्षत्रं न तिथिं बिना ।। इति **विद्यापतिठक्कुर** धृतयमवचनात् ।। तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम् । योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि ।। इति स्मृत्यन्तरात् ।। यथा नन्दिपुराणे, पत्रीप्रवेशात्पूर्वेद्युः सायाह्ने विन्ध्यवासिनीम् । चण्डीमामन्त्रयेद्विद्वान्नात्र षष्ठीपुरस्क्रिया ।। सायं षष्ठ्यान्तु कर्त्तव्यं पार्वत्यास्त्वधि-वासनम् । षष्ठ्यभावेऽपि कर्त्तव्यं सप्तम्यामपि मानवैरिति वचनाच्च ।। तदयमत्र निर्णयः सप्तम्यामुदयगगामिन्यां प्रातरेव पत्रिकाप्रवेशस्तदव्यवहितपूर्वदिने सायंकाले षष्ठ्यलाभेपि बिल्वाभिमन्त्रणं कुर्य्यात् । तत्र षष्ठीतिथेर्नक्षत्रस्य च सद्भावः प्रशस्तो, नात्यावश्यक इति ।।

अत्र शुक्ला महाष्टमी नवमीयुक्तैव ग्राह्या सति संभवे इति सर्वनिबन्धेषु निर्धारितत्वात् । महानवमी तु पूर्वयुतैव ग्राह्या । कन्यांगते सवितरि शुक्लपक्षेऽष्टमीयुता । मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ।। इति स्मृतेश्च ।। महानवमी पूर्वाह्णव्यापिनी चेदष्टमी विद्धा त्रिशूलिनीपूजादौ ग्राह्या ।। प्रभूतबलिदाने तु परयुतैव अष्टमीयोगे बलिदाननिषेधात् ।।

दशमी तु, सूर्योदये यदा राजन् दृश्यते दशमीतिथिः। आश्विने मासि शुक्लान्तु विजयान्तां विदुर्बुधाः ।। इत्याद्यनेकवचनस्वरसात्परयुतैव ग्राह्या इति ।। पूजनविधिस्तु शारददुर्गापूजापद्धतौ द्रष्टव्या ।। एतद्व्रतकरणासमर्थश्चेत् स्वस्वकुलदेवतास्थाने बलिदानकुमारीपूजनं कुर्यात्, चण्डीस्तोत्रं सप्तशतीरूपं च पठेत् ।

*।। इति नवरात्रविधिः ।।*

# अथाश्विनीपूर्णिमायां प्रदोषे लक्ष्मीं पूजयेत्

तथा च ब्रह्मपुराणे, प्रदोषे पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम् । निशीथे वरदालक्ष्मीः कोजागर्तीतिभाषिणी । तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः ।। इयं निशीथप्रदोषोभयव्यापिनी ग्राह्या । तदसंभवे प्रदोषमात्रव्यापिन्यपि । तथाहि दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः । स्त्रीबालवृद्धमूर्खैश्च भोतव्यं पूजितैः सुरैरिति च ।। तत्र सर्वाणि गृहाणि आवाससमीपमार्गाश्च परिष्करणीयाः शरीरं चन्दनादिना भूषयितव्यम् । स्त्रीबालवृद्धमूर्खान् विहायान्यैर्दिने न भोक्तव्यम् ।।

प्रदोषसमये यथालाभं पूजासामग्रीमासादयेत् । तत आचान्तः शुभासने उपविश्य कुशत्रयतिलजलान्यादाय ओम् अस्यां रात्रौ आश्विने मासि शुक्ले पक्षे पञ्चदश्यां तिथावमुकगोत्रस्यामुकशर्म्मणो मम सकलदुःखदारिद्र्यनिरासपूर्वकदीर्घायुरारोग्य-पुत्रपौत्रमहैश्वर्यसुखसंपदभिवृद्धिकुलाभ्युदयाद्यभीष्टसिद्धिपूर्वकलक्ष्मीन्द्रप्रीतिकामनया द्वारोर्ध्वभित्त्यादिपरिवारदेवतापूजनपूर्वकलक्ष्मीन्द्रकुबेरपूजनमहङ्करिष्ये ।। परार्थपूजने तु अमुकगोत्रस्येत्यादिपूजनमहङ्करिष्यामीति, सङ्कल्पे ऊहः कर्त्तव्यः। यथा कुलाचारोक्ताधारे, पात्रमेकं संस्थाप्य तस्मिन् षट्कोणवृत्ताष्टदलभूपुरात्मकं यन्त्रं विलिख्य तत्रादौ द्वारदेशे जलेन द्वारमभिषिच्य, गंधपुष्पाक्षतैः ओम् द्वारोद्‌र्ध्वभित्तिभ्यो नमः। ओम् द्वारदेवताभ्यो नमः, इति द्वारपूंजां विधाय, पूजास्थानमागत्य पुनः गन्धपुष्पाक्षतैः ओम् वास्तुपुरुषाय नमः, ओम् ब्राह्मणे नमः इति संपूज्य, अक्षतमादाय ओम् भूर्भुवः स्वः **हव्यवाहन** ! इहागच्छ इह तिष्ठ । एतानि पाद्यादीनि ओम् हव्यवाहनाय नमः । इदमनुलेपनम् । इदं रक्तानुलेपनम्। इदमक्षतम् । एतानि पुष्पाणि। एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यानि। एते यवचूर्णघृतशालितण्डुलाः । इदमाचमनीयम्। एष पुष्पाञ्जलिः । ओम् हव्यवाहनाय नमः इतिपूजयेत्।।

ततः **पूर्णेन्दो** ! इहागच्छ इह तिष्ठ । एतानि पाद्यादीनि । एषोऽर्घः ॐ पूर्णेन्दवे नमः। इदमनुलेपनादिपूर्वोक्तोपचारैः संपूज्य, दुग्धपायसञ्च दद्यात् ।। ओम् **सभार्य्यरुद्र** ! इहागच्द इह तिष्ठ। एतानि पाद्यादीनि ओम् सभार्य्यरुद्राय नमः। एवं गन्धादिभिः पूर्ववत्पूजयेत्। एते माषतिलतण्डुलाः ओम् सभार्य्यरुद्राय नमः इति पूजयेत् ।। ततः ओम् **स्कन्द** इहागच्छेत्यावाह्य, एतानि पाद्यादीनि ओम् स्कन्दाय नमः। एवं गन्धादिभिः संपूज्य , एतेमाषतिलतण्डुलाः ओम् स्कन्दाय नम इति दद्यात् ।। ओम् नन्दीश्वरमुने! इहागच्छ इह तिष्ठ। एतानि पाद्यादीनि। एते माषतिलतण्डुलाः ओम् नन्दीश्वरमुनये नम इति पूर्ववत् पूजयेत् ।। ततः ओम् **गोमति** ! इहागच्छ इह तिष्ठ। एतानि पाद्यादीनि ओम् गोमत्यै नमः। एवं पूर्ववत्संपूज्य एते माषतिल-

तण्डुलाः ओम् गोमत्यै नम इति दद्यात् ।। ओम् **सुरभि**! इहागच्छ इह तिष्ठ। एतानि पाद्यादीनि ओम् सुरभ्यै नमः ।। एवं पूर्ववत्संपूज्य, इदं सघृतकृशरान्नम् ओम् सुरभ्यै नमः।। ओम् **निकुम्भ**! इहागच्छ इह तिष्ठ। एतानि पाद्यादीनि ॐ निकुम्भाय नमः एवं गन्धादिना संपूज्य माषतिलतण्डुलाँश्च दद्यात् । एवं **छागवाहनं** हुताशनम्, **मेषवाहनं** वरुणं, **हस्तिवाहनं** विनायकम्, **अश्ववाहनं** रेवन्तम्, च आवाह्य पूर्ववत्संपूज्य माषतिलतण्डुलात्मकनैवेद्यञ्च प्रत्येकं दद्यात् ।।

वामहस्तेन पुष्पं गृहीत्वा, ओम् या सा पद्मासनस्था, विपुलकटितटी पद्मपत्रायताक्षी, गम्भीरावर्तनाभिः, स्तनभरनमिता शुभ्रवस्त्रोत्तरीया। लक्ष्मी-र्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भैः, नित्यं सा पद्महस्ता, मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ।। इति ध्यात्वा ।। ओम् भूर्भुवः स्वर्लक्ष्मि! इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओम् मन्दाकिन्याः समानीतैर्हेमाम्भोरुहवासितैः। स्नानं कुरुष्व देवेशि! सलिलैश्च सुगंधिभिः ।। ओम् लक्ष्म्यै नमः। इदमनुलेपनम्। इदं सिन्दूरम्। इदमक्षतम्। पुष्पमादाय ओम् मन्दारपारिजाताद्यैरनेकैः कुसुमैःशुभैः। पूजयामि शिवे ! भक्त्या कमलायै नमो नमः ।। एतानि पुष्पाणि ओम् लक्ष्म्यै नमः इति त्रिभिर्दत्वा, इदं रक्तवस्त्रम्। इदं विल्वपत्रम्। इदं माल्यम्। एष धूपः। एष दीपः। एतानि नानाविधनैवेद्यानि। इदमाचमनीयम् एतानि नानाविधपक्वान्नसहितनारिकेलोदकसहितनानाफलानि। एतानि ताम्बूलानि इदमाचमनीयम्। ओम् नमस्ते सर्वभूतानां वरदासि हरिप्रिये! या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्च्चनात् ।। एष पुष्पाञ्जलिः ओम् महालक्ष्म्यै नमः इति त्रिर्दद्यात् ।।

ततः प्रार्थना ।। ओम् समस्तसंपत्सुखदां महाश्रियं, समस्तकल्याणकरीं महाश्रियम्। समस्तसौभाग्यकरीं महाश्रियं, भजाम्यहं ज्ञानकरीं महाश्रियम् ।। समस्तभूतान्तरसंस्थिता त्वं, समस्तभोक्त्रीश्वरि! विश्वरूपे! तन्नास्ति यत्तद्व्यतिरिक्तवस्तु त्वत्पादपद्मं प्रणमाम्यहं श्रीः ।। शान्त्यै नमोस्तु शरणागतरक्षणायै, कान्त्यै नमोस्तु दुरितक्षयकारणायै । क्षान्त्यै नमोस्तु कमनीयगुणाश्रयायै, धात्र्यै नमोस्तु धनधान्य-समृद्धिदायै ।। सर्वमङ्गलसंपूर्णा सर्वैश्वर्यसमन्विता। आयाहि श्रीमहालक्ष्मीस्त्वत्कला मयि तिष्ठतु ।। रूपं देहि यशोदेहि भाग्यं भवति! देहि मे। धर्मान् देहि धनं देहि सर्वान् कामान् प्रदेहि मे ।। इति संप्रार्थ्य, ॐ विश्वरूपस्य भार्यासि पद्मे! पद्मालये! शुभे! सर्वतः पाहि मां देवि ! महालक्ष्मि! नमोस्तु ते ।। इति प्रणमेत् ।।

ततः ओम् भूर्भुवः स्वः इन्द्र ! इहागच्छ इह तिष्ठ। पुष्पहस्तेन ध्यायेत् यथा, चतुर्दन्तगजारूढो वज्रपाणिः पुरन्दरः। शचीपतिश्च ध्यातव्यो नानाभरणभूषितः ।। ततः

एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओम् इन्द्राय नमः। इदमनुलेपनम्। इदमक्षतम्। एतानि पुष्पाणि। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि। इदमाचमनीयम्। पुष्पमादाय, ॐ इन्द्रस्तु महसा दीप्तः सर्वदेवाधिपो महान्। वज्रहस्तो महाबाहुस्तस्मै नित्यं नमोनमः ।। ॐ विचित्रैरावतस्थाय भास्वत्कुलिशपाणये । पौलोम्यालिङ्गिताङ्गाय सहस्राक्षाय ते नमः ।। एष पुष्पाञ्जलिः ओम् इन्द्राय नमः इतिपुष्पाञ्जलित्रयं दत्वा प्रणमेत् ।।

ओम् भूर्भुवःस्वः **कुबेर**! इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यादीनि ओम् कुबेराय नमः। एवं गन्धादिभिस्संपूज्य पुष्पहस्तः ओम् धनदाय नमस्तुभ्यं निधि-पद्माधिपाय च। भवन्तु त्वत्प्रसादान्मे धनधान्यादिसंपदः ।। एष पुष्पाञ्जलिः ओम् कुबेराय नमः इतिदत्वा प्रणमेत्। तत ओम् पूजितदेवताः पूजिताः स्थ क्षमध्वम् स्वस्थानं गच्छत ।। श्रीर्म्मयि रमस्वेति लक्ष्मीञ्च विसृज्य यथाशक्ति ब्राह्मणाय दक्षिणांदत्वा नारिकेलजलादिनैवेद्यं च भुक्त्वा जागरणं कुर्य्यात् ।। इति कोजागरा-लक्ष्मीपूजाविधिः।

# अथकार्तिककृत्यम्

## प्रातः स्नानम्

तिथितत्वचिन्तामणौ विष्णुस्मृतिपद्मपुराणयोः, तुलामकरमेषेषु प्रातःस्नानं विधीयते । हविष्यं ब्रह्मचर्यञ्च महापातकनाशनम् ।। कार्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः। जपन् हविष्यभुक्शान्तः सर्वमापैः प्रमुच्यते । नित्यस्नायी प्रातःस्नायी अत्र स्नानं प्रधानं जपादिकमङ्गम् ।। अत्र सौरमासक्रमो ज्ञेयः। जितेन्द्रिय-त्वम् = ब्रह्मचर्य्यम्। जपो गायत्र्याः ।। हविष्यभोजनं शान्तत्वम् ।। अरुणोदयवेलायां जलाशयं गत्वा नित्यस्नानं कृत्वा कुशादिकमादाय ॐ अमुकगोत्रस्यामुकशर्मणो मम सकलपापक्षयकामोद्यादिकार्तिकमासं यावत् प्रत्यहं प्रातः स्नानमहं करिष्ये । इति संकल्प्य, ॐ कार्तिकेहं करिष्यामि प्रातःस्नानं जनार्दन ! प्रीत्यर्थं तव देवेश! दामोदर! मया सह ।। इमं मन्त्रं समुच्चार्य मौनी स्नायाद् व्रती नरः ।।

**अर्घमन्त्र**–ॐ व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम। गृहाणार्घ्यं मया दत्तं राधया सहितो हरिः ।। अशक्तावाह विष्णुरहस्ये, अशक्त्या त्रिदिनं स्नायान्मद्भक्त्या कार्तिके यदि। तस्मै पुण्यफलं लोके दास्यामि सकलं मुदा।।

## अथास्मिन्नेव दिने आकाशदीपदानम्

यथा, उच्चैः प्रदीपमाकाशे यो दद्याद्विष्णवे नरः। स सर्वकुलमुद्धृत्य विष्णु-

लोकमवाप्नुयात् ।। कार्तिकप्रकरणात्, यस्तु केशवमुद्दिश्य दीपं दद्यात्तु कार्तिके। आकाशस्थं ज्वलन्तं च श्रृणु तस्यापि यत्फलम् ।। धनधान्यसमृद्धस्तु पुत्रवानीश्वरो भवेत्। लोचने च शुभे तस्य विद्वानपि च जायते।

कार्तिकसंक्रान्तिक्रमेण प्रात:कृतस्नानादिराचान्तः ताम्रपात्रेणार्घमादाय नमोअमुकगोत्राया अमुकीदेव्या भगवन् सूर्य्य! भगवत्यो देवता अद्यादिकार्तिकमासं व्याप्य प्रतिसायं विष्णुसंप्रदानकाकाशस्थदीपदानव्रतमहमाचरिष्यामीति निवेद्य, कुशत्रयतिलजलान्यादाय ओम् अमुक गोत्राया अमुकीदेव्याः सर्वकुलोद्धरण-पूर्वकविष्णुलोकावाप्तिकामनया अद्यादिकार्तिकमासं व्याप्य प्रतिनिशमाकाशस्थदीपं विष्णवेऽहं दास्ये ।। अथवा, अमुकेत्यादिश्रीवियोगाभावकामनया अद्यादिकार्तिकमासं व्याप्य प्रतिसायं सान्ध्यमाकाशस्थदीपं श्रीपतयेऽहं दास्ये इति संकल्प्य, प्रदोषे तिलतैलेन पूर्ववद्दीपो देयः ।। अथवा, अमुकेत्यादिसर्वकुलोद्धरणपूर्वकविष्णु-लोकावाप्तिकामनया अद्यादिकार्तिकमासं व्याप्य प्रतिनिशमाकाशस्थं दीपं विष्णवेऽहं दास्ये ।। अथवा, अमुकेत्यादिधनधान्यादिसमृद्धत्वपुत्रवत्त्वैश्वर्य्य-वत्त्वशुभलोचनवत्त्वविद्वत्त्वकामनया अद्यादिकार्तिकमासं व्याप्य प्रतिरात्रम् आकाशदीपं केशवायाहं दास्ये ।। इति संकल्प्य रात्र्युपक्रमे विष्णुं पञ्चोपचारैः संपूज्य, नमो दामोदराय नभसि, तुलायां लोलाया सह। प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे ।। इति पठित्वा एष दीपः नमो विष्णवे नमः ।। द्वितीयव्रते एष दीपः नमः श्रीपतये नमः इति दद्यात् ।। तृतीयव्रते नमः केशवाय नमः इति। एवं मासं यावत् प्रतिसायंसन्ध्यं तिलतैलेन गोघृतेन वा आकाशे दीपं चतुर्मुखं दद्यात् ।। तथाच, तुलाया तिलतैलेन मासं सन्ध्यासमागमे। आकाशदीपं संदद्यान्मासमेकं निरन्तरम् ।। इत्यादि स्मृतेः। (एतद्व्रतस्योद्यापनन्तूत्तरखण्डे लिखिष्यते)।

।। *इत्याकाशादीपदानविधिः* ।।

# अथ शिवदीपदानविधिः

अथ कार्तिककृष्णचतुर्दश्याममावास्यायां वा प्रदोषे शिवाय गोघृतेन तिलतैलेन वा शोभनां दीपमालां दद्यात्।

भविष्यपुराणे शिवाधिकारे, यः कुर्य्यात्कार्तिके मासि शोभनां दीपमालिकाम्। घृतेन च चतुर्दश्याममायाञ्च विशेषतः ।। यावद्दीपप्रसंख्या वै घृतेनापूर्य्य बोधिता। तावद्युगसहस्राणि रुद्रलोके महीयते ।। कार्तिककृष्णचतुर्दश्याममावास्यायां वा बहून् दीपान् प्रज्वाल्य नमोऽद्य कार्तिककृष्णचतुर्दश्यां तिथौ अमुकगोत्राया अमुकीदेव्या एतद्दीपसमसंख्ययुगसहस्रावच्छिन्न रुद्रलोकमहितत्वकामनया इमां दीपमालिकां विष्णुदैवतां शिवायाऽहं दास्ये ।। अमावास्यायां दाने वाक्ये अमावास्यायामित्यूहः ।।

येन पितृपक्षे पार्वणश्राद्धं न कृतं तेन कार्तिकामावास्यायामवश्यं कर्त्तव्यम्। यदाह, येयं दीपान्विता राजन् ! ख्याता पञ्चदशी भुवि । तस्यां दद्यान्न चेद्दत्तं पितॄणान्तु महालये ।। पितॄणां महालये उत्सवाश्रये पितृपक्षे नचेद्दत्तामित्यर्थः ।।

# अथ सुखरात्रिकृत्यम्

तत्र दिने बालवृद्धातुरैर्विना कैश्चिदपि न भोक्तव्यम्। प्रदोषसमये गृहाभ्यन्तरे उपविश्य आचम्य लक्ष्मीं पूजयेयुः। तद्विधिस्तु पूर्वमेव कोजागराकृत्ये अन्वेषणीयः ।। प्रार्थनामन्त्रस्तु तिथितत्त्वे, ॐ विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे ! महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे ।। वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम्। सुखरात्रिप्रभातेषु तन्मे लक्ष्मी व्यपोहतु। या रात्रिः सर्वभूतानां या च देवे व्यवस्थिता। सव्वँत्सरप्रिया या च सा ममास्तु सुमङ्गला ।। माता त्वं सर्वभूतानां देवानां तुष्टिसम्भवा। आख्याता भूतले देवि! सुखरात्रि! नमोस्तु ते ।।

अथास्मिन्नेव प्रदोषे दीपवृक्षाः कर्त्तव्याः। देवगृहचतुष्पथश्मशाननदीपर्वतवृक्षमूलगोष्ठ चत्वरगृहेषु दीपितव्याः । ईदृग्भूमयश्च परिष्करणीयाः। दीपमालापरिवृतस्थाने ब्राह्मणा भोजयितव्याः। स्वयमपि अलंकृतैः स्निग्धैर्वान्धवैः सार्धम्भोक्तव्यम्, रात्रौ च शोभानायां शय्यायां विभूषिताभिर्दयिताभिस्सह शयितव्यम्। नववस्त्राणि मनुष्यभृत्येभ्यो दातव्यानि स्वयञ्च परिधातव्यानि।

इयञ्चामावास्या प्रदोषव्यापिनी ग्राह्या। प्रदोषसमये लक्ष्मीं पूजयित्वा यथाविधि । ब्राह्मणान् भोजयित्वा च भेजयेच्च बुभुक्षितान् ।। तथा तिथितत्त्वचिन्तामणौ, कार्तिके कृष्णपक्षे च प्रदोषे भूतदर्शयोः। नरः प्रदोषसमये दीपान्दद्यान् मनोरमान् ।। ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च। उल्काहस्ता नराः कर्य्युः पितॄणां मार्गदर्शनमिति। उभयदिने प्रदोषव्याप्तौ परा ग्राह्या। दण्डैकरजनीयोगे दर्शः स्याच्च परेऽहनि । तदा विहाय पूर्वेद्युः परेह्नि सुखरात्रिकेतिज्योतिर्वचनात् ।। यदा चोत्तरदिने प्रदोषे दर्शलाभे पूर्वदिने प्रदोषे लभ्यते तदा चतुर्दशीविद्धापि पूर्वदिने एव, कर्म्मकालस्य मुख्यत्वात्। अमावस्या यदा रात्रौ दिवाभागे चतुर्दशी। पूजनीया तदा लक्ष्मी विज्ञेया सुखरात्रिकेतिवचनाच्च ।। उभयदिने व्याप्त्यभावे तु परदिने एव पार्वणानुरोधादुल्काभ्रमणम्।

अत्रोल्काग्रहणं पितॄणां मार्गदर्शनार्थं कार्य्यम् पार्वणोत्तरमेव। प्रदोषे प्रतिपद्योगेपि न दुष्यतीति दर्शश्राद्धे भवेदित्यादिशुभंकरधृतस्मृतेः ।। प्रदीपनयोग्या तृणादिनिर्मिता[1] दीर्घा दीपिका सोल्का तां एकतः प्रदीप्तां गृहाद्बहिर्दक्षिणाभिमुखः तिष्ठन्

१. सार्धद्विहस्ता, शणकाष्ठिकान्तरिता, सप्तबन्धना, चतुर्मुखी उल्का। दीपिका मशाल इतिख्याता।

गृह्णीयात् ।। उल्काग्रहणमन्त्रस्तु ॐ शस्त्राशस्त्रहतानाञ्च भूतानां भूतदर्शयोः। उज्ज्वलज्योःतिषा देहं दहेयं व्योमवह्निना ।। तत उल्कां दक्षिणस्यां दिशि दर्शयन् मन्त्रं पठेत्। यथा, ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम। उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमाङ्गतिम्।। विसर्जनमन्त्रस्तु, ॐ यमलोकं परित्यज्य आगता ये महालये। उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते ।।

*।। इति दक्षिणस्यां प्रक्षिपेत् ।।*

# अथ श्यामापूजानिर्णयः

अत्रैव निशीथे श्यामापूजा यदाह कामाख्यातन्त्रे, शरत्काले च देवेशि! दीपयात्रादिने तथा। अमावस्यां समासाद्य मध्यरात्रौ विचक्षणः ।। मृण्मयीं पुत्तलीं कृत्वा दीपादिभिरलङ्कृताम्। बलिं नानाविधं दद्याद्वाद्यभाण्डसमन्वितम् ।। नृत्यं गीतं कौतुकानि यावत्सूर्योदयं चरेत्। प्रातःकाले शुद्धतोये स्थापयेदविनाशिनीम्। इयञ्च निशीथव्यापिनी ग्राह्या। प्रतिसव्वँत्सरं कुर्य्यात्कालिकाया महोत्सवम्। कार्तिके तु विशेषेण अमावास्या-निशार्द्धके। तस्यां संपूजयेद्देवीं भोगमोक्षप्रदायिनीम्।। उभयदिने निशीथव्याप्तौ प्रदोषव्याप्तिर्नियामिका। प्रदोषव्यापिनी यत्र महानिशि च सा भवेदिति कुलसर्वस्ववचनात्। यदि चोभयदिने तथा, तदा चतुर्दशीयुक्ता ग्राह्या अर्धरात्रे महेशानि! अमावास्या यदा भवेत् ।। चतुर्दशीयुता ग्राह्या चामुण्डा-पूजने सदा ।। तथा—यत्रोभयदिने भूतयुक्तकुह्वां महानिशि।' इमां यात्रां कारयित्वा चक्रवर्ती नृपो भवेत्।। शनिभौमदिनानुरोधात् प्रतिपद्योगे कालीकैवल्ययोगानुरोधाच्च निशीथमात्र-व्यापिनी ग्राह्या ।। तथाहि, चतुर्दशी प्रदोषे तु अमावाश्या महानिशि। शनिभौमदिने देवि निशायां सर्वथा यजेत् ।। महानिशादिने देवि ! प्रतिपच्च यदा भवेत्। कालीकैवल्ययोगोऽयं तद्दिने कालिकार्चनमिति कुलसर्वस्ववचनात् ।। अत्रेयं व्यवस्था, शनिभौमदिनातिरिक्तकालीकैवल्ययोगातिरिक्तदिने चतुर्दशीयुक्ता प्रदोषनिशीथोभयव्यापिनी ग्राह्या। अस्याः पूजाविधिस्तु विस्तरत्वादत्र न लिख्यते। श्यामार्च्चनमहार्णवे द्रष्टव्यम् ।।

## दरिद्रापसारणम्

अस्मिन्नेव निशीथे स्त्रियः शूर्पडिण्डिमदवादनैरलक्ष्मीन्निं सरयेयुः[१]। तथाच मदनरत्नधृतभविष्ये, एवंगते निशीथे तु जने निद्रान्धलोचने ।। तावन्नगरनारीभिः सूर्पडिण्डिमवादनैः। निष्काश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ।।

---

१. उल्काभ्रमणानन्तरं तन्मध्यान्तरितां शणकाष्ठिकामादाय कुलदेवतास्थाने गृहं तां रक्षेयुः। तथैव रात्र्यन्ते शूर्पवादनम्।

## गोवर्धनपूजा

अथ कार्तिक शुक्लप्रतिपदि गोवर्धनं पूजयेत् ।। तथाहि तिथितत्त्वचिन्तामणौ स्कान्दे, प्रातर्गोवर्धनः पूज्यो द्यूतं चापि समाचरेत् । पूजनीयास्तदा गावस्त्याज्ये दोहन वाहने ।। इति । अतः प्रातःकाले गोमयेन गोवर्धनमूर्त्तिं कल्पयित्वा पीत-पुष्पाक्षतादिभिः पञ्चोपचारैः गोवर्धनं संपूज्य प्रणमेदनेन, ब्राह्मे, ओम् गोवर्धन धराधार ! गोकुलत्राणकारक ! कृष्णबाहुकृतच्छाय गवां कोटिप्रदो भवेति ।।

अथास्यामेव पूर्वाह्ने **गोपूजां** कारयेत् । यदाह नारदः, या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप ! पूजनात्त्रीणि वर्धन्ते प्रजाः गावो महीपतिरिति ।। देवलोपि, प्रतिपद्दर्शसंयोगे गवां वै क्रीडनं भवेत्। परविद्धासु करणात्पुत्रदारधनक्षयः ।। इति वचनाभ्यां पूर्वविद्धा ग्राह्या ।। चन्द्रदर्शनायोग्यद्वितीयायोगे बुधानुराधायोगसत्त्वे चापरविद्धापि ग्राह्या, यदाह **राज्यार्जकमहेशठक्कुरधृत** पुराणसमुच्चये, गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः ।। सोमो राजा पशून् हन्ति सुरभीपूजकाँस्तथा । पापाहे विशाखानक्षत्रयोगे उभयदिनेऽपि गोपूजां न कारयेत्। तथाहि राजमार्तण्डे, विशाखायाममावास्या विशाखा प्रतिपद्युता । आयुः पुत्रं धनं हन्ति सुरभीपूजकान् तथेति ।। पुनस्तत्रैव, पापाहे च विशाखायां गोपूजां नैव कारयेत् ।। पूजनाच्च तदा गावो लक्ष्मीश्चैव विनश्यतीति ।। प्रतिपत्तु त्रियामा स्यात् मैत्रर्क्षे बुधबासरे । तद्दिने पूर्वयामे तु गोपूजा परमा शुभा ।। गां पञ्चोपचारैः संपूज्य प्रार्थयेदनेन ओम् लक्ष्मीर्य्या लोकपालानां धेनुरूपेण संस्थिता । घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ।। अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।। इति ।।

## द्यूतक्रीड़ा

अथात्र द्यू तक्रीड़ा कार्य्या । तथा हेमाद्रौ अदित्यपुराणे—शंकरस्तु पुरा द्यूतं ससर्ज सुमनोहरम् । कार्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवान् ।। जितश्च शंकरस्तत्र जयं लेभे च पार्वती । अतीर्थं शंकरो दुःखी उमा नित्यं सुखोषिता ।। तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः । तस्मिन् द्यूते जयो यस्य तस्य सर्व्वँत्सरं जयः ।। पराजये विरुद्धन्तु लब्धनाशस्तो भवेत् ।। अत्राचारात् वृषभाणां भेषजप्रक्षेपमाचरन्ति हलप्रवाहकाः ।।

## भ्रातृद्वितीयानिर्णयः

अथ कार्तिकशुक्लद्वितीया भ्रातृद्वितीया यमद्वितीया च। तथाहि हेमाद्रौ स्कान्दे, कार्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठर । यमो यमुनया पूर्वं भोजितः

स्वगृहेऽर्चित: ।। द्वितीयायां महोत्सर्गे नारकीयाश्च तर्पिता:। पापेभ्योऽपि विमुक्तास्ते मुक्तास्सर्वनिबन्धनात् ।। अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर ! अस्यां निजगृहे पार्थ ! न भोक्तव्यमतो बुधै: ।। स्नेहेन भगिनीहस्ताद् भोक्तव्यं पुष्टिवर्धनम् ! दानानि च प्रदेयानि भगिनीभ्यो विधानत: ।। स्वर्णालङ्कारवस्त्राणि पूजासत्कारभोजनै: ।। सर्वा भगिन्य: संपूज्या अभावे प्रतिपन्नका: ।। प्रतिपन्नका: = मित्रभगिन्य इत्यर्थ: ।। पितृव्यभगिनीहस्तात् प्रथमायां युधिष्ठिर ! मातुलस्य सुताहस्ताद् द्वितीयायां तथा नृप ।। पितुर्मातु: स्वसु: कन्ये तृतीयायां तयो: करात् ।। भोक्तव्यं सहजायाश्च भगिन्या हस्तत: परम् ।। पितृव्यभगिनी=पितृव्यसम्बन्धेन भगिनी, पितृव्यकन्येत्यर्थ: ।। सर्वै: स्वभगिनीहस्ताद् भोक्तव्यं बलवर्धनम् । धन्यं यशस्यमायुष्यं धर्मकामार्थसाधकमिति तिथिनिर्णये ।। ब्रह्माण्डे ।। या तु भोजयते नारी भ्रातरं युग्मके तिथौ । अर्च्चयेच्चापि ताम्बूलैर्न्न सा वैधव्यमाप्नुयात् ।। भ्रातुरायु:क्षयो राजन्न भवेत्तत्र कर्हिचित् ।। युग्मके=द्वितीयायाम् । यद्यपीयं बहुषु निबन्धेषु भोजनकालिकत्वेन मध्याह्नव्यापिनी ग्राह्या, तथापि **स्मृतिसारसंग्रहे उमापतिठक्कुरस्तु** अर्धप्रहरोपरि[1] भोजनकालस्तत्कालव्यापिनी ग्राह्या उभयदिने तत्प्राप्तौ परैव युग्मनिगमादित्याह ।। अनुकूलञ्चात्र **भूपालमतम्**, एकादश्यष्टमीत्यादि पैठीनसिवचनञ्च। व्यवहारश्च यथाकुलाचारमुभयथापि शिष्टानाम् । भ्रातृद्वितीया उभयदिने तथा चेत् परदिने कृत्ययुग्मात् ।

## अत्र यमपूजा ( अप्रचलिता )

ओम् तत्सदित्युच्चार्य्य ओम् अद्येत्यादि अमुकगोत्रस्यामुकशर्म्रण: स्वरक्षणकामो यमादिपूजनमहं करिष्ये इति संकल्प्य शालग्रामे घटादिस्थजले वा पूजयेत् । ओम् यम ! इहागच्छ इह तिष्ठेत्यावाह्य एतत् पाद्यम्ॐयमाय नम: । एवं क्रमेण संपूज्य ॐ एह्येहि मार्त्तण्डज ! पाशहस्त ! यमान्तकालोकधरामरेश ! भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते ।। एषोऽर्घ:ॐयमाय नम: ।। ततआचमनीयादिकं दत्वा प्रणमेत् ।। ॐधर्मराज ! नमस्तुभ्यं नमस्ते यमुनाग्रज ! पाहि मां किङ्करै: सार्द्धं सूर्य्यपुत्र ! नमोस्तु ते ।।

तत ॐ चित्रगुप्ताय नम इत्यनेन चित्रगुप्तं पूजयेत् ।। तत ओम् यमदूतेभ्यो

---

१. परदिने सूर्योदयानन्तरं दण्डद्वयं (४८मिनट) यावद् द्वितीया यदि लभ्यते तदा सम्पूर्णमपि तद्दिनं द्वितीयाकृत्ययोग्यम् । ततो न्यूनेतु पूर्वदिन एव कृत्यम् । भोजनप्रधान्येऽपि "नातिप्रगे नातिसायम्" इति मनूक्तभोजननिषेधकवाक्येन अतिप्रात:काल एव भोजननिषेधावगमाद् दण्डैकानन्तरं भो नार्हकाललाभात् परदिन एव भ्रातृद्वितीया । यमपूजा जु "अपराह्णेऽर्चयेद् यमम्" इत्यनेन अपराह्णकाल एव ।

नमः इत्यनेन यमदूतान् पाद्यादिभिः पूजयेत् ।। यमुनाञ्च पाद्यादिभिः संपूज्य प्रणमेत्, ॐयमस्वसर्नमस्तेऽतु यमुने ! लोकपूजिते ! वरदा भव मे नित्यं सूर्य्यपुत्रि ! नमोस्तु ते ।।

## भ्रातृपूजा

भगिनी भ्रातरं संपूज्य नमो "यमो यमुनाया पूर्वं भोजितःस्वगहेऽर्चितः। तथा त्वां भोजयिष्यामि आयुः कामार्थसिद्धये" ।। इतिनिमन्त्र्य भ्रातृभोजनकालेऽन्नादिकं दत्वा, "नमो भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् । प्रीतये यमराजस्य यमुनाया विशेषतः" ।। ज्येष्ठा चेत् तवाग्रजाताहमिति वदेत् ।। तातो भ्राता पुष्टिकामो भुञ्जीत । यतस्तु भगिनीहस्तात् भोक्तव्यं पुष्टिवर्द्धनम् , ततो भगिनीभ्योपि वस्त्रादिकं किञ्चिद् दातव्य् ।।

## अथास्यामेव चित्रगुप्तजाविधिः

कार्तिके शुक्लपक्षे तु द्वितीयायां नराधिप ! कायस्थैश्चित्रगुप्तस्य पूजा कार्या यथाविधि ।। ऊर्ज्जशुक्लद्वितीयायां चित्रगुप्तं प्रपूजयेत् । धनं धान्यं लिपिं चैव जयं तस्मात् स विन्दति ।। मसीभाजनसंस्कारः समाचाराद्दिनस्य वै । लिखनञ्च न कर्त्तव्यमेवं तस्य विधिःक्रमात् ।। चित्रं च चित्रगुप्तं च यमं च यमुनान्नदीम् । पूजयेच्च विधानेन मसीभाजनसंस्थितम् ।। चित्रकस्यतु पुष्पेण पिष्टकेन गुडेन च । छागमांसेन पूज्योऽसौ यथाविभवविस्तरैः ।। धूपैर्द्दीपैस्तु नैवेद्यैर्वस्त्रैश्छत्रैस्तथा शुभैः। पूजयेद्यः प्रयत्नेन चित्रगुप्तं नराधिपम् ।। गन्धैः पुष्पैस्तथा धूपैर्द्दीपताम्बूलसाक्षतैः । पञ्चोपचारिका पूजा कर्त्तव्या तस्य भक्तितः ।। अपूपं पूरिकां चैव पायसं कृसरं तथा । नृत्यगीतैस्तथा वाद्यैर्म्मंगलैस्सुमनोहरैः ।। तोषयित्वा विधानेन चित्रगुप्तं महामतिम् । उत्साहमयदेवंन तद्दिने नियतो नरः ।। राजानं भोजयित्वा तु ये चान्ये सुहृदो जनाः । प्रातः स्नातो विधानेन भोजयेत्तान् विशेषतः ।। स्वाध्यायं लेखनं निद्रां प्रवासन्तु विवर्ज्जयेत् । मङ्गलाचरणं कृत्वा दीर्घमायुरवाप्नुयात् ।। यःपूजयेद् द्वितीयायां कार्तिके शुक्लपक्षके । लेखावगममाप्नोति सर्वत्र विजयी भवेत् ।।

# अथ श्रीचित्रगुप्तपूजाविधिः

## ( भविष्यपुराणमते )

प्रथमं पञ्चदेवतां, विष्णुं, इष्टदेवताञ्च पञ्चोपचारैः संपूज्य पूर्वाभिमुखः हस्तौ पादौ प्रक्षाल्याचम्य कुशत्रयतिलजलान्यादाय संकल्पं कुर्य्यात्। तद्यथा, नमोऽद्य कार्तिके मासि शुक्लेपक्षे द्वितीयायां तिथौ काश्यपगोत्रस्यामुकदासस्य सकललिखनावगम-

तदुत्तर सकलविद्वत्त्व सर्ववैभवकामो मसीभाजनसंस्थितचित्रगुप्तपूजनमहं करिष्ये ।। ततोऽक्षतैरनेनावाहनं कुर्य्यात्, नमः चित्रगुप्त महाबाहो गतागतविलेखक । पञ्चोपचारिकां पूजां गृहाण त्वं जगद्गुरो ! ।। नमः चित्रगुप्त इहागच्छ, इत्यावाहनमन्त्रः ।। नमः त्वं मया स्थापितो देव मसीभाजन-संस्थितः । अभीष्टं कुरु मे क्षिप्रमवगमत्वं प्रदेहि मे ।। नमः चित्रगुप्त इहतिष्ठ, इतिस्थापनमन्त्रः ।। नमः चित्रगुप्तमहाराज सहजो धर्म-सेवितः । दक्षिणाशास्थितः स्नाहि धर्म कर्म नमोस्तु ते ।। इति स्नानमन्त्रः ।। नमः अर्घं गृहाण मे नाथ निखिलार्णवतारक पवित्रन्ते प्रयच्छामि गाङ्गं नीरसमं प्रभो ।। एषोऽर्घः ।। सर्वलोकसमाधानं सर्वभूषणसेवितम् । शरीरावरणं श्रेष्ठं वस्त्रञ्च परिधीयताम् ।। इदं पीतवस्त्रं वृहस्पतिदैवतम् ।। नमो० दक्षिणाचल-सम्पन्न-बहुपन्नगसेवितम् । आनन्दं स्वगृहोद्यानं गृहाण त्वं यथेप्सितम् ।। इदमनुलेपनम् ।। इदमक्षतम् ।। नमो दक्षिणागिरिसम्पुष्पं गण-गन्धर्व-सेवितम् । आनन्दनन्दनोद्यानं गृहाणत्वं यथेप्सितम् ।। इति रक्तपुष्पदानम् ।। नमो नानाविधानि पुष्पाणि ग्रथिताग्रथितान्यपि । समाहृतानि यत्तानि चित्रगुप्ताय ते नमः ।। एतानि पुष्पाणि० ।। नमो वेधोमयस्त्वं देवेश ! सर्वप्राणि-हृदि स्थितः । कायस्थ काय-भूतोऽसि चित्रगुप्त नमोस्तु ते इदं माल्यम्० ।। नमो धूपं गृहाण मे नाथ ! चन्दनागरुसम्मितम् । आघ्राणं देवलोकस्य त्वदर्थं सम्भृतं मया ।। एषधूपः ।। नमो दीपोऽयं दीप्यते गेहे निशायां गिरि गह्वरे । पञ्चोपचारसंयुक्तो गृह्यताम्मे कृपां कुरु ।। एषदीपः ।। चित्रगुप्ताय वै तुभ्यं यत्नादेतत्कृतं मया । प्रसीद मम देवेश ! नैवेद्यं गृह्यतां मम ।। एतानि नानाविधनैवेद्यानि ।। नमः त्रयोदश-गुणागारं गन्धर्वगणसेवितम् । अपूर्वं देवलोकस्य ताम्बूलं प्रतिगृह्यताम् ।। इदं ताम्बूलम् ।।

ततश्छागदान-संकल्पः नमोऽद्य कार्त्तिके मासि शुक्लेपक्षे द्वितीयां तिथौ काश्यपगोत्रस्यामुक दासस्य सकल लिखनावगमत्वकामो भगवते श्री चित्र-गुप्तायामुंछागं वह्निदैवतं तुभ्यमहमुत्सृजामि ।। इदमाचमनीयम् ।। ततः स्तुतिः । नमस्ते चित्रगुप्ताय संसारभय-हारिणे । जगताम्मूलभूताय प्राणिसर्वौघहारिणे ।। चित्रगुप्त जनानन्दस्कन्दभूतामलद्युते । सर्वेषां जीवभूतस्त्वं पाहि मां पञ्चिकारक ।। येषां लिखनमाश्रित्य वृत्तिःकापि विनिर्मिता । तेषां त्वं पालको नित्यमतः शान्तिं प्रयच्छ मे ।।

ततश्चतुर्दशयमपूजा ।। तद्यथा, नमः **यम** इहागच्छ इह तिष्ठ । एतानि पाद्यादीनि एषोऽर्घः यमाय नमः । इदमनुलेपनम् । इदमक्षतम् । इदंपुष्पम्, एतानि नानाविधनेवैद्यानि । एषधूपः । एषदीपः । इदमाचनीयम् । नमः यमराज महाबाहो जगतां प्राणकारकः । शान्तिं कुरु गृहाणेमां पूजां दत्तां मया विभो ।। एष पुष्पाञ्जलिः ।

नमः **धर्मराज** इहागच्छ इह तिष्ठेत्यावाह्य पञ्चोपचारैः संपूज्य, नमः सदा धर्माधिकारीत्वं धर्मराज व्यवस्थितः। पूजामादाय देवेश सुखं राज्यं प्रयच्छ मे ॥ नमः **मृत्यो** इहागच्छ इहतिष्ठेत्यावाह्य, मृत्यवे नमः इति पञ्चोपचारैः संपूज्य प्रार्थयेदनेन, नमः शरणं त्वदधीनं हि जन्तूनां हितकारकः। रक्ष मां देवदेवेश पूजामादाय याज्ञिकात्। नमः **अन्तक** इहागच्छ इहतिष्ठेत्यावाह्य, अन्तकाय नमः इति संपूज्य, नमः सर्वेषामन्तको देवो धर्मप्राण महाबलः। पूजां मदीयां गृह्णातु सौम्यमूर्तिःपरन्तव। इति प्रार्थयेत्। ततो **वैवैस्वत** इहागच्छ इहतिष्ठेत्यावाह्य, वैवस्वताय नमः इति संपूज्य, नमो वैवस्वत महाबाहो महाबल महेश्वरः। पूजां गृहाण देवेश शान्तिं कुरु सदैव हि ॥ इति प्रार्थयेत् ॥ नमः **काल** इहागच्छ इह तिष्ठेत्यावाह्य, नमः कालाय नमः इति संपूज्य, प्रार्थयेदनेन नित्यं च सर्वगो देवो महासंघ्रो महाबलः। प्रयच्छ त्वमिमां पूजां मया दत्तां हिताय च ॥ नमः **सर्वभूतक्षय** इहागच्छ इहतिष्ठेत्यावाह्य, नमः सर्वभूतक्षयाय नमः इति संपूज्य, प्रार्थयेदनेन नमः सर्वभूतक्षयाकारो वरदो निर्दयस्सदा। पूजां गृह्णातु देवेश मोक्षदस्तु सदैव हि ॥ नम **औदुम्बर** इहागच्छ इहतिष्ठेत्यावाह्य, औदुम्बराय नमः इति संपूज्य, प्रार्थयेदनेन, औदुम्बर महाबाहो चित्ररूप गुणालय। मम पूजां गृहाण त्वं रक्षां कुरु सदैव हि ॥ नमो **नील** इहागच्छ इहतिष्ठेत्यावाह्य, नमो नीलाय नमः इति संपूज्य प्रार्थयेदनेन, नमो नीलरूपाय नीलाय महासत्त्वाय वेधसे। गृहाण देवदेवेश मया पूजां हिताय च ॥ ततो **दध्न** इहागच्छ इहतिष्ठेत्यावाह्य, नमो **दध्नाय** नम इति संपूज्य प्रार्थयेदनेन, नमो **दध्नाय** मृत्युरूपाय महासत्त्वाय वेधसे। मया पूजां समस्तां च गृहाण परमेश्वर ॥ ततः **परमेष्ठिन्** इहागच्छ इहतिष्ठेत्यावाह्य, परमेष्ठिने नमः इति संपूज्य प्रार्थयेदनेन, नमः परमेष्ठिन् महाप्राज्ञः सर्वभूतहिताय च। सधर्म्मिणे दयायुक्तो संतुष्टोत्कृष्टमानसः ॥ नमो **वृकोदर** इहागच्छ इहतिष्ठेत्यावाह्य, नमो वृकोदराय नमः इति संपूज्य प्रार्थयेदनेन, वृकोदर महाबाहो खड्ग-पाशपरायण। मया दत्तां सपर्य्यां वै गृहाण परमेश्वर ॥ नमः **चित्र** इहागच्छ इहतिष्ठेत्यावाह्य, चित्राय नमः इति संपूज्य प्रार्थयेदनेन, नमश्चित्राय चित्ररेखाय चित्राम्बरधराय च। सम्मानितां गृहाणेमां पूजां प्राणिहिताय च ॥ नमः **चित्रगुप्त** इहागच्छ इहतिष्ठेत्यावाह्य, नमः चित्रगुप्ताय नमः इति संपूज्य प्रार्थयेनदनेन, चित्रगुप्त जनानन्द कन्दभुक्तामलद्युते। सर्वेषां जीवभूत त्वं त्राहि मां पञ्जिकारक ॥ चित्रगुप्त नमस्तुभ्यं लोकरक्षण-दक्षणः। कायस्थ-जातिबन्धोऽत्र कुलधर्म नमोस्तु ते ॥

तत्र क्रमपूजा च। तद्यथा, **पञ्जिक** इहागच्छ इहतिष्ठेत्यावाह्य पञ्जिकाय नमः इति संपूज्य एवं तालपत्रं, चित्रकं, प्रकालिकां च संपूज्य, **कर्पट** इहागच्छ इह-

तिष्ठेत्यावाह्य कर्पटाय नमः इति संपूज्य, **छुरिके** इहागच्छ इहतिष्ठेत्यावाह्य छुरिकायै नमः इति संपूज्य, **नखरञ्जन** इहागच्छ इहतिष्ठेत्यावाह्य, नखरञ्जनाय नमः इति संपूज्य, **कर्तृके** इहागच्छ इहतिष्ठेत्यावाह्य कर्तृकायै नमः इति संपूज्य, **मसीभाजन** इहागच्छ इहतिष्ठेत्यावाह्य मसीभाजनाय नमः इति संपूज्य, **सरस्वति** इहागच्छ इहतिष्ठेत्यावाह्य, नमः सरस्वत्यै नमः इति संपूज्य, नमो **लक्ष्मि** इहागच्छ इहतिष्ठेत्यावाह्य नमो लक्ष्म्यै नमः इति संपूज्य **यमुनादेवि** इहागच्छ इह तिष्ठेत्यावाह्य, यमुनादेव्यै नमः इति संपूज्य, **मार्कण्डेय** इहागच्छ इहतिष्ठेत्यावाह्य, नमो मार्कण्डेयाय नमः इति संपूज्य, प्रार्थयेदनेन नमः मार्कण्डेय महावाहो मुनि-वंश समुद्भव। तपस्विनां मुनिश्रेष्ठ मार्कण्डेय नमोस्तुते ।। ततः नमो **लेखनि** इहागच्छ इहतिष्ठेत्यावाह्य, नमो लेखन्यै नमः इति संपूजयेत्। ततो वरप्रार्थना, नमः आयुर्विद्यां यशो लक्ष्मीम्मेधां देहि स्थिरां शुभाम् । पुत्रान्देहि स्थिरान् कामान् देहि मे लिखनावगम् ।। चित्रगुप्त नमस्तुभ्यं प्रार्थये त्वामहर्न्निशम् । यथा स्वर्गे नियोगस्ते तथा मे कुरु भूतले ।। रूपन्देहि यशो देहि भाग्यं भगवन् देहि मे । धर्मान्देहि धनन्देहि पुत्रान्कामान् प्रदेहि मे ।। इतिवरं प्रार्थ्य स्तबमेनं पठेत्-

नमो भगवन् देवदेवेश ! सर्वभूतानुकम्पक !। मानवासंभवं ब्रूहि येन तुष्यन्ति ते नमः ।।१।। **ईश्वर उवाच**-दक्षिणाशाधिपो योऽसौ यमो महिषवाहनः । सप्ताश्वतनयश्चैव धर्माधर्मप्रवर्तकः ।।२।। तं त्वं प्रपद्य लोकेशं सर्वपापप्रणाशनम्। त्वं साक्षी सर्वलोकानां सर्वलोकवरप्रदः ।।३।। करे धृतमहादण्ड आरूढो महिषं प्रति। यस्तुल्यो नामकरणैः प्रसीदतु स मे यमः ।।४।। चराचराणां भूतानां ज्ञाता यः पापपुण्ययोः। मित्रामित्रौ समौ यस्य प्रसीदतु स मे यमः ।।५।। जपन्ति यस्य ध्यायन्ति नित्यं मूर्तीश्चतुर्दश । सर्वसन्तापशान्त्यर्थम्प्रसीदतु स मे यमः ।।६।। यो भक्तान् मोचयत्येव जन्म-कर्म्मादिबन्धनात् । स मे दिशतु भद्राणि पापसन्धानभेदकृत् ।।७।। चक्रपाणिः शूलधरो धाता कमलसंभवः । सकलभुवनभेदज्ञं तं नमामि सदा यमम् ।।८।। यस्याज्ञावशगा देवा ब्रह्मविष्णुमहेश्वराः। सर्वलोकप्रभुर्द्देवः स मे स्वस्तिकरोऽवतु ।।९।। योऽर्चितो बाहुले मासि शुक्लपक्षे च मानवैः। शुभाय सर्वलोकानां तं यमं प्रणमाम्यहम् ।।१०।। ऊर्ज्जे शुक्लद्वितीयायां यथाविभवविस्तरैः । गम्पूज्य च यमं भक्त्या स्तबमेनं पठन्ति ये ।।११।। अपादस्तस्य नश्यन्ति सम्पदःसंभवन्ति च । सफलः सर्वकामः स्यात् पुत्रपौत्रादिवर्धनम् ।।१२।। विमानेनार्कवर्णेन किंकिणीजालमालिना । परमं स्थानमाप्नोति मोदते तत्र देववत् ।।१३।। इति स्कन्दपुराणे ईश्वरोक्त-यमस्तवस्समाप्तः। इतिस्तुत्वा कथां श्रुत्वा आरार्तिकं विधाय प्रदक्षिणं कृत्वा विसर्जयेत्। तद्यथा, नमः सूर्य्यादिपञ्चदेवताः

पूजिता: स्थ क्षमध्वं स्वस्थानं गच्छत । नमो भगवन् विष्णो पूजितोसि प्रसीद क्षमस्व स्वस्थानं गच्छ । इष्टदेवता पूजितासि प्रसीद क्षमस्व । चित्रगुप्त पूजितोसि प्रसीद क्षमस्व, ततो यम, धर्मराज, मृत्यु, अन्तक, वैवस्वत, काल, सर्वभूतक्षय, औदुम्बर, दध्न, नील, परमेष्ठिन्, वृकोदर, चित्र, चित्रगुप्त प्रत्येकं विसर्जयेत् ।। ततः पंजिक पूजितोसि क्षमस्व । एवं तालपत्रं, चित्रकं, एकालिकां च विसृज्य कर्पट पूजितासि प्रसीद । छुरिके पूजितासि प्रसीद, नखरञ्जन पूजितोसि क्षमस्व । मसीभाजन पूजितोसि क्षमस्व । सरस्वति पूजितासि प्रसीद । श्रीर्मयि रमस्व । यमुने पूजितासि प्रसीद क्षमस्व । लेखनि पूजितासि प्रसीद क्षमस्व । ततो ब्रह्मपूजां कृत्वा विसर्जयेत् ।। ततो दक्षिणान्दद्यात् ।। कुशत्रयतिलजलान्यादाय नमोऽद्य कृतैत् चित्रगुप्त पूजनतत्कथा-श्रवणकर्मप्रतिष्ठार्थमेतावदद्रव्यमूल्यक हिरण्यमग्निदैवतं यथानाम गोत्राय ब्राह्मणाय दक्षिणामहन्ददे इति ब्राह्मणाय दक्षिणन्दत्वा भोजयेत् ।।

*।। इति चित्रगुप्तपूजा विधिः ।।*

# अथ कथा

भीष्मउवाच ।। कायस्थ इति यल्लोके ख्याताश्चैव महामुने । कस्य वंशे समुद्भूताः कस्मिन्वर्णे च कथ्यते ।।१।। तमहं श्रोतुमिच्छामि कथ्यतां भो महामुने। एतन्मे संशयं ब्रह्मन् छेत्तुमर्हस्यशेषतः ।।२।। इति पृष्टो मुनिः प्राह गाङ्गेयं शुचिविग्रहम् ।। पुलस्त्य उवाच ।। शृणु गाङ्गेय वक्ष्यामि कायस्थोत्पत्तिकारणम् ।।३।। न श्रुतं यत्त्वया पूर्वं तन्मेनिगदतः शृणु । येनेदं सकलं विश्वं स्थावरं जंगमादिकम् ।।४।। उत्पाद्य पाल्यते भूयो निधनाय प्रकल्प्यते । अव्यक्तः पुरुषः शान्तो ब्रह्मा लोकपितामहः ।।५।। यथासृजत्पुरा विश्वं कथयामि च तं प्रभो । मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा ।।६।। ऊरुभ्यां च तथा वैश्याः पद्भ्यां शूद्राः समुद्भवाः । द्विचतुः षट्पदादींश्च सर्वजीवान् सरीसृपान् ।।७।। एककालेसृजद् ब्रह्मा चन्द्रसूर्यग्रहाँस्तथा ।। एवं बहुविधिं तत्र विश्वमुत्पाद्य भारत ।।८।। सुतं ज्येष्ठं समाहूय सूर्यप्रमिततेजसम् । प्रतिपालय यत्नेन जगत्सर्वञ्चसुव्रत ।।९।। इत्याज्ञाप्य सुतं ज्येष्ठं सृष्टिपालनहेतुकम् । ततस्तु ब्रह्मणा तेन यत्कृतं तन्निशामय ।।१०।। दशवर्षसहस्राणि दशवर्षशतानि च । समाधिगमद् ब्रह्मा ततो विश्रान्तमानसः ।।११।। ततः समाहितमते यद्भूतं तद्वदामि ते । तच्छरीरान्महाबाहुः श्यामः कमललोचनः ।।१२।। कम्बुग्रीवो व्यूढशीर्षः पूर्णचन्द्रनिभाननः । लेखिनीकटिनीहस्तो मषीभाजनसंयुतः ।।१३।। तेजस्वी पुरुषो धीमान् ब्रह्मणोऽव्यक्तजन्मनः । उत्पन्नस्सुविचित्राङ्गो ध्यानस्तिमितलोचनः ।।१४।। त्यक्त्वा समाधिं गांगेय तं ददर्श पितामहः । अधोर्ध्वञ्च

निरीक्ष्येमं पुरुषं चाग्रतः स्थितम् ।।१५।। पप्रच्छ को भवानग्रे स्थितो वै पुरुषोत्तम। इतिपृष्टोऽब्रवीद्वाक्यं ब्रह्माणं कमलोद्भवम् ।।१६।। उत्पन्नोहं विधे नाथ त्वच्छरीरान्न संशयः। नामधेयं च मे तात कर्त्तुमर्हस्यशेषतः ।।१७।। यथोचितं भवत्कार्यं तत्त्वम्मामनुशासय। इत्याकर्ण्य ततो ब्रह्मा पुरुषं तं शरीरजम् ।।१८।। प्रहस्य प्रत्युवाचैनमानन्दितमनस्ततः।। ब्रह्मोवाच । मच्छरीरात्समुद्भूत-स्तस्मात् कायस्थसंज्ञकः। चित्रगुप्तेति नाम्ना तु ख्यातो भुवि भविष्यति ।।२०।। धर्म्माधर्मविवेकार्थं धर्मराजपुरे शुभे ।। भविष्यति हि भो वत्स निवासं सुविनिश्चलम् ।।२१।। निजवर्णोचितं धर्मं पालनीयं यथा-विधि ।। प्रजाः सृजस्व भोपुत्र इतिभारसमन्वितम् ।।२२।। तस्मै दत्वा वरं ब्रह्मतत्रैवान्तरधीयत ।।२३।। पुलस्त्य उवाच ।। चित्रगुप्तात्प्रजा जाता श्रृणु तां कथयामि ते।। श्रृणु तेषां च नामानि कुरुवंशविवर्द्धन ।।२४।। गौड़ाख्या माथुराश्चैव भट्टनागरसेनकाः ।। अहिगणाः श्रीवास्तव्या अम्बष्ठाः करणास्तथा ।।२५।। अपरे चाभवन्पुत्राश्चित्रगुप्तान्महामते। कुशलाः सर्वशास्त्रेषु ह्यम्बष्ठाद्याश्च सत्तमाः ।।२६।। पुत्रान्प्रस्थापयामास चित्रगुप्तो महीतले। धर्माधर्मविचारज्ञश्चित्रगुप्तो महामतिः ।।२७।। भूयस्तान् शिक्षयामास धर्मसाधनमुत्तमम्। पूजनं देवतानां च पितॄणां यज्ञसाधनम् ।। भरणं ब्राह्मणानां च सर्वदातिथिसेवनम् ।।२९।। कर्त्तव्यं हि प्रयत्नेन लोकत्रयहिताय वै ।। हे पुत्राः स्वर्गकामाय पूज्या महिषमर्दिनी ।।३०।। या माया प्रकृतिश्चण्डी चण्डमुण्डविनाशिनी। तस्यास्तु पूजनं कार्यं सर्वसिद्धिप्रदायकम् ।।३१।। यास्याः प्रभावतोदेवाः सिद्धिं प्राप्य दिवं गताः। स्वर्गाधिकारमासाद्य जाता यज्ञभुजः सदा ।।३२।। भवद्भिःसा सुपूज्या तु मिष्टान्नैः सुमनोहरैः। भवतांसिद्धिदा यस्मात् देवतानां च चण्डिका ।।३३।। वैष्णवं धर्ममाश्रित्य मद्वाक्यं प्रतिपालय। अनुशास्य सुतानेवं चित्रगुप्तो दिवं ययौ ।।३४।। धर्मराजाधिकारे च चित्रगुप्तः सदावसत् ।। एवं भीष्म समुत्पन्नाः कायस्था ये प्रकीर्तिताः ।।३५।। ये सृष्टास्ते समाख्याताः संवादं श्रृण्वतः परम् ।।३६।। इदं ते कथयिष्यामि विचित्रमितिहासकम्। प्रभावं चित्रगुप्तस्य समुद्भूतं यथा पुनः ।।३७।। पुलस्त्य उवाच ।। सौदासो नाम राजाभूत्समस्ते क्षितिमण्डले। **सदापापपरतः** सोपि धर्माधर्मं न विन्दति ।।३८।। स यथास्वर्गमासाद्य लब्धपुण्य फलः, श्रृणु ।। स हि पापो दुराचारो धर्मकार्यविवर्जितः ।।३९।। राजनीतिगतं धर्मं न जानाति कथंचन ।। स्वदेशे वादयामास पटहं स नराधिपः ।।४०।। न दातव्यं न कर्त्तव्या दैवी पैत्र्या कथंचन ।। आतिथ्यं जपकर्माणि तपः साधनमुत्तमम् ।।४१।। न कर्त्तव्यं नरैः क्वापि मत्पालितमहीतले ।।४२।। वसंति ये तस्य चक्रे देव्यादिषु रता द्विजाः।। परित्यज्य स्वकं देशं नानादेशान्तरंगताः ।।४३।। ये केचिन्नवसन्चक्रे चान्ये वा ब्राह्मणादयः ।।

नैव यज्ञं प्रकुर्युस्ते दैवंपित्र्यं कदाचन ।।४४।। ततः प्रभृति गाङ्गेय यज्ञो न हवनं क्वचित् ।। न कोपि कुरुते भीष्म पुण्यं तस्या बहिर्गतम् ।।४५।। ते द्विजाश्चान्यवर्णाश्च चक्रिरे धर्मविप्लवम् ।। अहो भूमिभृतस्तस्य शृणु कर्मविपाकजम् ।।४६।। कार्तिके शुक्लपक्षे तु द्वितीयायाम्मुदा तिथौ । शुचिर्भूत्वा तु कायस्थाः चित्रगुप्तस्य पूजनम् ।।४७।। चाक्रिरे भक्तिभावेन धूपदीपादिकैः शुभैः । दैवात्तत्र समायातः सौदासः पर्य्यटन् महिम् ।।४८।। दृष्ट्वा पप्रच्छ कस्येदं पूजनं क्रियते शुभम्। तेप्यूचुश्चित्रगुप्तस्य पूजां कुर्मः शुभां नृप ।।४९।। राजोवाच ।। अहमप्याचरिष्यामि चित्रगुप्तस्य पूजनम् । ततश्च विधिवत् स्नानं कृत्वा चैव नराधिपः ।।५०।। श्रद्धायुक्तेन मनसा कृतवान् पूजनं ततः । करणात् पूजनं तस्य चित्रगुप्तस्य भक्तितः ।।५१।। गतपापोऽभवत्सद्यः सौदासः स महीपतिः। चित्रगुप्तप्रसादेन सुरलोकं गतोनृपः ।।५२।। इदं विचित्रमाख्यानं चित्रगुप्तप्रभावजम् । कथितं ते नृपश्रेष्ठकिमन्यच्छ्रोतुमिच्छसि ।।५३।। इत्याकर्ण्य ततो भीष्मः प्रत्युवाच महामुनिम्। भीष्म उवाच ।। विधिना केन विप्रेन्द्र पूजां तत्र चकार सः ।।५४।। को मन्त्रंः को विधिस्तत्र तत्सर्वं कथय प्रभो । यामासाद्य मुनिश्रेष्ठ सौदासः स्वर्गमाप्नुयात् ।।५५।। पुलस्त्य उवाच ।। चित्रगुप्तस्य पूजाया विधानं कथयामि ते ।। नैवेद्यं घृतपक्वैश्च तथा कालोद्भवैः फलैः ।।५६।। गन्धपुष्पोपहारैश्च धूपदीपैस्तथोत्तमैः । नानाप्रकारैर्नैवेद्यैः पट्टवस्त्रैः सुशोभानैः ।।५७।। भेरीशंखमृदङ्गैश्च नानावाद्यैश्च डिण्डिमैः । चित्रगुप्तस्य पूजान्तु कुर्याद्भक्तिसमन्वितः ।।५८।। कलशं नवमानीय वारिणा परिपूरितम् । शर्करापूरितं विद्वान् पात्रं तस्योपरि स्थितम् ।।५९।। पूजाकाले प्रयत्नेन दातव्यं च द्विजन्मने ।।६०।। तत्र मन्त्रः । मसीभाजनसंयुक्तश्चरसि त्वं महीतले । लेखनी-कठिनीहस्त चित्रगुप्त नमोस्तु ते ।।६१।। चित्रगुप्त नमस्तुभ्यं लेखकाक्षरदायक । कायस्थजातिमासाद्य चित्रगुप्त नमोस्तुते ।।६२।। येषां त्वया लेखनस्य जीविका येन निर्मिता । तेषां च पालको यस्मात्ततः शान्तिं प्रयच्छ मे ।।६३।। एभिर्मन्त्रैस्तु राजेन्द्र चित्रगुप्तस्य पूजनम् । संकल्पपूर्वकं कुर्यात् कुरुवंशविवर्द्धन ।।६४।। एवं संपूज्य विधिवत्सौदासो भक्तिभावतः । अचिरेणैव कालेन राज्यं कृत्वा मृतो नृपः ।।६५।। नीतोसौ यमदूतैस्तु यमलोकं भयानकम् । चित्रगुप्तं तदापृच्छद्यम- राजश्च भारत ।।६६।। धर्मराज उवाच ।। सौदासोयं दुराचारः पापकर्मरतः सदा । अयंतु स्वप्रजाभ्यश्च पापं कारितवांस्तथा ।।६७।। पृष्टोऽसौ धर्मराजेन धर्म्माधर्म्मविशारदः धर्मराजं तदा प्राह चित्रगुप्तोमहामतिः ।।६८।। विपाक कर्मजं ज्ञात्वा तं प्रहस्य शुभं वचः ।।६९।। पापकर्मण्ययं राजा ख्यातो यद्यपि भूतले । त्वत्प्रसादादहं सौरे पूज्योहं

वसुधातले ।।७०।। त्वयादत्तवरः स्वामिन् शिवम्भूयान्नमोस्तुते ।। भवान् जानात्विदं देव ! राजा पापोस्ति मे मतिः ।।७१।। पूजां चकार राजासौ भक्तिभावेन मामकीम् । अतस्तुष्टोस्मि हेदेव यातु विष्णुपदं नृपः ।।७२।। यमेनाज्ञापितो राजा वैष्णवं पदमाविशत् ।।७३।। पुलस्त्य उवाच । ये चान्ये पूजयिष्यन्ति चित्रगुप्तं महीतले । कायस्था वाऽघनिर्मुक्ता यास्यन्ति परमां गतिम् ।।७४।। तस्मात्त्वमपि गाङ्गेय पूजां कुरु विधानतः। राजेन्द्र दुर्लभं लोकं कृत्वा पूजामवाप्स्यसि ।।७५।। मुनेर्वचनमाकर्ण्य भीष्मः प्रयतमानसः । चकार पूजनं तत्र चित्रगुप्तस्य भक्तितः ।।७६।। कार्तिके शुक्लपक्षस्य द्वितीयायां च भारत ।। यमुनाया गृहे यस्मात् यमेन भोजनं कृतम् ।।७७।। अतो यमद्वितीयेति लोके संज्ञां जगाम ह ।। वरं दत्तं भगिन्या तु भ्रात्रे चायुर्विवर्द्धनम् ।।७८।। अतो भगिनीहस्तेन तिथावस्यां च भोजनम् । धनं यशस्यमायुष्यं वर्द्धते कामसाधनम् ।।७९।। स्वशक्त्या चैव दातव्यं भगिन्यै सुविधानतः। काले तत्रैव संपूज्य चित्रगुप्तं च लेखकः ।।८०।। चित्रैश्च रक्तपुष्पैश्च रक्तचन्दन-मिश्रितैः । कृष्णोन्मत्तक-पुष्पैश्च शमीपत्रैर्विशेषतः ।।८१।। नैवेद्यं चैव दातव्यं मोदकं गुडमिश्रितम् ।।८२।। पूजामन्त्रः। शान्तिद ! प्रलये चैव भोगाभोगे कृताकृते । लेखकानां सदा श्रीदश्चित्रगुप्त नमोस्तुते ।।८३।। श्रियया च समुत्पन्नः समुद्रमथने कृते । चित्रगुप्त महाबाहो ममायुर्वरदो भव ।।८४।। चित्रगुप्तस्तु संतुष्टो भीष्माय प्रददे वरम् । मत्प्रदानान् महाबाहो मृत्युस्ते न भविष्यति ।।८५।। स्मरिष्यसि यदा मृत्युं तदा मृत्युमवाप्स्यसि ।। इति तस्मै वरं दत्त्वा चित्रगुप्तो दिवं ययौ ।।८६।। अनेन विधिना यस्तु चित्रगुप्तस्य पूजनम् ।। करिष्यति महाप्राज्ञ तस्य पूजाफलं शृणु ।।८७।। इह वै विपुलान् भोगान् भुक्त्वा चैव मनोहरान् ।। अव्ययं वैष्णवंलोकं नरो याति न संशयः ।।८८।। चित्रगुप्तकथां दिव्यां कायस्थोत्पत्तिकारिणीम् ।। भक्तियुक्तेन मनसा ये श्रृण्वन्ति नरोत्तमाः ।।८७।। दीर्घायुषो भविष्यन्ति सर्वव्याधि विवर्जिताः । मृते विष्णुपदं यान्ति यत्र यान्ति तपोधनाः ।।९०।।

*इति श्रीपद्मपुराणन्तर्गते उत्तरखण्डे चित्रगुप्तयमद्वितीयाकथा समाप्ता ।।*

# अथ विवस्वत्षष्ठीपूजा विधिः

अथ कार्तिकशुक्लषष्ठी सप्तमीयुतैव ग्राह्या । तथाहि, षष्ठ्यामुषोष्य विधिवत् सप्तम्यामर्कपूजनम् । स द्रव्यभागरुक चैव संप्राप्नोतीप्सितं फलमिति ।' षष्ठ्याश्चैका कला यत्र तत्र सन्निहितो रविः । तत्र क्रतुशतं पुण्यमष्टम्यां पारणेन तु ।। तथा, षष्ठ्याश्चैका कला यत्र परतः सप्तमी भवेत् । उपोषितव्या यत्नेन सा

तिथिः स्वर्गदायिनीत्यादिवचनात्[१] पूर्वदिने सायमर्घादिदाने षष्ठी सप्तमी वा प्रधानीभूतोत्तरत्रार्घदानस्य तदङ्गोपवासस्य वाङ्गतयैव तदाचरणात् इति सर्वनिबन्धस्वरसः।

**पूजाविधिः** ।। कृतनित्यक्रिया सरित्तटमागत्य सायंकाले सूर्य्याभिमुखी कुशत्रयतिजलान्यादाय नमोऽद्य कार्तिकमासीयशुक्लपक्षीयषष्ठ्यां तिथौ अमुकगोत्राया ममामुकदेव्या इह जन्मनि जन्मान्तरे वा सकलदुःखदारिद्र्यसकलपातकक्षयापस्मार-कुष्ठादिमहाव्याधिसकलरोगक्षय-चिरजीविपुत्रपौत्रादिलाभ-गोधनधान्यादि-समृद्धिसुखसौभाग्यावैधव्यसकलकलकामावाप्तिकामा अद्य श्वश्च सूर्य्यायार्घमहं दास्ये इतिसङ्कल्प्य, नमो भगवन् सूर्य्य ! इहागच्छ इह तिष्ठेत्यावाह्य, नानाफल-दूर्व्वारक्तचन्दनाक्षतघृतपाचितसगुडान्नयुतताम्रपात्रस्थार्घमादाय, नमोऽस्तु सूर्य्याय सहस्रभानवे नमोऽस्तु वैश्वानर ! जातवेदसे । त्वमेव चार्घं प्रतिगृह्ण गृह्ण देवाधिदेवाय नमो नमस्ते। नमो भगवते। तुभ्यं नमस्ते जातवेदसे । दत्तमर्घ्यं मया भानो । त्वं गृहाण ! नमोऽस्तु ते ।। एहि सूर्य्य ! सहस्रांशो ! तेजोराशे ! जगत्पते ! अनुकम्पय मां भक्त्या गृहाणार्घं दिवाकर ! ।। एहि सूर्य्य ! सहस्रांशो ! ।। तेजोराशे ! जगत्पते !। गृहणार्घं मया दत्तं संज्ञया सहित प्रभो ! ।। एतान्मन्त्रान्समुच्चार्य्य उत्तिष्ठन्ती अर्घं दद्यात् ।। ततोरक्तचन्दनरक्ताक्षतरक्तपुष्पदूर्व्वाबिल्वपत्रवस्त्रयज्ञापवीतधूपदीपताम्बूल-नानाविधनैवेद्यैस्सम्पूज्य प्रदक्षिणं कृत्वा प्रणमेदेभिः—जपाकुसुमसंकाशं काश्यपेयं महद्युतिम् । ध्वान्तारिं सर्व्वपापघ्नं प्रणतोस्मि दिवाकरम् ।। इत्यादिभिः प्रणम्य, प्रातरप्येवं कृत्वा विसर्जयेत् ।। ततो दक्षिणां दद्यात् । नमोऽद्य कृतैतद्विव-स्वत्षष्ठीव्रतकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । ब्राह्मणान् भोजयित्वा स्वयं पारणां कुर्य्यादितिपूजाविधिः ।।

# अथ कथा

एकदा नैमिषारण्ये शौनकाद्यां महर्षयः। नानादुःखयुतान् दृष्ट्वा मनुष्यांश्च दयालवः ।।१।। तमागतं समालोक्य समभ्यर्च्याप्तसौहृदाः । पप्रच्छुर्व्विनयान्नृणां दुःखनाशाय सत्तमाः ।।२।। सूत ! सूत ! महाभाग ! सर्व्वशास्त्रार्थकोविद ! । नाना दुःखसमायुक्ता मनुष्या भूतले स्थिताः ।।३।। दुखनाशः कथं तेषां मनुष्याणां भवेद्वद ।

---

१. तेन सप्तमीक्षयावसरे तद्दिन एव व्रतं, संयं प्रथमोऽर्घोऽरुणोदयकाल एवं उषाकाले सप्तम्यां पूजा प्रारंम्भः अष्टम्युदित सूर्यायार्घदानम् अकालेऽपि समापयेदिति वचनात् । "एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः । अराधनाय द्वादश्यां विष्णोर्यद्वदियं तथा"—इति वचनेन विवस्वत्षष्ठीव्रतस्य एकादशीव्रतवदतिदेशात् षष्ठ्यावृद्ध्यवसरे तिथिमलत्वमपि न दोषाय, "कला काष्ठानिमेषोऽपीति वचनमप्यत्र मानम् । कथायां सायमर्घस्य रात्रिजागरणस्य तत्प्रातःकालिक पूजनस्य च व्यवस्थादर्शनेनात्र प्रातः पदेन "अष्टपञ्च भवेत् प्रातः" इति वचनस्यैव ग्राह्यत्वात् उदय-कालिकसूर्यायार्घदानं, न तु तदनन्तरकालिकसूर्याय ।

**सूत उवाच**– कथयामि कथां दिव्यां श्रृणुध्वं हि समाहिताः। एवमेव पुरा पृष्टः पुलस्त्यो वाग्विशारदः। सत्यव्रतेन भीष्मेण लोकानुग्रहकाङ्क्षया ।।५।। मनुष्याश्चापि लोकेऽस्मिन् स्वकर्म्मवशवर्तिनः। अल्पायुषोऽल्पदेहाश्च तथा चैवाल्पबुद्धयः ।।६।। अल्पप्रजाः धर्म्महीना आलस्याद्विहितोज्झिताः । देवार्च्चनविहीनाश्च भूसुरस्यापमानिनः ।।७।। दुःखजालैः परीभूताः पीडिताश्चाप्यहर्न्निशम् । दुःखनाशः कथं तेषामचिरात्स्याद्वद प्रभो ! ।।८।। एवं पृष्टो मुनिः प्राह रोगसन्दोहनाशने । **पुलस्त्य उवाच**–श्रृणुध्वं कथयिष्यामि पुरावृत्तं मनोरमम् ।।९।। श्रृण्वतां पठतां नृणां महापातकनाशनम् । आसीत् क्षत्रियदायादः सर्व्वेषां द्रोणकृन्नृणाम् ।।१०।। परोत्सवं न सहते भूयो दुष्टमतिर्बली । प्राग्जन्मकृतदोषेण कुष्ठरोगातुरो भवत् ।।११।। यक्ष्मादिरोगसम्पन्नो जीवन्नेव मृतोपमः। जीवनान्मरणं भद्रं मेने रोगातुरः किल ।।१२।। तदा वै ब्राह्मणः कश्चिद्वेदवेदान्तपारगः। तेजस्वी सर्वशास्त्रज्ञस्तपस्वी करुणार्द्रधीः ।।१३।। तीर्थयात्राप्रसङ्गेन तत्रापि समुपागतः। तमागतं समुत्तस्थुर्ददुस्तस्मै वरासनम् ।।१४।। प्रणेमुश्चोपविष्टाश्च तमूचूर्विनयान्विताः। अहोभाग्यवशाद्यातं दर्शनं तव सुव्रत ।।१५।। दुःखनाशो भवेत् त्वत्त इतिमन्यामहे वयम् । महोदयाय महतां दर्शनं नान्यथा भवेत् ।।१६।। इतिमत्वाथ पृच्छामि त्वामिदं करुणानिधे ! । कुष्ठाभिभूतश्चैवायं तथा पुत्रविवर्जितः ।।१७।। मृतप्रजस्तथैवासौ वयञ्च भयवर्जिताः । परित्यक्ता च भर्त्रेयमियं प्रोषितभर्तृका ।।१८।। राज्यभ्रष्टाः कुमाराश्च विद्याहीनाश्च सन्ति हि । दुःखनाशः कथं तेषां भवेद्वद महामते ! ।।१९।। इत्याकर्ण्य वचस्तेषां ब्राह्मणः करुणामयः। अभिनन्द्य वचस्तेषां स विचारपरोभवत् ।।२०।। आरोग्याय रविर्देवः पापराशिक्षयस्तथा । पापमूलानि दुःखानि सर्वाणीति जगुर्बुधाः ।।२१।। एक एवोपदेशोऽत्र कर्त्तव्यः सर्वकार्य्यकृत् । एते विधिमजानन्तो जपादिकरणे क्षमाः ।।२२।। भक्तिश्रद्धाविहीनाश्च तथात्मानधिकारिणः। भूयोभूयो विचार्य्याथ जगाद वचनं द्विजः ।।२३।। भास्करस्य व्रतं त्वेकं यूयं कुरुत सत्तमाः ।।२४।। सर्व्वेषां दुःखनाशो हि भवेत्तस्य प्रसादतः। श्रुत्वा मुमुदिरे सर्व्वे स्मृत्वा वाक्यं पुनः पुनः ।।२५।। पप्रच्छुर्विनयात् सर्व्वे हर्षगद्गदया गिरा । कदा कोऽत्र विधिर्व्विप्र ! कथमाराधनं विभोः ।।२६।। सर्वं विस्तरतो ब्रूहि कृपासागर ! सुव्रत ! । **विप्र उवाच**–कार्तिके शुक्लपक्षे तु निरामिषपरो भवेत् ।।२७।। पञ्चम्यामेकभोजी स्याद्वाक्यं दुष्टं परित्यजेत् । भावदुष्टं न भुञ्जीत दुष्टश्रवणकृन्नच ।।२८।। भूमिशायी जितक्रोधः शुचिः श्रद्धासमन्वितः । षष्ठ्याञ्चैव निराहारः फलपुष्पसमन्वितः ।।२९।। सरित्तटं समासाद्य गन्धदीपैर्म्मनोहरैः। धूपैर्न्नानाविधैर्दिव्यैर्न्नैवेद्यैर्घृतपाचितैः ।।३०।। गीतवाद्या-

दिभिश्चैव महोत्सवसमन्वितैः । समभ्यर्च्च्य रविं भक्त्या दद्यादर्घं विवस्वते ।।३१।। रक्तचन्दनसंमिश्रं रक्तपुष्पाक्षतान्वितम् । नानाफलसमायुक्तं दिव्यकौशेयसंयुतम् ।।३२।। नमोऽस्तु सूर्य्याय सहस्रभानवे नमोऽस्तु वैश्वानरजातवेदसे । त्वमेव चार्घं प्रतिगृह्ण गृह्ण देवाधिदेवाय नमो नमस्ते ।।३४।। नमो भगवते तुभ्यं नमस्ते जातवेदसे । दत्तमर्घं मया भानो ! तवं गृहाण नमोऽस्तु ते ।।३५।। ज्योतिर्म्मय ! विभो सूर्य्य ! तेजोराशे ! जगत्पते ।! अनुकम्पय मां भक्त्या गृहाणार्घं दिवाकर ! ।।३६।। एहि सूर्य्य ! सहस्रांशो ! तेजोराशे । जगत्पते । ! अनुकम्पय मां प्रीत्या गृहाणार्घं दिवाकर ! ।।३७।। एहि सूर्य्य ! सहस्रांशो तेजोराशे ! जगत्पते । गृहाणार्घं मया दत्तं संज्ञया सहितप्रभो ! ।।३८।। मन्त्रैरेभिः प्रदातव्यं भास्वते दीप्ततेजसे । अर्घं प्रदक्षिणां कृत्वा प्रणमेच्च पुनः पुनः ।।३९।। गीतवाद्यादिनृत्यैश्च रात्रौ जागरणं चरेत् । पुनः प्रातः समभ्यर्च्च्य दत्वार्घं स्वस्थमानसः ।।४०।। सदक्षिणं तथाचान्नं विप्रेभ्यः प्रतिपादयेत् । व्रती च पारणां कुर्य्यात् प्रसन्नवदनाम्बुजः ।।४१।। व्रतेनानेन सन्तुष्टो दुःखं हरति भास्करः । चक्रुस्ते श्रद्धया युक्ता स्वस्वदुःखोपशान्तये ।।४२।। यक्ष्मापस्मारकुष्ठादियुक्तः क्षत्रियनन्दनः । कमनीयः स नारीणां त्रिभिर्वर्षैर्बलान्वितः ।।४३।। पुत्रहीनो भवेत्पुत्री जीवत्पुत्रो मृतप्रजः । सुभगा पतिना त्यक्ता पत्युः प्राणसमा भवेत् ।।४४।। प्रोषितस्तु पतिर्य्यस्याः सा भवेद्भर्तृसंयुता । एवं मनोरथैः पूर्णा अभवन् व्रतकारिणः ।।४५।। **सूत उवाच**—ख्याता मेतद् व्रतं विप्राःस्तुतं वै सर्वदेहिनाम् । वाञ्छितार्थप्रदश्चैव व्रतं सर्व्वसुखप्रदम् ।।४६।। आसीत्तत्र दरिद्रो यः सद्ब्राह्मणकुलोद्भवः । विद्याहीनः कुमारश्च भिक्षुर्गृहविवर्जितः ।।४७।। न वित्तनियमस्तस्य न भक्ष्याच्छादनस्य च । क्षुत्क्षामः पर्य्यटन्पृथ्वीं शर्म्म विन्दति न क्वचित् ।।४८।। एवं बहुतिथे काले पर्य्यटन् खिन्नमानसः । समागतश्च तत्रैव यत्रैव समुपागतः ।।४९।। श्रुत्वा विप्रवचस्सोऽथ प्राहेदं हृष्टमानसः । आकार्षीच्छ्रद्धया चैतद् व्रतं सर्व्वेप्सितप्रदम् ।।५०।। व्रतेनैकेन तस्यासीदतीव पठने मतिः । पठित्वा कतिचिद्वर्षैः काव्यालङ्कृतिवित्कृती ।।५१।। स्वविद्योपार्जितैर्वित्तैर्व्विवाह्यैकां सुवंशजाम् ।· पुत्रपौत्रान्वितो भूत्वा सर्व्व-सम्पत्समन्वितः ।।५२।। पाठयन् बहुशो विप्रान् सर्व्वभोगान्वितः सुखी । जपन्नष्टाक्षरं विष्णोर्व्वेदपारायणं चरन् ।।५३।। निनाय च दिनं सर्व्वमन्ते तेजस्विनां गतिम् । जगाम स द्विजश्रेष्ठो व्रतस्यास्य प्रसादतः ।।५४।। राज्यभ्रष्टश्च श्रुत्वैतद् व्रतं सर्व्वेप्सितप्रदम् । चकार विधिवद्विप्रो भक्तिश्राद्धसमन्वितः ।।५५।। अमात्यः पञ्चभिर्व्वर्षैः मन्त्रयित्वा परस्परम् । समागतश्च तत्रैव यत्रास्ते राजसत्तमः ।।५६।। राजानमग्रतः कृत्वा गताः सर्व्वे बलान्विताः । हत्वा द्रोहकरान् सर्वानुत्सार्य च परं बलम् ।।५७।। दृष्ट्वा त्वन्यान्

समुत्सार्य्य कृत्वा राज्यमकंटकम् । तमेव चक्रे राजानं पूर्व्ववत् सोऽप्यपालयत् ॥५८॥ अन्येऽपि ये व्रतं चक्रुरभीष्टं तेऽपि लेभिरे । एवं ये वै करिष्यन्ति व्रत सर्व्वेप्सितप्रदम् ॥५९॥ तेषामभीष्टसिद्धिः स्याद्भास्करस्य प्रसादतः । साक्षादेव सप्तसप्तिः सर्व्वेषां पालकः स च ॥६०॥ श्रुत्वा कथामिमां दिव्यां व्रतं कृत्वा विधानतः । शक्तितो दक्षिणां दद्यात् सुवर्णं वाचकाय वै ॥६१॥शृण्वन्ति ये कथां दिव्यां भक्तिभावसमन्वितः । गङ्गादिसर्व्वतीर्थानां स्नानपुण्यं लभन्ति ते ॥६२॥ इति स्कन्दपुराणे विवस्वत्षष्टीव्रतकथा समाप्ता ॥

त्रिकुशतिलजलहस्तः, नमोऽद्य कृतैतद्विवस्वत्षष्ठीव्रतकरणतत्कथा-श्रवणप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानाम गोत्राय ब्राह्मणाय दक्षिणामहं ददे । इति ब्राह्मणाय दक्षिणां दत्वा पारणां कुर्य्यात् ॥

*॥ इति विवस्वत्षष्ठीव्रतविधिः ॥*

# अथ कार्तिकशुक्लाक्षयनवम्यां

## जगद्धात्रीदुर्गां पूजयेत्

तथाहि दुर्गाकल्पे, श्रीदेव्युवाच । कथयामि महेशान ! सावधानोवधारय । तस्याः पूजाविधिदिनं समयं भावभेदतः ॥ कार्तिके शुक्लपक्षे च सा दुर्गनवमीतिथिः । सा प्रशस्ता महादुर्गापूजने ॥ अथ **कात्यायनीतन्त्रे**, कुम्भराशिगते चन्द्रे नवम्यां कार्तिकस्य च । उषस्यर्धोदितो भानुर्दुर्गामाराध्य यत्नवान् ॥ पुत्रारोग्यबलं लेभे लोकसाक्षित्वमेव च । तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि ॥ प्रपूजयेन्महादुर्गां धर्मकामार्थमोक्षदाम् ॥ **शक्तिसङ्गमतन्त्रे**, कार्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम् । त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत् । निर्माय प्रतिमां शक्त्या जगद्धात्र्या विधानतः । पूजयित्वा परदिने प्रतिमां तां विसर्जयेत् ॥ एवं कृत्वा चक्रवर्ती भवेत्साधकसत्तमः । पुत्रपौत्रधनैश्वर्य्यसंयुतास्य भवेत्पुरी ॥ **तन्त्रान्तरे**, मासैश्चतुर्भिर्यत् पुण्यं विधिना पूज्य चण्डिकाम्। तत्फलं लभते वीर ! नवम्यां कार्तिकस्य च ॥ इत्यादिबहुवाक्यस्वरसादुभयदिनव्याप्तौ मुहूर्तद्वयलाभे परेद्युरेवेति सर्वे निबन्धकाराः ॥

### अथास्याः पूजाविधिः

पूजासामग्रीं सम्पाद्य कुशत्रयतिलजलान्यादाय ॐ अद्य कार्तिके मासि शुक्ले-

पक्षेऽक्षयनवम्यां तिथौ अमुकगोत्रस्यामुकशर्म्मणः (अमुकगोत्राया अमुकीदेव्या वा) मासचतुष्टयावच्छिन्नविधिवच्चण्डिकापूजनजन्यफलसमफलप्राप्तिकामश्चण्डिका-पूजनमहङ्करिष्ये इति संकल्प्य, ॐ चण्डिके ! इहागच्छ इह तिष्ठेत्यावाह्य, पाद्यादिभिर्यथासम्भवोपचारैः ॐ चण्डिकायै नम इत्यनेन पूजयेत्।। इति चण्डिका-पूजनविधिः ।।

अथास्यामेव **जगद्धात्रीपूजा** ।। सा तु आगमोक्तत्वात् मैथिलनिबन्धेष्व-लिखिताच्चात्र न लिखिता। आगमोक्तकृत्यसंग्रहे वक्ष्यते ।।

## अथास्यामेव कूष्माण्डदानविधिः

### (अक्षयनवमी)

गन्धपुष्पाक्षतैः ॐ मुक्ताप्रवालरत्नहेमफलताम्बूलवस्त्रादियुतगो-धूमराशिस्थितकूष्माण्डाय नमः ३।। ॐ ब्राह्मणाय नमः३।। इतिकुशत्रयहस्तेन त्रिः संपूज्य कुशत्रयतिलजलान्यादाय, नमोऽद्य कार्तिकमासीयशुक्लपक्षीयाक्षयनवम्यां तिथौ अमुकगोत्राया अमुकीदेव्या ब्रह्महत्यादिसकलपापक्षयपूर्वकबहुपुत्रपौत्र-श्रीसौभाग्यादिसकलमनोरथावाप्तिपूर्वक-कूष्माण्डबीजसमसंख्यकवर्षसहस्रा-वच्छिन्नाक्षयब्रह्मलोकनिवासकामनया इदं कूष्माण्डफलं मुक्ताप्रवाल-रत्नहेमफलताम्बूलवस्त्रादियुतं गोधूमराशिस्थितं वनस्पतिदैवतं यथानामगोत्राय ब्राह्मणायाहं ददे । पुनः कुशादिकमादाय, नमो ब्रह्महत्यादिपापघ्नं ब्रह्मणा निर्मितं पुरा । कूष्माण्डं बहुबीजाढ्यं पुत्रपौत्रादिवृद्धिदम् ।। मुक्ताप्रवाहलहेमादि युक्तं दत्तं तव द्विज ! । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।। इति मन्त्रं पठित्वा, नमोऽद्य कृतैतत्सोपकरणकूष्माण्डदान-प्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे इतिब्राह्मणाय दत्वा प्रतिपादयेत् ।।

*।। इति कूष्माण्डदानविधिः ।।*

# अथ देवोत्थानविधिः

कार्तिकशुक्लैकादश्यां रात्रौ देवोत्थापनं कुर्य्यात् ।। तथाहि ब्रह्मपुराणे । एकदश्यान्तु शुक्लायां कार्तिके मासि केशवम् । सुप्तं प्रबोधयेद्रात्रौ श्रद्धा-भक्तिसमन्वितम् ।। अत्र देशाचारतो व्यवस्था ।। मिथिलायां पञ्चोपचारैर्विष्णुं संपूज्य चातुर्मास्यभवफलानि हरये समर्प्य वराहपुराणीयमन्त्रेण प्रबोधयेदिति **तिथि-तत्त्वचिन्तामणौ म० म० महेशठक्कुराः** ।।

## तत्र पूजाप्रकारः

रात्रौ प्राङ्गणे इक्षुदण्डैर्युततृणमयं गृहं निर्माय यथासम्भवोपचारैः विष्णुं संपूज्य गन्धपुष्पमालाधूपदीपताम्बूलनानाविधनैवेद्यानि बहुविधापूपादिभक्ष्याणि नानादाडिमादिफलानि कृष्णतुलसीपत्राणि तन्मञ्जरीं जातीपुष्पाणि च निवेद्य नृत्यगीतबहुबिधवाद्यवासुदेवकथासूक्तस्तोत्रैश्च प्रबोधयेत् ।। तन्मन्त्रास्तु वराहपुराणे, ॐ ब्रह्मेन्द्ररुन्द्रैरभिवन्द्यमानो भवानृषिर्वन्दितवन्दनीयः ।। प्राप्ता तवेयं किल कौमुदाख्या जागृष्व जागृष्व च लोकनाथ ! ।।१।। मेघा गता निर्म्मलपूर्णचन्द्रः शारद्यपुष्पाणिमनोहराणि। अहं ददानीति च पुण्यहेतो र्जागृष्व जागृष्व च लोकनाथ! ।।२।। उत्तिष्ठोत्तिष्ठ गोविन्द ! त्यज निद्रां जगत्पते ! त्वया चोत्थीयमानेन उत्थितम्भुवनत्रयम् ।।३।। इत्यैतैः गृहपीठिकासहितं भगवन्तं त्रिवारं बहुभिर्ब्राह्मणैस्सहोत्थापयेत् ।। यथाशक्ति ब्राह्मणाय दक्षिणां दत्वा रात्रौ कथापुराणनृत्यगीतवाद्यादिभिर्जागरणं कुर्य्यात् । प्रातः कृतनित्यक्रियो भूत्वा ब्राह्मणान् भोजयित्वा तुलसीदलेन पारणां कुर्य्यात् । बहवस्तु नक्तव्रतमेव कुर्वन्ति ते तु रात्रावेव फलमूलादिकं विष्णवे निवेद्य तं भक्षयेयुः।।

*।। इतिदेवोत्थानैकादशीविधिः ।।*

# बकपञ्चककृत्यम्

एकादशीप्रभृतिदिनपञ्चकेऽपि मांसपरित्यागः कर्त्तव्यः ।। तद्दिनपञ्चकमधिकृत्या "देया च सर्वभूतेभ्यो नरैरभयदक्षिणा"। अहिंसारूपैषाऽभयदक्षिणा बकैरप्यत्र मांसपरित्यागाद्बकपञ्चकमितिप्रसिद्धम् ।। अत्र सर्वथा मांसभक्षणं निषिद्धमिति गौडनिबन्धः ।। अस्मिन् सकले पक्षे मांसपरित्यागः शस्तः, महाभारते–कौमुदे शुक्लपक्षेतु योऽन्नदानं करोत्युत । स सन्तरति दुर्गाणि प्रेत्य चानन्त्यमश्नुते । कौमुदे तु विशेषेण शुक्लपक्षे नराधिप !। वर्ज्जयेत्सर्वमांसानि धर्मो ह्यत्र विधीयते ।। सकलकार्त्तिके मांसभक्षणे चण्डालयोनिजन्मफलम् ।। द्वादश्यां विष्णुपूजायाम् कौमुदस्य तु मासस्य या सिता द्वादशी भवेत् । अर्चयेद्यस्तु मां तत्र तस्य पुण्यफलं श्रृणु ।। यावल्लोका हि वर्त्तन्ते यावत् त्वं चैव माधवि !। मद्भक्तो जायते तावदन्यभक्तो न जायते ।। कृत्वा वै मम कर्माणि द्वादश्यां मत्परो नरः। ममैव बोधनार्थाय इमं मन्त्रमुदीरयेत् ।। तथा, एवं कर्म्माणि कुर्वन्ति द्वादश्यां ये यशस्विनः । मम भक्ता नरश्रेष्ठास्ते यान्ति परमाङ्गतिम् ।। ॐ अद्य कार्तिके मासि शुक्ले पक्षे द्वादश्यां तिथौ अमुकगोत्रस्य मम श्री अमुकशर्म्मणो लोकपृथिव्यवस्थानपर्यन्तविष्णुभ [illegible]त्वपरमगतिकामो विष्णुपूजनमहं करिष्ये ।। इति संकल्प्य पञ्चोपचारैर्विष्णुं पूजयेत् ।। ततो ब्रह्मेन्द्ररुद्रैरित्यादिमन्त्रत्रयमुक्तमेव पठेत् ।। ततो विसर्जयेत् ।

## कार्तिक्यामुमापूजा

कार्तिके पौर्णमास्यान्तु सोपवासोऽर्च्चयेदुमाम् । अग्निष्टोमफलं विन्देत् सूर्यलोकं च गच्छति ।। तत्र चतुर्द्दश्यामुपवासं कृत्वा पूर्णिमायाम्, ॐ अद्य कार्तिके मासि शुक्ले पक्षे पौर्णमास्यां तिथावमुकगोत्रस्यामुकशर्मणो ममाग्निष्टोम-फलप्राप्तिपूर्वकसूर्यलोकगतिकाम उमापूजनमहङ्करिष्ये इतिसंकल्प्य ॐ उमे ! इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यादीनि ॐ उमायै नमः इत्यनेन प्रकारेण पञ्चोपचारेण पूजा कार्या ।। अस्यां तिथौ सूर्यपूजा चाधिकफला ।। स्नानदानानि च प्रशस्तानीति ।।

## सामापूजा

कार्तिकी पूर्णिमायां रात्रौ प्रदोषानन्तरं नारीभिः भ्रातृचिरजीवित्व-सौभाग्यादिकामनया सामापूजा कार्या। प्रदोषानन्तरं दण्डद्वय व्यापिनी पूर्णिमा चेत् पूर्वदिने, अन्यथा परदिने पूजा कार्या । कार्तिक शुक्ल षष्ठ्यां चक्रवाकीरूपां श्रीकृष्णयित्री सामां, सप्तर्षि चूड़कमित्यादि मृन्मयं विरचयितुं प्रारभ्यते । तद्गीतानि च ततः प्रभृति पूर्णिमापर्यन्तं गीयन्ते । पूर्णिमायां रात्रौ फालकृष्टे क्षेत्रे पूजां विधाय नारीभिः सामाक्रीड़ा क्रियते ।

## अथ कार्तिकमासे कर्त्तव्यकर्माणि

कार्तिके त्ववश्यकर्त्तव्ये तिथितत्वचिन्तामणौ कृत्यशिरोमणौ च धात्रीमाला-धारणे विष्णुधर्मे, स्पृशेत्तु यानि लोमानि धात्रीमाला करौ नृणाम् । तावद्वर्षसहस्राणि वैकुण्ठे वसतिर्भवेत् ।। तथा, धात्रीच्छायान्तु यः कुर्य्यात्पिण्डदानं महामुने ! । मुक्तिं प्रयान्ति पितरः प्रसादान्माधवस्य च ।। धात्री फलविलिप्ताङ्गो धात्रीफलविभूषितः । धात्रीफलकृताहारो नरो नारायणो भवेत् । धात्रीच्छायां समाश्रित्य योऽर्चयेच्चक्र-पाणिनम् । पुष्पे पुष्पेऽश्वमेधस्य फलमाप्नोति मानवः ।। कार्तिके विष्णुमूर्त्यग्रे दीपदानाद्दिवं व्रजेत् । कार्तिके तु कृता दीक्षा नृणां जन्म विमोचनी ।। तथा, कार्तिके कृष्णसेवी यः प्राजापत्यपरोऽपि वा ।। एकान्तरोपवासी वा त्रिरात्रोपोषितोपि वा ।। षड्वा दश पक्षं वा मासं वा वरवर्णिनि ! । एक भुक्तेन नक्तेन तथैवायाचितेन च ।। उपावासेन भैक्ष्येण ब्रजते परमं पदम् ।। तथा कृत्यमहार्णवे नारदीये, इतो वै सर्वतीर्थानि सर्वयज्ञाः सदक्षिणाः । अन्यतः कार्तिको मासः सर्वपुण्याधिको मतः ।। सुवर्णमेरुतुल्यानि सर्वदानानि चैकतः । एकतः कार्तिको मासः सर्वदा केशवप्रियः ।। अव्रतेन क्षपेद्यस्तु मासं दामोदरप्रियम् । तिर्य्यग्योनिमवप्नोति सर्वधर्मवहिष्कृतः ।। तथाऽकरणे दोषस्तत्रैव :- जन्मप्रभृतियत्पुण्यं विधिवत्समुपार्जितम् । भस्मीभवति तत्सर्वमकृत्वा कार्तिकव्रतम् ।। कार्तिके नार्च्चितो यैस्तु भक्तियोगेन केशवः । नरकं ते गमिष्यन्ति यमदूतैः सुयातिताः ।।

## कार्तिके त्याज्यानि

अथ कार्तिके त्याज्यानि। निष्पावान् राजमाषांश्च सुप्ते देवे जनार्दने। यो हि भक्षति राजेन्द्र ! चाण्डालादधिको हि सः ।। निष्पावः श्वेतशिम्बी ।। कार्तिके तु विशेषेण राजमाषांस्तु भक्षयेत्। निष्पावान् मुनिशार्दूल। यावदाहूतनारकी। कदम्बानि पटोलानि वृन्ताकसहितानि च। न त्यजेत् कार्तिके मासि यावदाहूतनारकी ।। एतानि भक्षयेद्यस्तु सुप्ते देवे जनार्दने। दश जन्मार्जितं पुण्यं दहते नात्र संशयः ।। जन्मकोटिसहस्राणि मानुष्यं प्राप्य दुर्ल्लभम्। कार्तिके नार्चितो येन तस्य स्याद्यमयातना ।। राजमाषस्तु राजमा इतिप्रसिद्धः ।। तथा तत्रैव, यः करोति नरो नित्यं कार्तिके पत्रभोजम्। न दुर्गतिमवाप्नोति यावदिन्द्राश्चतुर्दश ।। भोजनं पद्मपत्रेषु महापातकनाशनम्। कार्तिके मुक्तिदं प्रोक्तं ब्रह्मपत्रेषु भोजनम्। ब्रह्मपत्रं पलाशः ।। अथात्र मांसभक्षणनिषोधो यथा ।। नन्दीपुराणे, यो नरः कार्तिके मासि मांसन्तु परिवर्जयेत्। संव्वत्सरस्य लभते फलं मांसविवर्जनात् ।। तथा, कार्तिके सौकरं मांसं यस्तु भुङ्क्ते सुदुर्मतिः। षष्टिवर्षसहस्राणि रौरवे परिपच्यते ।। तन्मुक्तो जायते पापी विष्ठाशी ग्रामशूकरः। न मात्स्यं भक्षयेन् मांसं न कौर्मं नान्यदेव हि ।। चाण्डालो जायते राजन् ! कार्तिके मांसभक्षणात्। तथा, कौमदन्तु विशेषेण शुक्लपक्षे नराधिप !। वर्जयेत्सर्वमांसानि धर्मोऽयं, न विधीयते ।। तथा कार्तिके निषिद्धानि यथा नारदीये, कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु। कार्तिके वर्जयेत्कांस्यं कार्तिके शुक्ल-सन्धितम् ।। कांस्यम् कांस्यपात्रे भोजनं वर्ज्यम् ।। शुक्लम् पर्युषितम्। सन्धितं लवणशाकः। अन्यान्यपि व्रतविधायकानि वाक्यानि सन्ति, व्रतपद्धतिकृत्यमहाणर्वव्रतराजादिनिबन्धेषु तदत्र ग्रन्थविस्तरभिया न लिखितानि ।।

अत्र सर्वाणि सौरमासक्रमेणैव पुराणश्रवणादि चेति बृहन्मनुः। वृश्चिकार्कसंक्रमणदिने चातुर्मास्यव्रतं कार्तिकव्रतञ्च समाप्य, गोदानादि ब्राह्मण भोजनान्तं कर्म्म कुर्य्यात् ।। उद्यापनादि विधिस्तु अन्ते वक्ष्यते ।।

*।। इति कार्तिककृत्यम् ।।*

## अथ मार्गकृत्यम्

अथाग्रहणे, निशार्कचारान्निकटं दिनार्द्धम्, दिवार्कचारान्निकटाष्टघट्यः ।। इत्यादि राजमार्तण्डोक्त एव, पुण्यकालव्यवहारः। कृत्यमहार्णवे महाभारते, मार्गशीर्षन्तु यो मासमेकं क्षपयेत्तेन संक्षपेत्। भोजयेच्च द्विजान् भक्त्या मुच्यते व्याधिकिल्विषैः ।। सर्वकल्याणसंपूर्णः सर्वदुःखविवर्जितः। उपोष्य व्याधिरहितो वीर्य्यवानभिजायते ।।

कृषिभागी बहुधनी बहुधान्यश्च जायते ।। विष्णुधर्मोत्तरे, लवणं मार्गशीर्षे तु दत्वा सौभाग्यमश्नुते । भविष्ये, कृष्णषष्ठ्यां प्रयत्नेन कृत्वा नक्तं विधानतः । विधिवत् प्राश्य गोमूत्रमनाहारो निशां क्षपेत् ।। अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः ।। पुनस्तत्रैव, कृष्णाष्टम्यां प्रयत्नेन कृत्वा नक्तं विधानतः। मासि मार्गशिरे धीर ! शंकरं देवमर्चयेत् । पीत्वा शक्त्या च गोमूत्रमनाहारो निशां क्षपेत् । अतिरात्रस्य यज्ञस्य फलमष्टगुणं लभेत् ।। रोहिणी प्रतिपद्युक्ता मार्गे मासि सितेतरा गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैस्समा । इति वचनात् मार्गकृष्णप्रतिपद् रोहिणीयुक्ता चेत् तदा सूर्यग्रहणकालिकगङ्गास्नान–जन्यफलशतगुणाधिकफलकामो गङ्गायां स्नायात् ।।

मार्ग कृष्णाष्टमी कालाष्टमी ।। सा च रात्रिव्यापिनी ग्राह्या ।। मार्गशीर्षसिताष्टम्यां कालभैरवसन्निधौ । उपोष्य जागरं कुर्य्यात् सर्वपापैः प्रमुच्यते ।। अत्र निशि श्रीकालभैरव आविर्बभूव ।। अत्रोपवासः प्रधानम्, अर्घदानादिकमङ्गम् ।। याम-चतुष्टये सन्ध्यायामपि पूजैव ।। तेन मध्याह्नव्यापिनी सा ग्राह्येति दिनद्वयेंऽशतः संपूर्णायां वा तद्व्याप्तौ पूर्वैव । पूर्वोक्तत्वात् । **अत्र च कालभैरवपूजोक्ता पञ्चोपचारैः** ।।

वृश्चिकार्के शुक्लपक्षे प्रथमरविवारे **षाणमासिक-रविव्रतारम्भः**, देवोत्थानात्परमेव। षण्मासं यावत् प्रतिरविवारं व्रतम्। अपराह्णानन्तरमेकभुक्तम्। शिलाघृष्टगोधूमादिचूर्णं, कोद्रवम्, आर्द्रकं, कदलीफलं, छागीघृतं, लवणम्, उष्णोदकस्नानञ्च व्रतदिने वर्जयेत्। मेषार्के शुक्लपक्षेऽन्तिमरविवारे व्रतसमाप्तिर्मलमासेऽपि भवति ।

## विवाहपञ्चमी

मार्गशुक्लपञ्चम्यामुदयगामिन्यां श्रीजानकी श्रीरामविवाहोत्सवपूजनं, कोशलेन्द्र-सरसि जनकपुरे स्नानदानादि कार्यम् ।

## मार्गशुक्लपञ्चमी नागपञ्चमी

अत्रापि नागपूजा ।। (स्कान्दे) शुक्ला मार्गशिरे पुण्या श्रावणे या च पञ्चमी । स्नान दानैर्बहुफला नागलोकप्रदायिनी ।। इयञ्च नागपूजायां षष्ठीयुतैव ग्राह्या । पञ्चमी नागपूजायां कार्य्या षष्ठीसमन्विता ।। तस्यान्तु तुषिता नागा इतरा सचतुर्थिका इतिमदनरत्नवचनात् ।। अस्य विधिस्तु श्रावणशुक्लपञ्चम्यां द्रष्टव्यः ।।

## अत्र नवान्नं कुर्य्यात्

तस्य **विहित** कालमाह कृत्यचिन्तामण्यादौ–पौषचैत्रकार्तिकभिन्नमासाः । चातुर्मास्यकृष्णपक्षभिन्नकालाः । नन्दातिरिक्ताः त्रयोदशीभिन्नास्तिथयः । रोहिण्यादिद्वयं पुनर्वस्वादिद्वयं उत्तरात्रयं हस्तादिपञ्चकं श्रवणादित्रिकं रेवत्यादिद्वयम् एतानि विहितनक्षत्राणि। शुक्रशनिमङ्गलभिन्नवाराः। जन्मतिथिजन्मतृतीय-पञ्चम-सप्तमतारेतरताराः । जन्माष्टमभिन्नचन्द्रमाः । विशाखाभिन्ननक्षत्रस्थरविः

वृश्चिकार्कत्रयोदशांशपर्य्यन्तम् । **क्वचित्** वृश्चिकार्कपूर्वभागे नवान्नं शश्यते बुधैरित्यादिवचनात् पञ्चदशांशपर्य्यन्तम् । **निषिद्धकालो** यथा ज्योतिषे, सूर्ये चैव विशाखगे स्मरतिथौ तारे त्रिजन्मान्विते, नन्दामन्दमहीजभार्गवदिने पौषे मधौ कार्तिके । भेकुग्राहिशिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे, श्राद्धं भोजनकं नवन्नविहितं पुत्रार्थनाशं स्मृतम् ।। कृष्णपक्षादिनिषेधो यथा :– कृष्णपक्षे नवान्नन्तु न कुर्य्यान्मानवो यतः । पितृरस्तत्र गृह्णन्ति दाता तु नरकं व्रजेत् ।। चैत्रे पौषे कृष्णपक्षे नवान्नं नाचरेद् बुधः । भवेज्जन्मान्तरे रोगी पितृणां नोपतिष्ठतीति द्वैतनिर्णये **वाचस्पति मिश्राः** ।। यद्यपि विंशत्यंशपर्य्यन्तं श्राद्धयोगवेलायां हैमन्तिकसंस्कारकश्राद्धमाचरणीयम्, यदि त्रयोदशांशाः कृष्णपक्षाशौचादिना दूषिता अन्नलाभासामर्थ्यादिना वाऽतिक्रान्तास्तदा मुख्यकालालाभे गौणकालोऽपि गृहीतस्तदपि **चिन्त्यम्**, विहित-कालातिरिक्तकाले दोषश्रवणात् ।। माघे फाल्गुने यवपाकश्राद्धपूर्वं वैशाखेऽपि नवान्नं कुर्य्यात्। परन्तु नवान्नविहितमासपक्षतिथिनक्षत्रताराचन्द्रशुद्धकाले एव नान्यत्रेति सर्वमैथिल-निबंधस्वरसः ।। श्राद्धानधिकारिभिस्तु प्रागुक्तकाले अग्न्यादिदेवताभ्यो ब्राह्मणाय च नवान्नं दत्वा स्वयमपि भोक्तव्यम् । शुचन्द्रताराद्यशुद्धौ प्रतीकारमाह देवलः। कर्म कुर्य्यात्फलावाप्त्यै चन्द्रादिशोभने बुधः । स्वस्थकाले त्विदं सर्वं नार्तः कालमपेक्षते ।। चन्द्रे च शंखं लवणं च तारे तिथावभद्रे सिततण्डुलाँश्च । धान्यञ्च दद्यात्करणर्क्षवारे योगे तिलान्, हेममणिञ्च लग्ने ।। राजमार्तण्डे ताराभेदाल्लवणपरिमाणमाह–एकत्रिपञ्च सप्त द्विजाय दद्यात् पलानि लवणस्य च । क्रमशो जन्मनि विपदि, प्रत्यरि मरणाख्यासु तारासु ।। पलन्तु लौकिकैर्मानैः साष्टरत्तिर्द्विमाषकम् । तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम् ।। ततः, एवं दध्याज्य संयुक्तं नवं विप्राभिमन्त्रितम् । मन्त्रानादेशे गायत्रीति गायत्र्यभिमन्त्रितं नवमन्नं ब्राह्मणानुज्ञां गृहीत्वा प्राश्नीयात् । नूतनधान्यासम्भवे पुरातनेनापि श्राद्धं कर्तव्यम् इति केचित् ।। बृश्चिके शुक्लपक्षे तदकरणे हरिशयनात्पूर्वं मीनधनुःस्थरवीतरत्र माघादौ कर्त्तव्यम् इतिनवान्नविधिः ।।

*।। इति मार्गकृत्यम् ।।*

**इति पूर्वार्धम्**

# अथ पौषकृत्यम्

अस्मिन्मासे बहूनि व्रतानि **कृत्यमहार्णव**ादिनिबन्धेषु लिखितानि ।। व्रतपद्धतावनुक्तत्वाच्चात्र न लिखितानीति । धनुः संक्रमे पराः षोडशघटिकाः पुण्यकालः ।। अत्रैव रोहिण्यार्द्रा योगे पुण्यतमत्वम् । पौषामावास्यायामर्द्धोदययोगः ।

तदुक्तम् महाभारते, अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः । अर्द्धोदयः स विज्ञेयः कोटिसूर्य्यग्रहैः समः इति ॥ तथा, दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचनेति ॥ स्कान्दे तु, माघामायां व्यतीपाते चादित्ये विष्णुदैवते । अर्द्धोदयस्तदित्याहुः सहस्रार्कग्रहै समः । तत्र च, माघमासे कृष्णपक्षे पञ्चदश्यां रवेर्दिने । वैष्णवेन तु ऋक्षेण व्यतीपाते सुदुर्लभे ॥ व्रतं कुर्यादिति विशेषः । श्रवणार्कव्यतीपातैरमा वै पौषमाघयोः । अर्द्धोदयस्सविज्ञेयः किञ्चिन्न्यूने महोदयः ॥ अयमपि दिवैव भवति, दिवैव योगः शस्तोऽयमित्युक्तत्वात् । किञ्चिन्न्यूने महोदय इति नक्षत्रमात्र राहित्य इत्यर्थः । व्यतीपातार्कवारयोः प्राधान्यात् । तथा च पौषमाघयोररविवार-श्रवणनक्षत्रव्यतीपातयोगयुक्ता दिवा अमावास्या भवेत् चेदर्द्धोदययोगः ॥ तथा पौषमाघयोररविवारव्यतीपातयुक्ता अमावास्या भवेच्चेन्**महोदययोगः** ॥ तथाहि स्कान्दे अर्द्धोदये तु संप्राप्ते सर्वं गङ्गासमं जलम् । शुद्धात्मानो द्विजास्सर्वे भवेयुर्ब्रह्मसन्निभाः ॥ यत्किञ्चिद्दीयते दानं तद्दानं मेरुसन्निभम् ॥ गङ्गास्नानादिकं कृत्वा कुशादिकमादाय ॐ अद्यपौषे (माघे) मासि कृष्णे पक्षे अमावास्यायां तिथावर्द्धोदयपर्वणि अमुकगोत्रस्यामुकशर्मणः (स्त्रीचेत् अमुकगोत्राया अमुकीदेव्या वा) सूर्यग्रहणकालिकगङ्गास्नानजन्यफलकोटिगुणाधिकफलप्राप्तिकामनया गङ्गायां स्नानमहङ्करिष्ये ॥ सामान्यजलाशये तु ॐ अद्येत्यादि अर्द्धोदय पर्वणि गङ्गास्नानजन्यफलसमफलप्राप्तिकामोऽस्मिन् जलाशये स्नानमहङ्करिष्ये । इति । महोदये तु सूर्यग्रहणकालिकगङ्गास्नानजन्यफलशतगुणाधिकफलेत्यादि तत्कालिक-दानादावप्येवमेव ऊहनीयः संकल्पवाक्ये ॥

## पौषीपूर्णिमायां कौशिक्यां स्नायात्

तत्र संकल्पः, कुशादिकमादाय ॐ अद्य पौषमासीयशुक्लपक्षीयपूर्णिमायां तिथावमुकगोत्रस्यामुकशर्म्मणः पृथिव्यधिकरणकसकलतीर्थस्नानजन्यपुण्यसम-पुण्यप्राप्तिकामः कौशिक्यां स्नानमहं करिष्ये । इति संकल्प्य स्नायात् ।

*॥ इति पौषकृत्यम् ॥*

# अथ माघकृत्यम्

पाद्मे—स्वर्गलोके चिरं वासो येषां मनसि वर्तते । यत्र क्वापि जले तैस्तु स्नातव्यं मृगभास्करे ॥ मृगो मृगास्यत्त्वेन मकरः मकरस्थे भास्करे । तत्र सङ्कल्पः ॥ अरुणोदयकाले जले मज्जनं कृत्वा आचम्य उत्तराभिमुखः "ॐ तत्स-दित्युच्चार्य्य" कुशत्रयतिलजलान्यादाय ॐ अद्य माघे मासि अमुके पक्षे अमुक-तिथावद्यारभ्य मकरस्थरविं यावत् प्रत्यहममुकगोत्रोऽमुकशर्म्मा स्वर्गलोके

चिरकालवासकामो विष्णुप्रीतिकामो वा प्रातःस्नानमहं करिष्ये इति सङ्कल्प्य, गङ्गाव्यतिरिक्तजलमात्रेऽपि स्नानं कर्त्तव्यम् । प्रतिदिनसङ्कल्पे तु 'अद्यारभ्य मकरस्थरविं यावत् प्रत्यहमिति' न कर्त्तव्यं, किन्तु मास्यनन्तरं मकरस्थे रवावित्यधिकं वक्तव्यम् । चान्द्रस्नानवाक्यन्तु वैशाखकृत्येऽनुसन्धेयम् ॥ तत्र सङ्कल्पं कृत्वा यथोक्तविधिना स्नानेतिकर्त्तव्यताविँधाय ॐ 'दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च । प्रातःस्नानं करोम्यद्य माघे पापप्रणाशनम् ॥ मकरस्थे रवौ माघे गोविन्दाच्युत ! माधव! स्नानेनानेन मे देव ! यथोक्तफलदो भव ॥ इत्युच्चार्य्य स्नायात् । ततो 'वासुदेवं हरिं कृष्णं श्रीधरञ्च स्मरेत्ततः । ॐ 'दिवाकर ! जगन्नाथ ! प्रभाकर ! नमोऽस्तु ते । परिपूर्णं कुरुष्वेदं माघस्नानं महाव्रतम्' ॥ चान्द्रस्नाने मकरार्कास्पृष्टकाले मकरस्थे रवावित्यस्य न पाठः, असमवेतार्थत्वात् । तीर्थे तु 'माघमासमिमं पुण्यं स्नास्येहं देव ! माधव ! । तीर्थस्यास्य जले नित्यं प्रसीद भगवन् ! हरे' ! इति पठित्वा दुःखदारिद्र्यनाशायेत्यादिकं पठितव्यम् । गङ्गायान्तु पद्मपुराणे "दिने दिने सहस्रन्तु सुवर्णानां विशां पते ! । तेन दत्तं हि गङ्गायां यो माघे स्नाति माधव ! ॥ एकदा सङ्कल्पे तु ॐ अद्येत्यादिप्रतिदिनसहस्रसुवर्णदानजन्य-फलसमफलप्राप्तिकामः श्रीविष्णुप्रीतिकामो वा माघमासं यावत् प्रत्यहं गङ्गायां प्रातःस्नानमहं करिष्ये इति वाक्येन विशेषः । प्रतिदिनसङ्कल्पे तु ॐ अद्येत्यादि सहस्रसुवर्णदानजन्यफलसमफलप्राप्तिकामो विष्णुप्रीतिकामो वा गङ्गायां प्रातः-स्नानमहं करिष्ये इति यथोक्तविधिना स्नानेतिकर्त्तव्यतां विधाय ॐ माघमासमिमं पुण्यं स्नास्येहं देव ! माधव !। तीर्थस्यास्य जले नित्यं प्रसीद भगवन् ! हरे ! ॥ दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च । प्रातःस्नानं करोम्यद्य माघे पापप्रणा-शनम् । मकरस्थे रवौ माघे गोविन्दाच्युत ! माधव !। स्नानेनानेन मे देव ! यथोक्तफलदो भव । दिवाकर जगन्नाथ ! प्रभाकर ! नमोऽस्तु ते । परिपूर्णं कुरुष्वेदं माघस्नानं महाव्रतम् ॥ 'संप्राप्ते मकरादित्ये पुण्ये पुण्यपदे शुभे । कर्तव्यो नियमः कश्चित् व्रतरूपी नरोत्तमैः' ॥ तत्तत् पुण्यकामः श्रीविष्णुप्रीतिकामो वा इति वाक्ये विशेषः ॥

**माघस्नाने तिथितत्त्वे** :–उत्तमन्तु सनक्षत्रं लुप्ततारन्तु मध्यमम् । सवितर्य्युदिते भूप ! ततो हीनं प्रकीर्तितमिति त्रिधा विभागः । तत्र सौरक्रम एवेति **मैथिल-स्मार्ताः** ॥ संक्रान्तौ पुण्यकालः[१]–रात्रौ पूर्वभागे सूर्यसंक्रमणे तद्दिनस्योत्तरार्घं

१. तथा च समयप्रदीपधृत–देवीपुराणम्, मानार्घ भास्करे पुण्यमपूर्णे शर्वरीदले । सम्पूर्णे तूभयार्द्धमतिरेकं परेऽहनि ।

पुण्यकाल:' रात्रावपरभागे संक्रमे तु उत्तरदिनस्य पूर्वार्द्धं पुण्यकाल इति सर्वासु सँक्रान्तिषु मैथिलमते समानैवव्यवस्था । इति सर्वसम्मतम् ।। संक्रान्तिक्रमेण प्रथमारुणोदय वेलायम् ॐ अद्येत्यादि चन्द्रसूर्य्यग्रहोपमभोगप्राप्तिकामो माघफाल्गुनमासौ व्याप्य प्रात:स्नानमहङ्करिष्ये । स्नानञ्च वैधम्[१] । यदिच्छेद्विपुलान् भोगान् चन्द्रसूर्यग्रहोपमान् । प्रात:स्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ।। इति विष्णुस्मृते: ।। नरसिंहपुराणे, शीतकाले महावह्निं प्रज्वालयति यो नर: । सर्वसत्त्वहितार्थाय स्वर्गञ्चाप्सरसं लभेत् ।। माघमासीयप्रात:स्नाने तु 'स्वर्गलोके चिरं वासो येषाम्मनसि वर्तते । यत्र क्वापि जले तैस्तु स्नातव्यं मृगभास्करे ।। आयुरारोग्यसंपत्तौ रूपे सुभगतागुणे । येषाम्मनोरथास्तैस्तु न त्याज्यं माघमज्जनम् ।। दारिद्रयपापदौर्भाग्यपङ्कप्रक्षालनाय वै । माघस्नानान्नचान्योऽस्ति उपायो नरसत्तम ! मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ । कथं पापै: प्रमुच्येत कथं स त्रिदिवं व्रजेत् । उपपातकसंज्ञानि पातकानि महान्त्यपि । भस्मीभवन्ति सर्वाणि माघस्नायिनि मानवे: ।। वेपन्ते सर्वपापानि माघमासे समागमे । नाशकालोऽयमस्माकं यदि स्नास्यति मानव: ।। पावका इव दीप्यन्ते माघस्नानेन मानवा: । विमुक्ता: सर्वपापेभ्यो मेघेभ्य इव चन्द्रमा: ।। आर्द्रशुष्कं लघुस्थूलं वाङ्मन: कर्म्मण: कृतम् । माघस्नानं दहेत्पापं पावक: समिधो यथा ।। प्रमादिकञ्च यत्पापं ज्ञानाज्ञानंकृतञ्च यत् । स्नानमात्रेण तत्सर्वं नश्यते तूलराशिवत् । इत्यादि पद्मपुराणीयवचनानि प्रमाणानि ।।

## अथ मकरार्के दानविशेष:

यथा स्कान्दे, धेनुं तिलमयीं राजन् ! दद्याद्यश्चोत्तरायणे। सर्वान् कामानवाप्नोति विन्दते परमं सुखम् ।। तथा विष्णुधर्मेऽपि, उत्तरे त्वयने विप्रा वस्त्रदानं महाफलम् ! तिलपूर्णं तथा पात्रं दत्वा रोगै: प्रमुच्यते ।। शिवमाहात्म्येऽपि, तस्यां कृष्णतिलै: स्नानं कार्य्यञ्चोद्वर्त्तनं शुभम् । तिला देयाश्च विप्रेभ्य: सर्वदैवोत्तरायणे ।। तिलतैलेन दीपाश्च विष्णो: शिवगृहे तथेति ।। मकरसंक्रान्तौ कृशरान्नदानं सदाचारात् ।। गन्ध पुष्पाक्षतै: ॐ सोपकरणकृशरान्नेभ्यो नम: इतित्रिरन्नं संपूज्य, पुन: ॐ ब्राह्मणाय नम: इति त्रि: कुशत्रयरूपं ब्राह्मणं संपूज्य, ॐ तत्सदितिजलेन सिक्त्वा कुशत्रयतिलजलान्यादाय ॐ सर्वात्मा सर्वलोकेश: सर्वव्यापी सनातन: । नारायण: प्रसन्न:स्यात् कृशरान्नप्रदानत: ।। अमुं मन्त्रं पठित्वा ॐ अद्यामुके मासि अमुके पक्षेऽमुकतिथौ मकरार्कसंक्रमणप्रयुक्तपुण्यकाले (पुण्याहे वा) अमुकगोत्रस्य मम

१. धर्मशास्त्रीय-विधिप्राप्तम् ।

श्रीअमुकशर्मणः (अमुकगोत्राया अमुकीदेव्या वा) विष्णुप्रीतिकाम एतानि सोपकरणकृशरान्नानि विष्णुदैवतानि यथानामगोत्राय ब्राह्मणायाऽहं ददे ।। ॐ अद्य कृतैतत्सोपकरणकृशरान्नदानप्रतिष्ठार्थमेतावत्कृशरान्नमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ।। **मृतार्थदाने** स्वर्गकाम इति योज्यम् ।। स्त्रीकर्तृके अमुकी देव्या अमुककामा इत्यूह्यम् ।। एवमन्यान्यपि शीतनिवारणवस्त्रादीनि तद्दिने दद्यात् । इति संप्रदायः ।।

## अथ माघकृष्णचतुर्थ्यां गणेशं पूजयेत्

तथाहि कृत्यसागरे तिथितत्वचिन्तामणौ च, अत्र गणेश आविरभूत् । सर्वदेवमयः साक्षात् सर्वमङ्गलकारकः । माघकृष्णचतुर्थ्यान्तु प्रादुर्भूतो गणाधिपः ।। इतिशिव-धर्मोक्तेः ।। सा च तृतीयायुता ग्राह्या ।। अत्रैव विनायकव्रतं कृत्वा श्रीगणेशस्य प्रतिमां निर्माय रात्रौ यथोपचारिकां पूजां जागरणञ्च कृत्वा तत्प्रीत्यर्थं ब्राह्मणेभ्यः पञ्च पञ्च लड्डूकमोदकादिकं दत्वा भोजयेत् ।। धनधान्यादिसमृद्धिः फलमितिबहुपुराणागमादौ निरूपितम् ।। ब्रह्मवैवर्ते :–

चतुर्थी सतृतीया स्यात् तृतीया सचतुर्थिका । चतुर्थी तु गणेशस्य पञ्चम्यां नैव कारयेदिति । कापि गणेशोद्भवा चतुर्थी पञ्चमीयुता नैव पूज्या । अतो मासि मासि गणेशचतुर्थीति निबन्धमात्रे प्रसिद्धाम् । गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्तिताः । चतुर्थ्यः पञ्चमीविद्धाः देवतान्तरयोगत इति वचनात् ।। यत्रतु चन्द्रो देवः पूज्यस्तत्र पञ्चमीवेध एव न्याय्यः । तेन भाद्रशुक्ल चतुर्थीपञ्चमीयुता ग्राह्या, नात्रेति सर्वमैथिलनिबन्धसंप्रदायः ।। मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके ।। मध्याह्नात्-परतश्चेत् स्यान्नागविद्धा प्रशस्यते ।। इति माधवीयस्मृतवचनाभ्यां तिथितत्वचिन्ता-मणौ सर्वत्र तृतीयायुतैवेति सिद्धान्तितम् ।। अस्या पूजाविधिस्तु भाद्रकृत्ये द्रष्टव्या ।।

## मूलभक्षण निषेधः

अस्मिन्मासे मूलकभक्षणे महादोषः । यथा पितॄणां देवतानां च मूलकं नैव दापयेत् । ददन्नरकमाप्नोति भुञ्जीत ब्राह्मणो यदि ।। ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम् । अन्यथा याति न[illegible] क्षत्रविट्शूद्र एव च ।। वरं भक्ष्यमभक्ष्यं तु पिबेद्वागर्हितञ्च यत् । वर्जनीयं प्रयत्नेन मूलकं मदिरासमम् ।।

## यमतर्पणम्

माघकृष्णचतुर्दश्यां यमतर्पणमुक्तम् यमेन, माघे मास्यासिते पक्षे रटन्त्याख्या चतुर्दशी । तस्यामुदयवेलायां स्नातो नावेक्षते यमम् ।। अनर्काभ्युदिते काले माघे

कृष्ण चतुर्दशी। सतारव्योमकाले तु तस्यां स्नानं महाफलम्। स्नात्वा सन्तर्प्य यमं सर्वपापैः प्रमुच्यते ॥

## अथ नरकनिवारणचतुर्दशीप्रदोषव्रतपूजाविधिः

माघकृष्णचतुर्दशी[1] नरकनिवारणचतुर्दशी। तत्र प्रदोषे कृतनित्यक्रियो व्रती शुद्धासने उपविश्य मृन्मयीं महेशप्रतिमां विधाय गणपत्यादिपञ्चदेवतां विष्णुं च सम्पूज्य कुशत्रतिलजलान्यादाय–

ओमद्य माघे मासि कृष्णे पक्षे चतुर्दश्यां तिथौ अमुकगोत्रस्य सपरिवारस्य मम श्री अमुकशर्मणः सकलदुरितोपसर्गापच्छान्तिपूर्वकाऽश्वमेधयज्ञफलसमफल-प्राप्तिकामः श्रीमहेश्वरप्रीत्यर्थं नरकनिवारणचतुर्दशी व्रतपूजनमहं करिष्ये। इति सङ्कल्प्य 'ओं मनोजूति' रिति मन्त्रं पठित्वा ओं भूर्भुवः स्वः श्रीगौरीशङ्करा-विहागच्छतमिह तिष्ठतम्। इत्यावाह्य–ओं हराय नमः, ओं महेश्वराय नमः, ओं शम्भवे नमः, ओं शूलपाणये नमः, ओं पिनाकधृषे नमः, ओं शिवाय नमः, ओं पशुपतये नमः, ओं महादेवाय नमः। इति पुष्पाञ्जलिं समर्प्य ध्यायेत्–ओं ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं, रत्नाकल्पोज्ज्वलाङ्गं परशु-मृगवराभीतिहस्तं प्रसन्नम्। पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥ इति प्रणम्य–ओं देवदेव नमस्तुभ्यं सहस्रशिरसे नमः। नमस्ते कृत्तिवासाय स्वासनं प्रतिगृह्यताम्॥ ततः पाद्यम्–ओं शम्भो गङ्गादितीर्थेभ्यो मया प्रार्थनयाहृतम्। तोयमेतत् सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥ इदं पाद्यं श्री गौरीशङ्कराभ्यां नमः। अर्घ्यम्–ओं वरेण्यं यज्ञपुरुष प्रजापालनतत्पर। नमो माहात्म्यदेवाय गृहाणार्घ्यं नमोऽस्तु ते॥ इदमर्घ्यं श्रीगौरीशङ्कराभ्यां नमः। आचमनीयम्–ओं पाटलोशीरकर्पूरसुरभिः स्वादु शीतलम्। तोयमाचमनीयार्थं शङ्कर प्रतिगृह्यताम्॥ इदमाचमनीयम्०। स्नानम्–ओं मन्दाकिन्याः समानीतं, हेमाम्भोरुहवासितम्। स्नानाय ते मया भक्त्या नीरं स्वीक्रियतां प्रभो॥ इदं स्नानीयम्०।

---

१. **नारदसंहितायाम्**–अर्धरात्रियुता यत्र माघकृष्णचतुर्दशी। शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत्॥ **नागरखण्डे**-माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी! रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत्॥ **लिङ्गपुराणे**–माघान्ते (अमान्ते) कृष्णपक्षे तु अविद्धा या चतुर्दशी। शिवरात्रिसमा ज्ञेया सर्वयज्ञोत्तमोत्तमा॥ वस्तुतस्त्वत्र नक्तव्रते प्रदोषव्यापिनी तिथिर्ग्राह्या तथा हि वत्सः–'प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा। अन्यच्च–'प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी' इति! व्यासः–'त्रिमुहूर्त प्रदोषः स्याद् भानावस्तं गते सति। इति। मन्दिरादौ स्थापितशिवलिङ्गपूजायां तु प्राणप्रतिष्ठादिकमकृत्वैव 'ओं ध्यायेन्नित्यम्ः इत्यतः पूजां समारभेत्। अन्ते विसर्जनमपि न कुर्यात्। केचित्तु अमावास्यान्तमासमधिकृत्य शिवरात्रिचतुर्दश्या एव 'नरकनिवारणचतुर्दशी' इति नामान्तरमित्याहुस्तत् 'माघफाल्गुनयोमध्ये असिता या चतुर्दशी' इत्याद्युपर्युक्तबहुवचन विरोधात् मैथिला न मन्यन्ते। नरकनिवारण-महाशिवरात्रीत्युभयव्रतोद्यापनं तु फाल्गुनकृष्णचतुर्दश्यामेव भवतीति तज्ज्ञाः। प्रायः अचारोऽप्ययमेव दृश्यते।

पञ्चामृतम्—ओं पयो दधि घृतं चैव मधु शर्करयान्वितम्। पञ्चामृतेन स्नपनं प्रीत्यर्थं प्रतिगृह्यताम्।। इदं पञ्चामृतस्नानीयम्०।

**शुद्धोदकम्**—ओं किरणा धूतपापा च पुण्यतोया सरस्वती। मणिकर्णिजलं शुद्धं स्नानार्थं प्रतिगृह्यताम्।। इदं शुद्धोदकं०। इदमाचमनीयम्०। वस्त्रम्—ओं सूक्ष्मतन्तुसमांकीर्णं नानावर्णविचित्रितम्। वस्त्रं गृहाण मे देव प्रीत्यर्थं तव निर्मितम्।। इदं वस्त्रं बृहस्पतिदैवतम्'। यज्ञोपवीतम्—ओं महादेव नमस्तेऽस्तु त्राहि मां भवसागरात्। ब्रह्मसूत्रं सोत्तरीयं गृहाण परमेश्वर।। इमे यज्ञोपवीते बृहस्पतिदैवते०। इदमाचमनीयम्०। चन्दनम्—ओं मलयाचलसम्भूतं धनासारमनोहरम्। हृदयानन्दनं चारु चन्दनं प्रतिगृह्यताम्।। इदं श्रीखण्डचन्दनम्०। अक्षताः—ओ अखण्डानक्षतान् शुक्लान् शोभनान् शालितण्डुलान्। त्राहि मां सर्वपापेभ्यो गृहाण वृषभध्वज।। इदमक्षतम्०। पुष्पाणि—ओं माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो। मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम्।। एतानि पुष्पाणि०। इदं पुष्पमाल्यम्०। विल्वपत्राणि—ओं त्रिदलं त्रिगुणाकारं त्रिनेत्रस्य सदा प्रियम्। बिल्वपत्रं प्रयच्छामि त्र्यम्बकाय नमोऽस्तु ते ।। एतानि बिल्वपत्राणि०।

**अथाऽङ्गपूजा**—ओं विश्वपतये नमः, पादौ पूजयामि। ओं शिवाय नमः, जानुनी पूजयामि। ओं शूलपाणये नमः, गुल्फौ पू०। ओं शम्भवे नमः, कटिं पू०। ओं स्वयम्भुवे नमः, गुह्यं पू०। ओं महादेवाय नमः, नाभिं पू०। ओं विश्वकर्त्रे नमः, उदरं पू०। ओं सर्वतोमुखाय नमः, पार्श्वौ पू०। ओं स्थाणवे नमः, स्तनौ पू०। ओं नीलकण्ठाय नमः, कण्ठं पू०। ओं श्रीकण्ठाय नमः मुखं पू०। ओं शशिभूषणाय नमः मुकुटं पू०। ओं देवाधिदेवाय नमः, सर्वाङ्गं पूजयामि।

**ततो धूपः**—ओं वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्।। एष धूपः ओं गौरीशङ्कराभ्यां नमः। नैवेद्यम्—अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्। भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम्। इदं नैवेद्यम्०। पुनराचमनीयम्०। करोद्वर्तनगन्धम्—ओं मलयाचलसम्भूतं कर्पूरेण समन्वितम्। करोद्वर्तनकं चारु गृह्यतां जगतः पते। ताम्बूलम्—ओं पूगीफलसमायुक्तं नागवल्लीदलैर्युतम्। कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम्।। इदं ताम्बूलं०। द्रव्यम्—ओं हिरण्यगर्भ गर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे।। इदं दक्षिणार्थं द्रव्यम्०। आरार्तिकम्—ओं चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींष्यारार्तिक्यं प्रतिगृह्यताम्।। इदमारार्तिकं०। प्रदक्षिणा—ओं यानि कानि च पापानि ब्रह्महत्यासमानि च। तानि तानि प्रणश्यन्तु प्रदक्षिण पदे पदे।। नमस्काराः—ओं नमः शिवाय शान्ताय पञ्चवक्त्राय शूलिने। नन्दिभृङ्गमहाकालगणयुक्ताय शम्भवे।। नमस्ते सर्वदीपात्मन् निमेषत्रुटिसम्भव।

जन्ममृत्युजराव्याधिसंसारभयनाशन।। नमस्ते देव देवेश नमस्ते धरणीधर। नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम।। संसारार्णवमग्नं च त्राहि मां वृषभध्वज। हराय च नमस्तुभ्यं त्रैलोक्यव्यापिने नमः।। इति। ततः वक्ष्यमाणां कथां श्रुत्वा विसर्जनं कुर्यात्।

**अथ विसर्जनम्**—ओं गौरीशङ्करौ पूजितौ स्थः क्षमेयाथां स्वस्थानं गच्छतमिति विसृज्य कुशत्रयतिलजलान्यादाय—ओमद्य कृतैतन्नरकनिवारणचतुर्दशीव्रत पूजनतत्कथाश्रवणकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानाम-गोत्राय ब्राह्मणाय दक्षिणामहं ददे। इति ब्राह्मणाय प्रतिपादयेत्।

## अथ नरकनिवारणचतुर्दशीव्रतकथा

**पार्वत्युवाच**—कथं यमपुरं मार्गं त्यक्त्वा देवं व्रजेन्नरः। एतन्मे महदाश्चर्यं प्रत्यक्षं कुरु शङ्कर ।।१।। **शङ्कर उवाच**—शृणु देवि यथवृत्तं कथापौराणिकीं शुभाम्। यमशासनहन्त्रीं च शिवशासनदायिकाम् ।।२।। कश्चिदासीत् पुरानिषाद-स्त्वामिषप्रिय। प्रत्यन्तदेशवासी च भूधरासन्निकेतनम् ।।३।। सीमान्ते स सदा तिष्ठेत् कुटुम्बपरिपालकः। तथा पीनो धनुर्धारी श्यामाङ्गः कृष्णकञ्चुकः ।।४।। बद्धगोधाङ्गुलित्राणः सदैव मृगयारतः। एवंविधो निषादोऽसौ चतुर्दश्यां दिने शुभे ।।५।। व्यवहारकैश्च द्रव्यार्थे देवागारे प्ररुन्धितः। तेनापि देवता दृष्टा जनानां वचनं श्रुतम् ।।६।। उपवासव्रतानां च शिवः शिव शिवेति च। दिनान्ते तैस्तदा मुक्तः प्राप्तन्द्रव्यं प्रदीयताम् ।।७।। ततोऽसौ धनुरादाय दक्षिणेन गतः स्वयम्। आगच्छन् स वनोद्देशे जनहासं चकार सः ।।८।। शिवशिव किमेतद्वै कुर्वन्ति नगरे जनाः। वनेचरान्निरीक्षँस्तु चतुर्दिक्षु इतस्ततः ।।९।। पदं च पदमार्गं च आश्रमे शूकरान् मृगान्। इतश्चेतश्च धावन् स आमिषे लुब्धमानसः ।।१०।। वनं सपर्वतं सर्वं भ्रमस्तद्दिनं गतम्। सम्प्राप्तं तेन नो किञ्चन्मृगशूकरतित्तिरिम् ।।११।। निराशो लुब्धको जातस्तदा चास्तङ्गतो रविः। चिन्तयित्वा जलोपान्ते सागरं जीवघातनम् ।।१२।। संविधास्याम्यहं रात्रौ निश्चितं मम जीवनम्। गतोऽसौ जलसामीप्यं तीरस्थो जालिमध्यतः ।।१३।। उटजं कर्तुमारेभे आत्मनो गुप्तिकारणात्। जालिमध्ये महालिङ्गमस्ति स्वायम्भुवं शुभम् ।।१४।। विल्ववृक्षो महादिव्यो जालिमध्येन संस्थितः। गृहीत्वा तस्य पत्राणि मार्गशुद्ध्यर्थमाक्षिपत् ।।१५।। क्षिप्तानि दक्षिणे भागे गतानि लिङ्गमूर्धनि। न दिवा भोजनं तस्य आमिषे लुब्धमानसः ।।१६।। ततश्चिन्तयमानस्य न निद्रा समजायत। यस्य गन्धं समासाद्य लुब्धकस्य वरानने ।।१७।। न तिष्ठन्ति मृगाः सर्वे शरघातभयात्तदा। मृगान् निरीक्षतस्तस्य निद्रानाशोप्यजायत ।।१८।। बिल्वजालिङ्गतस्यास्य प्रथमः प्रहरो गतः। ततो

जलार्थमायाता हरिणी गर्भसंयुता ।।१९।। यौवनस्था सुरूपा च स्तनपीना सुशोभना। निरीक्षन्ती दिश: सर्वा भृशमुत्फल्ललोचना ।।२०।। लुब्धकेनापि सा दृष्टा बाणलक्ष्यं समागता। बाणश्च सन्धितस्तेन एकदृष्टेन चेतसा ।।२१।। त्रोटयित्वा च पत्राणि प्रक्षिप्तानि शिवोपरि। शिवं देवं सदा ध्यायन् शीतेन परिपीडित: ।।२२।। एतस्मिन्नन्तरे दृष्टो हरिण्या लुब्धकस्तदा। लुब्धकस्तु स्वरूपेण कृतान्त इव तिष्ठति ।।२३।। दृष्ट्वा तु तस्य सन्धानं यमदंष्ट्रासमप्रभम्। सा मृगी दिव्यया वाचा लुब्धकं वाक्यमब्रवीत् ।।२४।। स्थिरो भव महाव्याध सर्वजीवनिकृन्तन। किमर्थं हन्तुमुद्युक्त: कथयस्व मम प्रभो ।।२५।। **व्याध उवाच**—कुटुम्बं पीडितं मेऽद्य क्षुधया च मया सह। धनं च मद्गृहे नास्ति तेन त्वां हन्मि शोभने ।।२६।। **सूत उवाच**—जातपूजाप्रभावेण जागरोपोषणेन च। चतुर्थांशेन पापानां विमुक्तो लुब्धकस्तदा ।।२७।। लुब्धकस्तु ततो दृष्ट्वा मृगीं मानुषभाषिणीम्। आश्चर्यं परमं दृष्ट्वा किञ्चिद्धर्मसमन्वित: ।।२८।। **व्याध उवाच**—मया हि पातिता जीवा उत्तमाऽधममध्यमा:। न श्रुता ईदृशी वाणी श्वापदानां कदाचन ।।२९।। कस्मिन् देशे त्वमुत्पन्ना कस्मात् स्थानादिहागता। कथयस्व प्रयत्नेन परं कौतूहलं हि मे ।।३०।। **मृग्युवाच**—शृणु त्वं लुब्धकश्रेष्ठ कथयामि तवाखिलम्। आसन् पूर्वं मदारम्या: स्वर्गे शक्रस्य चाप्सरा: ।।३१।। अनन्तरूपलावण्या: सौभाग्येन विगर्विता:। सौभाग्यमदपुष्टाङ्गो दानवो मदगर्वित: ।।३२।। मयैव स कृतो भर्ता हिरण्याक्षो महासुर:। तेन सार्द्धं मया भुक्तं चिरकालं यथेप्सितम् ।।३३।। अन्यस्मिन् दिवसे व्याध क्रीडन्त्या मेऽसुरेण च। प्रत्यहं प्रेक्षते नित्यं शङ्करस्याग्रतस्तदा ।।३४।। यावद् गच्छाम्यहं तत्र तावन्मां शङ्करोऽब्रवीत् । क्व गता त्वं वरारोहे केन वा सङ्गता शुभे ।।३५।। किं वा सौभाग्यगर्वेण नायाता मम मन्दिरम्।। सत्यं कथय शीघ्रं त्वं नो वा शापं ददामि ते ।।३६।। शापभीत्या मया तत्र इत्युक्तं शङ्कराग्रत:। शृणु देव प्रवक्ष्यामि शापानुग्रहकारक ।।३७।। ममास्ति भर्ता विश्वेश दानवेन्द्रो महाबल: । तेन सार्धं मया देव क्रीडितं निजमन्दिरे ।।३८।। तेनाहं नागता शीघ्रं सृष्टिसंहारकारक। रुद्रस्तद्वचनं श्रुत्वा सकोपो वाक्यमब्रवीत् ।।३९।। मृग: कामातुरो नित्यं हिरण्याक्षो भविष्यति। त्वं मृगी तस्य भार्या वै भविष्यसि न संशय: ।।४०।। त्यक्त्वा स्वर्गं तथा देवान् दानवं भोक्तुमिच्छसि। द्वादशाब्दानि भो भद्रे भविता शाप एव ते ।।४१।। परस्परस्य शोकेन शापान्तोऽपि भविष्यति। अनुग्रह: पुनस्त्वेष शङ्करेण कृत: स्वयम् ।।४२।। कदाचिद्व्याधप्रवरस्तव सन्निध्यमाश्रित:। वधार्थं तव सम्प्राप्त: पुर्वजन्म स्मरिष्यसि ।।४३।। अत ऊर्ध्वं तदा रुद्रं दृष्ट्वा मोक्षमवाप्स्यसि। शङ्करो न मया दृष्टो वसत्यस्मिन् महावने ।।४४।। ततो दु:खमनुप्राप्ता मांसमेदोविवर्जिता। गर्भाक्रान्ता विशेषेण न वध्या चेति निश्चितम् ।।४५।। तत्कुटुम्बस्य ते नूनं भोजनं

न भविष्यति। आयास्यति मृगी त्वन्या मार्गेणानेन लुब्धक ।।४६।। पीना यौवनसम्पन्ना बहुमांसा मदोद्धता। भोजनं सकुटुम्बस्य तव सद्यो भविष्यति ।।४७।। अथवाऽन्यो मृगो व्याध पानार्थं तु जलाशये । आगमिष्यति प्रत्यूषे क्षुधार्त्तस्य न संशयः ।।४८।। गर्भं त्यक्त्वा पुनः प्रातर्बालान् सन्दिश्य बन्धुषु। शपथैरागमिष्यामि सन्दिश्य च सखीजनम् ।।४९।। तस्यास्तद्वचनं श्रुत्वा व्याधो विस्मयमागतः। क्षणमेकं तथा स्थित्वा व्याधो वचनमब्रवीत् ।।५०।। नागमिष्यति चेदन्यो जीवस्त्वमपि गच्छसि । क्षुधया पीड़ीतोऽहं वे कुटुम्बश्च विशेषतः ।।५१।। प्रातस्त्वया मम गृहमागन्तव्यं यथातथम्। शपथं च व्रज त्वं हि यथा मे प्रत्ययो भवेत् ।।५२।। पृथिवीवायुरादित्याः सत्ये तिष्ठन्ति देवताः। तस्मात् सत्येन गन्तव्यं भवत्या स्वगृहं प्रति ।।५३।। तस्य तद्वचनं श्रुत्वा गर्भार्ता सा मृगी तदा। चक्रे सत्यप्रतिज्ञां वै व्याधस्याग्रे पुनः पुनः ।।५४।। **मृग्युवाच**—द्विजो भूत्वा तु यो व्याध वेदभ्रष्टोऽभिजायते। स्वाध्याय-सन्ध्यारहितः सत्यशौचविवर्जितः ।।५५।। अविक्रयाणां विक्रेता अपूज्यानां च याचकः। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः ।।५६।। दुष्टबुद्धौ तु यत्पापं धूर्ते वा ग्रामकण्टके ।। नास्तिके च विशीले च परदाररते तथा ।।५७।। वेदविक्रयिणे चैव शवसूतकभोजने। मृतशय्याप्रतिग्राहे मातापित्रोरपालके ।।५८।। दानं दातुं प्रवृत्तस्य योऽन्तरायकरो नरः। तस्य पापेन लिप्यामि यद्यहं नागमे पुनः ।।५९।। देवद्रव्यं गुरुद्रव्यं ब्रह्मद्रव्यं हरेत्तु यः। तस्य पापेन लिप्स्यामि यद्यहं नागमे पुनः ।।६०।। दीपं दीपेन यः कुर्यात् पादं पादेन धावयेत्। तस्य पापेन०।।६१।। भर्तारं स्वामिनं मित्रमात्मानं बलमेव च। गां विप्रं च गुरुं नारीं यो मारयति दुर्मतिः। तस्य पापेन०।।६२।। अवैष्णवे च यत्पापं यत्पापं दाम्भिके जने। अजितेन्द्रियधूर्ते च परदोषानुकीर्तने ।।६३।। कृतघ्ने च कदर्ये च परदाररते तथा। सदाचारविहीने च परपीडाप्रदायके ।।६४।। परपैशुन्ययुक्ते च कन्याविक्रयकारके । परापवादसन्तुष्टे सर्वधर्मविवर्जिते ।।६५।। वृषलीपतौ वार्धुषौ च पित्रोरन्तरदायके । हेतुके बकवृत्तौ च कूटसाक्षिप्रदे तथा। एतेषां पातकं मह्यं यदि नायामि ते गृहम् ।।६६।। यत्पापं ब्रह्महत्यायां पितृमातृवधे तथा। तस्य पापेन०।।६७।। यत्पापं लुब्धकानां च यत्पापं गरदायिनाम्। तेन पापेन०।।६८।। द्विभार्यः पुरुषो यस्तु समदृष्ट्या न पश्यति । तेन पापेन०।।६९।। सकृद् तत्त्वा तु यः कन्यां द्वितीयाय प्रयच्छति। तस्य पापेन०।।७०।। कथायां कथ्यमानायामन्तरं कुरुते नरः। तेन पापेन०।।७१।। पतिनिन्दापरो नित्यं वेदनिन्दापरो हि यः। तेन पापेन०।।७२।। यस्य सङ्ग्रहणी भार्या ब्राह्मणी च विशेषतः। तस्या पापेन०।।७३।। प्रेतश्राद्धे तु यो भुंक्ते पतिते बहुयाजके। असच्छास्त्रार्थनिरते पुराणार्थविवर्जिते ।।७४।। मूर्खे पाखण्डनिरते क्रयविक्रयके द्विजे। एतेषां पातकं मह्यं यदि नायामि ते गृहम् ।।७५।। एकाकी मिष्टमश्नाति

भार्यापुत्रविवर्जितः । आत्मजां गुणसम्पन्नां समानसदृशे वरे ।।७६।। न प्रयच्छति यः कन्यां नरो वा ज्ञानदुर्लभः। तस्य पापेन०।।७७।। मृगीवाक्यं ततः श्रुत्वा लुब्धको हृष्टमानसः। संहृत्य बाणसन्धानं मुमोच हरिणीं तदा ।।७८।। तस्या मुक्ति-प्रभावेण लिङ्गस्यापि प्रपूजनात्। तस्मिन्नेव क्षणे जातेऽपरा प्राप्ता मृगी तदा ।।७९।। सन्त्रस्ता भयसम्मग्ना पतिमन्वेष्यती मुहुः। जालिमध्ये स्थितेनाऽथ दृष्टा सा लुब्धकेन तु ।।८०।। पुनर्वृक्षस्य पत्राणि त्रोटयित्वा करेण तु। क्षिप्तानि दक्षिणे भागे लिङ्गोपरि दिदृक्षया ।।८१।। तस्या वधार्थे तेनाऽथ बाणो धनुषि सन्धितः। तिष्ठंस्तत्रैकचित्तेन कुटुम्बार्थं जिघांसया ।।८२।। निरीक्ष्य लुब्धको यावद् बाणं तस्यां विमुञ्चति । तावन् मृग्या स सन्दिष्टो दृष्ट्वा तं बिह्वलाऽभवत् ।।८३।। अद्यैव भगिनी मेऽपि लुब्धकेन विनाशिता। मम किं जीवितव्येन तस्याः दुःखेन पीडिता ।।८४।। वरं मृत्युर्न शोको वै दृष्ट्वा व्याधं विशेषतः। एवं संचिन्त्य हरिणी लुब्धकं वाक्यमब्रवीत् ।।८५।। धनुर्धरवर व्याध सर्वजीवनिकृनतन। देहि मे वचनं चैकं पश्चात्त्वं मां निपातय ।।८६।। आयाता हरिणी चैका मार्गेणानेन लुब्धक। समायाताऽथवा नैव सत्यं कथय सुव्रत ।।८७।। तच्छ्रुत्वा लुब्धकस्तत्र विस्मृतेक्षण ऐक्षत। तस्यास्तु यादृशी वाणी अस्याश्चैव तु तादृशी ।।८८।। सा चैषा चागता नूनं प्रतिज्ञापालनाय च। अथ वाऽन्या समायाता तया या कथिता पुरा ।।८९।। **लुब्धक उवाच**–अहोरात्रं कृतं कष्टं कुटुम्बार्थे मया मृगि। अधुना त्वां हनिष्यामि देवानां स्मरणं कुरु ।।९०।। व्याधोक्तवचनं श्रुत्वा हरिणी दुःखिता भृशम् । व्याधं प्रत्याह रुदिता भो मां व्याध निपातय ।। ९१।। तेजो बलं तथा सर्वं निर्दग्धं विरहाग्निना । अहं प्राणान् प्रमोक्ष्यामि भोजनं ते न जायते ।।९२।। बलवांश्च महातेजो मदमांससमन्वितः। अन्यश्च पीनगौराङ्गी मृगो ह्यत्रागमिष्यति ।।९३।। अहंच दुर्बला नूनं मेदमांसविवर्जिता। केवलं पापभाक् त्वं हि मम प्राणविमोचकः ।।९४।। मार्गेणानेन भो व्याध आगमिष्यति संस्फुटम्। तं हत्वा तव भो व्याध तृप्तिर्नूनं भविष्यति ।।९५।। तथोक्तं लुब्धकः श्रुत्वा किं करोमीति चिन्त्य च । मृगी प्राह सयुक्तार्थमेष मे निश्चयो हृदि ।।९६।। सञ्चिन्त्य लुब्धकः प्राह मृगीं शोकातुरां कृशाम् । सत्यं वद महाभागे प्रत्ययो मे यथा भवेत् ।।९७।। तस्य तद्वचनं श्रुत्वा हरिणी दुःखकर्शिता । चक्रे सत्यप्रतिज्ञां तु व्याधस्याग्रे पुनः पुनः ।।९८।। **मृग्युवाच**–क्षत्रियस्य रणं श्रुत्वा संग्रामं यो न गच्छति । तस्य पापेन लिप्यामि यद्यहं नागमे पुनः ।।९९।। भेदयन्ति तडागानि वापीनां च गवामपि। मार्गस्थानं च ये घ्नन्ति सर्वसत्त्वभयङ्कराः ।।१००।। तेषां वै पातकं मह्यं यदि नायामि ते गृहम्। एतच्छ्रुत्वा तु व्याधेन साऽपि मुक्ता मृगी तदा ।।१०१।। जलं पीत्वा तु बहुशो गता सद्यो यथागतम्। जालिमध्ये स्थितस्यापि द्वितीयः प्रहरो गतः ।।१०२।। त्रुटित्वा

बिल्वपत्राणि पुनर्देवं नियोजयेत् । पीडितोऽतीव शीतेन क्षुधया गृहचिन्तया ।।१०३।। शिवः शिवेति जल्पन् वै न निद्रामुपलब्धवान् ।। कृतं सुरार्चनं तेन प्रहरे प्रहरे गते ।।१०४।। वीक्षंश्चैव दिशः सर्वाः सत्त्वमार्गान् निरीक्षयेत् । लुब्धकेनाऽथ दृष्टोऽसौ हरिणः स्फुरितेक्षणः ।।१०५।। विलोकयन् दिशः सर्वा मार्गमाणो मृगीपदान् । सौभाग्यबलदर्पाढ्यो मदनान् मत्तपीवरः ।।१०६।। तं दृष्ट्वा बाणमुद्यम्य आकर्णं तुष्टचेतसा । बाणं मुञ्चति तावद् वै यावद् दृष्टो मृगेण तु ।।१०७।। कालरूपं तु तं दृष्ट्वा मृगश्चिन्तितवान् भृशम् । निश्चयो भविता मृत्युर्गोचरोऽस्य गतो यतः ।।१०८।। भार्या प्राणसमा मेऽद्य व्याधेनेह निपातिता । तया विरहितस्याद्य नूनं मृत्युर्भविष्यति ।।१०९।। हाहा कालकृतात् पापाद् यद् भार्यादुःखमागतम् । भार्याया न समं सौख्यं गृहेऽपि च वनेऽपि च ।।११०।। तया विना न धर्मोऽस्ति नार्थकामौ विशेषतः । वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद् गृहम् ।।१११।। प्रासादोऽपि तया हीनः कान्तारादतिरिच्यते । धर्मकामार्थकार्येषु भार्या पुंसः सहायिनी ।।११२।। विदेशेन गतेनापि सा वै विश्वासकारिणी । नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमं सुखम् ।।११३।। नास्ति भार्यासमं लोके नरस्यार्तस्य भेषजम् । यस्य भार्या गृहे नास्ति साऽपि च प्रियवादिनी । अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ।।११४।। एका प्राणसमा मेऽभूद् द्वितीया प्राणदा मम । इत्येवं चिन्तयित्वा तु लुब्धकं वाक्यमब्रवीत् ।।११५।। **मृग उवाच**–शृणु व्याध नरश्रेष्ठ आमिषाहारभोजन । यत्ते पृच्छाम्यहं वीर तद्व्यक्तं वद मे प्रभो ।।११६।। आगतं हरिणीयुग्मं केन मार्गेण तद्गतम् । त्वया विनाशितं वाऽद्य सत्यं कथय मेऽधुना ।।११७।। तस्य तद्वचनं श्रुत्वा लुब्धको विस्मयं गतः । असावपि न सामान्यो देवता काप्यनुत्तमा ।।११८।। उवाच लुब्धकः सद्यः तस्याग्रे वाक्यमुत्तमम् । ते गतेऽनेन मार्गेण शपथं कृत्वाममाग्रतः ।।११९।। तभ्यां दत्तोऽसि भुक्त्यर्थे मम त्वमधुना यतः । सम्प्रति त्वां हनिष्यामि नैव मोक्ष्यामि कर्हिचित् ।।१२०।। **मृग उवाच**–तत्सत्यं कीदृशं ताभ्यां वाक्यमुक्तं तवाग्रतः । येन ते प्रत्ययो जातो मुक्तं तद्धरिणीद्वयम् ।।१२१।। ते गते केन मार्गेण ये मुक्ते व्याध तेऽधुना ।।१२२।। **व्याध उवाच**–ते गतेऽकेन मार्गेण स्वमाश्रमपदं ययौ । व्याधेन कथितास्ताभ्यां शपथा ये कृतास्तदा ।।१२३।। **मृग उवाच**–ताभ्यां व्याध यदुक्तं च तत्करोमि न चान्यथा। प्रभाते त्वद्गृहं नूनमागमिष्यामि निश्चितम् ।।१२४।। भार्या ऋतुमती मेऽद्य कामार्ताप्यधुना भृशम् । गत्वा गृहेषु भुक्त्वा तामापृच्छ्य च सुहृज्जनान् ।।१२५।। शपथैरागमिष्यामि गृहं ते नात्र संशयः । मद्देहं स्वगृहं नाद्य नेतुं शक्तः कथञ्चन ।।१२६।। तद् वृथा मरणं मे

स्याद्यदि त्वं चाद्य घातकः ॥१२७॥ **लुब्धक उवाच**–असत्यं भाषसे धूर्त प्रतारयसि मो वृथा । ज्ञात्वा मृत्युं स्थितं तत्र तदागच्छति कोऽल्पधीः ॥१२८॥ व्याधस्य वचनं श्रुत्वा हरिणो वाक्यमब्रवीत् । शपथैरागमिष्यामि यथा ते प्रत्ययो भवेत् ॥१२९॥ **व्याध उवाच**–मृग त्वं शपथान् ब्रूहि विश्वासो मे भवेद्यथा । यथा हि प्रेषयामि त्वां स्वगृहं प्रति कामुकम् ॥१३०॥ **मृग उवाच**–भर्तारं वञ्चयेद्या स्त्री स्वामिनं वञ्चते नरः । मित्रं च वञ्चयेद्यस्तु गुरुद्रोहं करोति यः ॥१३१॥ विरसं तु रसं दद्यात् प्रेमभेदं करोति यः । भेदयेद् यस्तडागादि प्रासादं पातयेतु यः ॥१३२॥ प्रवादशीलो यो विप्रः क्रयविक्रयकारकः । सन्ध्यास्नानविहीनश्च वेदशास्त्रविवर्जितः ॥१३३॥ मद्यपाः स्त्रीषु रक्ता ये परनिन्दारताश्च ये । परस्त्रीसेवका विप्राः परपैशुन्यसूचकाः ॥१३४॥ शूद्रान्नभोजिनो ये च भार्यापुत्रांस्त्यजन्ति ये । वेदनिन्दापरा ये च वेदशास्त्रार्थनिन्दकाः । तेषां वै पातकं मह्यं यदि नायामि ते गृहम् ॥१३५॥ आदित्यं विष्णुमीशानं गणाध्यक्षं तु पार्वतीम् । एतास्त्यक्त्वा गृहे मूढो योऽन्यं पूजयते नरः । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् ॥१३६॥ यो गाः स्पृशति पादेन उदितेऽर्के च सुप्यति । एकाकी मिष्टमश्नाति तस्य पापं च याम्यहम् ॥१३७॥ भर्तारमर्थहीनं च कुरूपं व्याधिपीडितम् । या न पूजयते नारी तस्याः पापस्य भागहम् ॥१३८॥ अथ किं बहुनोक्तेन भो लुब्धक तवाग्रतः । यदि नायामि ते गेहं मम सत्यं भवेदि सत् ॥१३९॥ तेन वाक्येन सन्तुष्टो व्याधो वै वीतकल्मषः । संहृत्य धनुषो बाणं मृगो मुक्तो गृहं प्रति ॥१४०॥ जलं पीत्वा तु हरिणः प्रविष्टो गहनं वनम् । गतोऽसौ तेन मार्गेण गतं येन मृगीद्वयम् ॥१४१॥ लुब्धकेन तदा तत्र जालिमध्ये स्थितेन हि । प्रत्यूषे बिल्वपत्राणि त्रोटयित्वा प्रतप्य च ॥१४२॥ शिवः शिवेति जल्पन् वै स्थितस्तत्रैव जागृतः । अथोदिते सूर्यविम्बे अकामाज्जागरे कृते । पापान् मुक्तोऽप्यसौ सद्यः शिवपूजाप्रभावतः ॥१४३॥ यावद् दिशो निरीक्षेत निराशो भोजनं प्रति । तावच्छिशुवृता चान्या मृगी तत्र समागता ॥१४४॥ दृष्ट्वा मृगीं तदा व्याधो बाणं धनुषि योजयेत् । यावन्मुञ्चत्यसौ बाणं तावदुक्तं तया तदा ॥१४५॥ मा बाणं मुञ्च धर्मात्मन् धर्म मा मुञ्च सुव्रत । अहं न वध्या सर्वेषामिति शास्त्रे विनिश्चितः ॥१४६॥ राजानो मिथुनासक्तास्तनयो व्याधिपीडितः । न हन्तव्यो मृगो राज्ञा मृगी च शिशुना वृता ॥१४७॥ अथवा धर्ममुत्सृज्य मां हनिष्यसि मानव । बालकं स्वगृहे मुक्त्वा सखीनां च निवेद्य वै । १४८॥ शपथैरागमिष्यामि व्याध शृणु वचो मम । या स्वभर्तारमुत्सृज्य परपुंसि रता सदा । तस्याः पापेन लिप्यामि यदि नायामि ते गृहम् ॥१४९॥ मद्यं मांसं विषं

दुग्धं नीलकुम्भफलानि च । एतानि विक्रयेद्यस्तु नरो मोहसमन्वितः । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् ॥१५०॥ तस्यास्तद्वचनं श्रुत्वा व्याधो विस्मयमागतः । ततो व्याधेन सा मुक्ता गता वै निजमन्दिरम् ॥१५१॥ व्याधोऽपि तत्सरस्त्यक्त्वा जगाम स्वगृहं प्रति । सर्वेषां वचनं ध्यायन् मृगाणां सत्यवादिनाम् ॥१५२॥ एतेषां घातको नित्यमहं गच्छामि कां गतिम् । दृष्ट्वा. गृहं समायातो बालकाः क्षुधयावृताः ॥१५३॥ नान्नं मांसं गृहे तस्य भोजनं येन जायते । निरामिषं तु तं दृष्ट्वा निराशास्तेऽभवंस्तदा ॥१५४॥ व्याधोऽपि च तदा तत्र नेषां वाक्यानि संस्मरन् । न भोजनं न निद्रां च लभते विस्मयान्वितः ॥१५५॥ आगमिष्यन्ति ते नूनं शपथैरपि यन्त्रिताः । न तानहं वधिष्यामि सतां व्रतमनुस्मरन् ॥ १५६॥ लुब्धकेन तदा मुक्तो हरिणः शपथैर्गताः। स्वमाश्रमं तु सम्प्राप्तो यत्रः तद्धरिणीद्वयम् ॥१५७॥ सद्यःप्रसूता सा चैका द्वितीया रतिलालसा । तृतीयापि समायता बालकैर्बहुभिर्वृता ॥१५८॥ सर्वाः समेता एकत्र मरणे कृतनिश्चयाः । परस्परं प्रजलपन्त्यो लुब्धकस्य विचेष्टितम् ॥१५९॥ आयातां हरिणीं भुक्त्वा रूपाढ्यां रतिलालसाम् । कृतकृत्योऽभवत्तत्र ताभ्यो वाक्यमथाऽब्रवीत् ॥१६०॥ युष्माभिरिह संस्थेयं कर्तव्यं प्राणरक्षणम् । व्याघ्रादिभ्यो लुब्धकेभ्यो बालकानां प्रयत्नतः ॥१६१॥ अहंमत्यानुगां भार्यां न भुङ्क्ते मोहसंवृतः। भ्रूणहा स तु विज्ञेयस्तस्य जन्म निरर्थकम् ॥१६२॥ सन्तानात् स्वर्गमाप्नोति इह कीर्तिश्च शाश्वती। सन्ततिर्यत्नतः पाल्या स्वर्गसौख्यप्रदायिका ॥१६३॥ अपुत्रस्य गतिर्नास्ति इहलोके परत्र च येन केनाप्युपायेन पुत्रमुत्पादयेत् पुमान् ॥१६४॥ मया च तत्र गन्तव्यं यत्र व्याधस्य मन्दिरम् । सत्यं तु पालनीयं स्यात् सत्ये धर्मः प्रतिष्ठितः ॥१६५॥ एतच्छ्रुत्वा तु ता नार्यो वाक्यमूचुः सुदुःखिताः। वयमप्यागमिष्यामस्त्वया सार्धं मृगोत्तम ॥१६६॥ तथा ते विप्रियं कान्त न स्मरामः कदाचन। पुष्पितेषु वनान्तेषु नदीनां संगमेषु च ॥१६७॥ क्रन्दरेषु च शैलानां युष्माभी रक्षिता वयम् । न कार्यमद्य ह्यस्माकं क्रीडितेन त्वया विना ॥१६८॥ नारीणां पतिहीनानां जीवितैः किं प्रयोजनम्। मितं ददाति हि पिता मितं भ्राता मितं सुतः। अमितस्य च दातारं भर्तारं का न पूजयेत् ॥१६९॥ अपि द्रव्ययुता नारी बहुपुत्रसुहृद्वृता। सा शोच्या बन्धुवर्गस्य पतिहीना कुलाङ्गना ॥१७०॥ गन्धमाल्यैः स्त्रियो नित्यं प्रीयन्ते भर्तुरग्रतः । नातन्त्रा वाद्यते वीणा नाऽचक्रो भ्रमते रथः ॥१७१॥ नापतिः सुखमाप्नोति नारी पुत्रशतैर्वृता । नास्ति भर्तृसमो धर्मो नास्ति धर्मसमः सुहृत् । नास्ति भर्तृसमो नाथः स्त्रीणां भर्ता परा गतिः ॥१७२॥ एवं विलप्य ताः सर्वा मरणे कृतनिश्चयाः ।

बालकैस्तैः समायुक्ता भर्तृशोकेन दुःखिताः ॥१७३॥ मृगस्तासां वचः श्रुत्वा हृदि चिन्तापरोऽभवत् । गन्तव्यं किं न गन्तव्यं मया व्याधस्य मन्दिरम् ॥१७४॥ एकदा सुकृतं रक्षन् कुटुम्बस्य क्षयो भवेत् । तदन्तिकं न चेद्यामि मम सत्यं क्षयं व्रजेत् ॥१७५॥ वरं पुत्रस्य मरणं भार्याया आत्मनस्तथा । सत्याकृतपरो नित्यमाकल्पं रौरवं ब्रजेत् ॥१७६॥ तस्मात् सत्यं पालनीयं नरैः श्रेयोऽर्थिभिः सदा । एवं सञ्चिन्त्य हरिणो धर्मान् हृदि मनोरमान् ॥१७७॥ ताभिः सहैव च शनैः क्षणात्तस्याश्रमं ययौ । तस्मिन् सरसि संस्नात्वा कर्मन्यासं चकार ह ॥१७८॥ तल्लिङ्गं प्रणिपत्याशु हृदि ध्यायन् सदाशिवम् । मानं पानं परित्यज्य मैथुनं भोगमेव च ॥१७९॥ कामं क्रोधं तथा लोभं मायां मोक्षविनाशिनीम् । वन्दयित्वा तु तं देवं लुब्धकाभिमुखं ययौ ॥१८०॥ तस्य भार्याश्च पुत्राश्च मरणे कृतनिश्चयाः । अनाशकं व्रतं गृह्य पृष्ठलग्नाः समाययुः ॥१८१॥ भार्यापुत्रैः परिवृतो मृगस्तं देशमागतः । क्षुधितैर्बालकैर्युक्तो लुब्धको यत्र तिष्ठति ॥१८२॥ अथ तं देशमागत्य कुटुम्बेन समन्वितः । पालयन् सत्यवाक्यानि लुब्धकं वाक्यमब्रवीत् ॥१८३॥ **मृग उवाच**–जहि मां प्रथमं व्याध पश्चादेताः क्रमेण तु । बालका मे ततः पश्चात् हन्यन्तां मा विलम्बय ॥१८४॥ लुब्धकैस्तु मृगा भक्ष्या नास्ति दोषः कदाचन । वयं यास्यामः स्वर्लोकं सत्यपूता न संशयः ॥१८५॥ तथा ते सकुटुम्बस्य प्राणयात्रा भविष्यति । एतच्छ्रुत्वा तु वचनं मृगेण परिभाषितम् । आत्मानं निन्दयित्वा तु लुब्धको वाक्यमब्रवीत् ॥१८६॥ **लुब्धक उवाच**–अहो मृग महासत्त्व गच्छ गच्छ स्वामाश्रमम् । आमिषेण न मे कार्यं यद्भाव्यं तद्भविष्यति ॥१८७॥ जीवानां घातने पापं बन्धने तर्जने तथा । नाहं पापं करिष्यामि कुटुम्बार्थे कदाचन ॥१८८॥ त्वं गुरुर्मम धर्माणामुपदेष्टा मृगोत्तम । गच्छ गच्छ मृगश्रेष्ठ कुटुम्बेन समन्वितः । मया त्यक्तानि शस्त्राणि सत्यधर्मः समाश्रितः ॥१८९॥ **मृग उवाच**–कर्मन्यासमहं कृत्वा त्वत्सकाशमिहागतः । हन्यतां हन्यतां शीघ्रं न ते पापं भविष्यति ॥१९०॥ मया दत्ता पुरा वाचा तया बद्धो न याम्यहम्। एतच्छ्रुत्वा तु वचनं लुब्धको वाक्यमब्रवीत् ॥१९१॥ **लुब्धक उवाच**–त्वं बन्धुस्त्वं गुरुस्त्राता त्वं मे माता पिता सुहृत् । मया त्यक्तानि शस्त्राणि त्यक्तं मायादिकं बलम् ॥१९२॥ कस्य भार्या सुताः कस्य कुटुम्बश्च महामृग । तैः स्वकर्म च भोक्तव्यं मृग गच्छ यथासुखम् ॥१९३॥ इत्युक्त्वा स तदा तूर्णं बभञ्ज सशरं धनुः । मृगं प्रदक्षिणीकृत्य नमस्कृत्य क्षमापयेत् ॥१९४॥ एतस्मिन्नन्तरे नेदुर्देवदुन्दुभयो दिवि । आकाशात् पुष्पवृष्टिस्तु पपात सुमनोहरा ॥१९५॥ तदा दूतः समायातो विमानं गृह्य

शोभनम् ॥१९६॥ **देवदूत उवाच**–अहो व्याध महासत्त्व सर्वसत्त्वक्षयङ्कर । विमानमिदमारुह्य सदेहं स्वर्गमाविश ॥१९७॥ चतुर्दश्याः प्रभावेण पातकं ते क्षयं गतम् । उपवासस्तु सञ्जातो निशि जागरणं कृतम् ॥१९८॥ यामे यामे कृता पूजा अज्ञानेन शिवस्य च । सर्वपापविनिर्मुक्तो गच्छ त्वं भद्र मन्दिरम् ॥१९९॥ विमानं च समारुह्य सत्याच्चित्रपदं व्रज । मृगराज महासत्त्व भार्यापुत्रसमन्वित ॥२००॥ भार्यात्रितयसंयुक्तो नक्षत्रपदमाप्नुहि । तव नाम्ना तु नक्षत्रं लोके ख्यातं भविष्यति ॥२०१॥ एतच्छ्रुत्वा तु वचनं लुब्धकेन समन्वितम् । विमानं तु तदारुह्य नक्षत्रपदमागतः ॥२०२॥ हरिणीद्वयमन्वेनं पृष्ठतो मृगमेव च । तारात्रितयसंयुक्तं मृगशीर्षं तदुच्यते ॥२०३॥ बालके द्वितयं चाग्रे तृतीया पृष्ठतो मृगी । पृष्ठतस्तस्य सम्प्राप्ता मृगशीर्षस्य सन्निधौ ॥२०४॥ ऋक्षराड् दृश्यतेऽद्यापि ऋक्षं व्योम्नि ह्यनुत्तमम् ॥२०५॥ उपवासं करिष्यन्ति जागरेण समन्वितम् । यथोक्तशास्त्रमार्गेण तेषां मोक्षो न संशयः ॥२०६॥ चतुर्दशीसमं नास्तिं व्रतं पापक्षयावहम् । यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥२०७॥ अश्वमेधसहस्राणि वाजपेयशतानि च । प्राप्नोति तत्फलं सर्वं नात्र कार्या विचारणा ॥२०८॥

*॥ इति श्रीलिङ्गपुराणोक्ता नरकनिवारणचतुर्दशीव्रतकथा समाप्ता ॥*

# अर्धोदयः

माघीयामावास्यायामर्द्धोदययोगः ॥ तत्र संकल्पादिकं प्रागेवोक्तम् ॥ अमावस्या तु सोमेन सप्तमी भानुना युता । चतुर्थी भूमिपुत्रेण सोमपुत्रेण वा युता । चतस्रस्तिथयस्त्वेताः सूर्य्यग्रहणसन्निभाः । स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत् ।

# तिल चतुर्थी

माघशुक्लचतुर्थी तिलचतुर्थी ॥ सा च प्रदोष व्यापिनी ग्राह्या ॥ माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः इत्यादि काशीखण्डे ॥ माघशुक्लचतुर्थ्यां तु तस्मिन् काल उपोषितः । अर्चयित्वा तु यो देवि ! जागरं तत्र कारयेत् । इति लिङ्गपुराणोक्तेः ॥

# कुन्दचतुर्थीव्रतम्

इयमेव कुन्दचतुर्थी । सा च प्रदोषव्यापिनी ग्राह्या ॥ माघशुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदा शिवम् । संपूज्य यो हि नक्ताशी स प्राप्नोति श्रियं नर इति कूर्मोक्तेः ॥ माघमासे तु संप्राप्ते चतुर्थी कुन्दसंज्ञिका । सा उपोष्या सुरश्रेष्ठ ततो राज्यं भविष्यति ॥ सर्वोपहारसम्पन्नः सर्वोपस्करमादिशेत् । कन्दं पत्रं फलं शाकं लवणं गुडशर्करा । खण्डजीरककुस्तुम्बुद्रव्याणि विविधानि च । दातव्यानि सुरश्रेष्ठ ! कन्यकानान्तु

भक्तित: ।। शूर्प्पपात्रं तथा भाण्डं मृण्मयानि विशेषत: । तामुद्दिश्य प्रदातव्यं प्रीयताम्मे सदा शिव ।। अनेन विधिना शक्र ! सौभाग्यं पुत्रसन्तति: । वर्द्धते नात्र सन्देहो नान्यथा मम भाषितम् । उपहाराणि देवीनां पूजोपकरणानि च ।। तेन देवीपूजोत्तरं कन्याभ्यो दानम् ।। उपस्कर:कन्दादिरेव ।। कुस्तुम्बुरुर्धान्याकम् ।। अत्र चोपवासे राज्यं फलम्, अग्निकर्मणि सौभाग्यादि इति **समयप्रदीप:** ।।

ततो माघशुक्लचतुर्थ्यां प्रात: कृतनित्यक्रिय: ॐ भवगन् ! सूर्य ! भगवत्यो देवता अद्योपवासव्रतमहमाचरिष्यामीति निवेद्य, कुशादिकमादाय ॐ अद्यामुकगोत्रस्या-मुकशर्मण: राज्यप्राप्तिकामो माघशुक्लचतुर्थ्यामुपवासव्रतमहङ्करिष्ये ।। एवमग्रिमव्रते ।। ॐ अद्येत्यादि माघशुक्लचतुर्थ्यां गौरीपूजनव्रतमाचरिष्यामीति निवेद्य नम: अद्येत्यादि सौभाग्य-पुत्रसन्ततिवृद्धिकामनया गौरीपूजनव्रतमहङ्करिष्ये ।। ततो वाक्यप्रतिपादित-वस्तून्युपकल्प्य गौरीमावाह्य पाद्यार्घानुलेपनम्पुष्पमालावस्त्र-धूपदीपनैवेद्या-चमनीयपुष्पाञ्जलिभि: संपूज्य एतानि कन्दपत्रफलशाकलवणगुडशर्कराखण्डजीरक-धान्याकशूर्पपात्रमृण्मयभाण्डानि ॐ गौर्य्यै नम इति निवदयेत् ।। ॐ देव्य: प्रीयन्तां मे सदेति कन्यकाभ्य: प्रतिपाद्य देवीं विसर्जयेत् ।। इति कुन्द-चतुर्थीविधि: ।।

## अथ श्रीपञ्चमी

माघशुक्लपञ्चमी श्रीपञ्चमी, तदुक्तं वाराहे, माघशुक्लचतुर्थ्यान्तु वरमाराध्य च प्रियम् । पञ्चम्यां कुसुमै: पूजां श्रिय: कुर्य्यात् समृद्धये ।। इति ।। माधवमते पूर्वयुता ग्राह्या; माघुशुक्लपञ्चमी पूर्वविद्धा प्रशस्यते इति देवोदासवाक्यात् ।। मैथिलगौड़ैश्चेयमादृता ।। परविद्धेति दाक्षिणात्या इति **म० म० महेश ठक्कुरा:** । अत्रैव हलप्रवाहो हलपूजाचेति शिष्टाचार: ।। हलप्रवाहविचारस्तु ज्योतिषात् ।। इयमेव वसन्तपञ्चमी ।। तथाहि **प्राणतोषिण्याम्**, पञ्चम्याञ्च जगद्धात्रीं प्रातरेव नदी-जलै: । स्नापयित्वा सुलक्ष्मीं तां कुम्भैर्मारकतैरपि ।। वसन्तञ्च समभ्यर्च्च्य कन्दर्पं सरतिं प्रिये । वसन्तरागश्रवणात् श्रियमाप्नोत्यभीप्सिताम् ।। श्रीपञ्चमीं तु केचित्तां मुनय: प्रवदन्ति वै । वर्तयेदेकभुक्तेन श्रियो न विच्युतिर्भवेत् । अस्यामेव सरस्वती पूजा ।।

# सरस्वती पूजा-विधि:

पूर्वदिने निरामिषमेकवारं भुक्त्वा प्रतिमादिपूजासामग्रीमासादयेत् । तद्दिने कृतनित्यक्रिय: कुशत्र्यतिलजलान्यादाय ॐ तत्सत् ॐ विष्णुर्विष्णुरित्युच्चार्य्य ॐ अद्य माघे मासि मकरार्के शुक्लपक्षे पञ्चम्यां तिथावमुकगोत्रस्यामुकशर्मण:

सदारापत्यस्य अतुलविभूतिपुत्रपौत्रादिसद्विद्यालाभपूर्वकसरस्वतीप्रीतिकामो लक्ष्म्याद्यङ्गदेवतापूजनपूर्वकसरस्वती-पूजनमहङ्करिष्ये ।। (अन्यार्थे करिष्यामीति ऊह्यः) इति संकल्प्य प्रतिमायां, घटस्थजले, शालग्रामे, चित्रपटे, दर्पणे वा सरस्वतीं स्नापयित्वा मूलेन (अनुपदवक्ष्यमाणेन "सां" इत्यनेनेत्यर्थः) चक्षुर्दानं विधाय प्राणायामत्रयं कृत्वा तस्याः हृदये हस्तं दत्त्वा वामहस्तेन करकच्छपिकां बद्ध्वा ध्यायेत् ।। ॐ तरुण-शकलमिन्दोर्बिभ्रती शुभ्रकान्तिः । कुचभर-नमिताङ्गी सन्निषण्णा सिताब्जे। निजकर-कमलोद्यल्लेखनीपुस्तकश्रीः । सकलविभवसिद्ध्यै पातु वाग्देवता नः ।। इति ध्यात्वा प्राणप्रतिष्ठां कुर्य्यात् । ॐ आँ ह्रीं क्रीं यं रं लं वं शं षं सं हौं हं सः श्रीसरस्वतीदेव्या इह प्राणाः । आमित्यादि श्रीसरस्वतीदेव्या इह स्थितिः । आमित्यादि इह श्री सरस्वतीदेव्याः सर्वेन्द्रियाणि । आमित्यादि, श्रीसरस्वतीदेव्या वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।। ॐ मनोजूति र्जूषतामाज्यस्य बृहस्पति र्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु विश्वेदेवास इह मादयन्तामोम् प्रतिष्ठ ।। ॐ सरस्वतीदेवि ! इहागच्छ इह सुप्रतिष्ठिता भव ।। ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वसंख्यायै स्वाहा ।। देव्या हृदये 'सां' इति मूलमन्त्रं वारत्रयं जप्त्वा, देवीशरीरे अङ्गन्यासकरन्यासौ विधाय ऐँ इति बीजेन सन्निरोध्य सां इति मूलमन्त्रेण पुष्पाञ्जलिं दद्यात् । तत आसनोपविष्टः घटं संस्थाप्य (घटस्थापनप्रकारस्तु वक्ष्यते) वामपार्ष्णिघात्रयं दत्वा तालत्रयेण भौमान्, दिव्यदृष्ट्यवलोकनेन अन्तरिक्षगान् दिव्यान् विघ्नानुत्सार्य्य, ॐ फडितिमन्त्रेण तालत्रयं दत्वा, छोटिकाभि (अङ्गुष्ठमध्यमाङ्गुल्योः परस्पराभिघातजशब्दश्छोटिका) दशदिग्बन्धनं कुर्य्यात् ।।

गन्धपुष्पाभ्यां करौ संशोध्य आसनं धृत्वा पठेत् , पृथ्वीति मन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्म्मो देवता आसनोपवेशने विनियोगः ।। ॐ पृथ्वि ! त्वया धृता लोकाः देवि ! त्वं विष्णुना धृता । त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनम् ।। ॐ आधारशक्तिकमलासनाय नमः । इत्यासनं संपूज्य ॐ अस्त्राय फट् इत्यनेन प्राङ्मुख उदङ्मुखो वा तत्रोपविश्य, वामे, ॐ गुरुभ्यों नमः । दक्षिणे, ॐ गणेशाय नमः । मध्ये, ॐ सरस्वत्यै नमः । इति । तत ऋष्यादिन्यासं कुर्य्यात् यथा, शिरसि ॐ ब्रह्मणे ऋषये नमः । मुखे ॐ गायत्रीच्छन्दसे नमः । हृदि ॐ ऐं सरस्वतीदेवतायै नमः । तत ऐं बीजेन प्राणायामं कृत्वा कराङ्गन्यासौ कुर्य्यादिति न पौनरुक्त्यम् । यथा आं हृदयाय नमः ।। ईं शिरसे स्वाहा । ऊँ शिखायै वषट् । ऐं कवचाय हुम् । ॐ नेत्रत्रयाय वौषट् । अः अस्त्राय फट् ।। एवं करन्यासं कृत्वा प्रणवेन यथाशक्ति प्राणायामं कुर्य्यात् ।।

ततः समान्यार्घं स्थापयेत् । स्ववामे त्रिकोणमण्डलं कृत्वा, गन्धपुष्पाक्षतैः ओम् आधारशक्तये नमः । ओम् अनन्ताय नमः । ओम् कूर्म्माय नमः, ओम् पृथिव्यै नमः इति संपूज्य, तत्र त्रिपादिकशंखस्थापनयन्त्रमारोप्य, फड़ित्यनेन शंखादिपात्रं प्रक्षाल्य, संस्थाप्य त्रिभागं जलेनापूर्य्य, ओम्गङ्गे च यमुनेचैवेत्यादिना तीर्थमावाह्य प्रणवेन गन्धपुष्पादिकं तत्र निःक्षिप्य धेनुमुद्रां प्रदर्श्य प्रणवम् अष्टधा जप्त्वा, तेनोदकेनात्मानं पूजोपकरणं चाभ्युक्ष्य, आवाहनपूर्वकम् सूर्य्यं विष्णुं शिवं दुर्गाञ्च संपूज्य, अग्निं केशवं कौशिकीम् आदित्यादिनवग्रहान्, इन्द्रादिशदिक्पालान् च यथाशक्ति पूजयेत् ॥

ततो लक्ष्मीं ध्यायेत् । यथा, ओम् पाशाक्षमालिकाम्भोज शृणिभिर्य्याम्यसौम्ययोः। पद्मसनास्थां ध्यायेच्च श्रियं त्रैलोक्यमातरम् ॥ गौरवर्णां सुरूपाञ्च सर्वालङ्कारभूषिताम्। रौक्मपद्मव्यग्रकरां वरदां दक्षिणेन तु ॥ इति ध्यात्वा पाद्यादियथालभ्योपचारैः ओम् लक्ष्मीदेव्यै नमः इत्यनेन संपूज्य, उक्तमन्त्रं दशधा जप्त्वा ओम् नमस्ते सर्वदेवानां वरदासि हरिप्रिये । या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्च्चनात् ॥ इत्यनेन पुष्पाञ्जलिं दत्वा स्तोत्रादिकं पठित्वा प्रणमेत् ॥

पुनः पूर्वोक्तं तरुणेत्यादिध्यानेन ध्यात्वा स्वशिरसि पुष्पं दत्वा मानसोपचारैः संपूज्य ओम् ऐं भगवति ! सरस्वति ! स्वकीयगणसहिते ! इहागच्छ इहागच्छ, इह तिष्ठ इह तिष्ठ, इह सन्निधेहि इह सन्निरुद्धा भव, अत्राधिष्ठानं कुरु, मम पूजां गृहाण स्थां स्थीं स्थिरा भव ॥ इत्यनेनावाह्य ॐ ऐं सरस्वत्यै नमः । इदं पाद्यम् । एषोर्घः । इदमाचमनीयम् । इदं स्नानीयम् । इदं पुनराचमनीयम् । इदं शुक्लवस्त्रं वृहस्पतिदैवतम्। इदमनुलेपनम् । इदं सिन्दूरम् । इदमक्षतम् । एतानि पुष्पाणि । इदं माल्यम्। इदं भूषणम् । एष धूपः। एष दीपः । एतानि नानाविधनैवेद्यानि । इदमाचमनीयम्। ओं पुष्पं मनोहरं दिव्य सुगन्धं देवनिर्मितम् । हृद्यमद्भुतमाघ्रेयं देवि ! तत् प्रतिगृह्यताम् ॥ एष पुष्पाञ्जलिः ॐ ऐं सरस्वत्यै नम इत्यनेन षोडशोपचारैः पूजयेत् ॥

ततः पुस्तकोपरि, ॐ पुस्तकाय नमः इतिपञ्चोपचारैः पूजयेत् ॥ ॐ मस्याधाराय नमः । ॐ लेखन्यै नमः । इति मस्याधारं लेखनीं च संपूज्य, ॐ सर्वशस्त्रेभ्यो नमः। ॐ अस्त्रेभ्यो नमः। **अरार्तिकं** कृत्वा पुष्पाञ्जलिं दद्याद्यथा । ॐ यथा न देवो भगवान् ब्रह्मा लोकपितामहः । त्वां परित्यज्यं सन्तिष्ठेत्तथा भव वरप्रदा ॥ वेदाः पुराणशास्त्राणि नृत्यगीतादिकञ्च यत् । न विहीनं त्वया देवि ! तथा मे सन्तु सिद्धयः ॥ विशदकुसुमतुष्टा पुण्डरीकोपविष्टा, धवलवसनवेशा मालतीबद्धकेशा । शशधरकरवर्णा सुभ्रताटङ्ककर्णा, जयति जितसमस्ता, भारती वेणुहस्ता ॥ इतिदत्वा, ॐ सरस्वत्यै नमो नित्यं भद्रकाल्यै नमोनमः ।

वेदवेदान्तवेदाङ्ग-विद्यास्थानेभ्य एव च (स्वाहा) ।। इत्यनेन प्रणम्य, प्रार्थयेत् ।। ॐ लक्ष्मीर्म्मेधा धरापुष्टिर्गौरी तुष्टिः प्रभा धृतिः । एताभिः पाहि तनुभिरष्टाभिर्म्मां सरस्वति ! ।। रूपं देहि यशो देहि भाग्यं भगवति ! देहिमे । धर्मान् देहि धनं देहि सर्वाविद्याः प्रदेहि मे ।। सा मे वसतु जिह्वायां वीणां पुस्तकधारिणी । मुरारिवल्लभा देवि ! सर्वशुक्ला सरस्वती ।। भद्रकाल्यै नमोनित्यं सरस्वत्यै नमो नमः । वेदवेदान्त-वेदाङ्ग-विद्यां देहि नमोस्तु ते ।। इतिसंप्रार्थ्य प्रणमेत् ।। नृत्यगीत-वाद्यादिभिरहर्न्निशं नीत्वा प्रातरेव विसर्जयेत् ।। ततः कुशादिकमादाय ॐ कृतैतत्साङ्ग-सपरिवार सरस्वती-पूजनकर्म-प्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्य-मग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे इति ब्राह्मणाय प्रतिपादयेदिति ।।

*।। इतिसरस्वतीपूजाविधिः ।।*

# अथ सिद्धसरस्वतीस्तोत्रम्

शुक्लां ब्रह्माविचारसारपमामाद्यां जगद्व्यापिनीं, वीणापुस्तकधारिणीमभयदां जाडयान्धकारापहाम् । हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां, वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ।।१।। या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता, या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युत-शङ्करप्रभृतिभिर्देवैः सदा वन्दिता, सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ।।२।। दोर्भिर्युक्तैश्चतुर्भिः स्फटिकमणिमयीमक्षमालान्दधाना, हस्तेनैकन पद्मं सितमिति च शुकं पुस्तकं चापरेण । पाशं वीणां मुकुन्दस्फटिकमणिनिभा भासमाना समाना, सा मे वादे च तथ्यं निवसतु वदने सर्वदा सुप्रसन्ना ।।३।। ह्रीं ह्रीं हृद्यैकबीजे शशिरुचिकमले कल्पविस्पष्टशोभे, भव्ये भव्यानुकूले शुभमतिवरदे विश्ववन्द्याङ्घ्रि-पद्मे। पद्मे पद्मोपविष्टे, प्रणतजनमनोमोदसम्पादयित्री, प्रोत्फुल्लज्ञानकूले हरिहरनमिते देवि संसारसारे ।।४।। ऐं ऐं ऐं जाप्यतुष्टे हिमरुचिमुकुले वल्लकीव्यग्रहस्ते, मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् । विद्ये वेदान्तवेद्ये श्रुतिपरिपठिते मोक्षदे मुक्तिमार्गे, मार्गातीतस्वरूपे भव मम वरदे शारदे शुभ्रहारे ।।५।। धीं धीं धीं धारणाख्ये धृतिमतिनुतिभिर्नामभिः कीर्तनीये, नित्ये, नित्ये निमित्ते मुनिजननमिते नूतने वै पुराणे । पुण्ये पुण्यप्रभावे हरिहरनमिते पूर्णतत्त्वस्वरूपे, मातर्मात्रार्थतत्त्वे मतिमति-मतिदे माधवप्रीतिनादे ।।६।। क्लीं क्लीं क्लीं सुस्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते, सन्तुष्टाकारचित्ते स्मितमुखि सुभगे जृम्भणि स्तम्भनीये । मोहे मुग्धप्रवोधे मम कुरु कुमतिध्वान्तविध्वंसमीड्ये, गीर्गौर्वाग्भारती त्वं कविधृतरसने सिद्धिदे सिद्धिसाध्ये ।।७।। सौं सौं सौं शक्तिबीजे कमलभवमुखाम्भोजमूर्तिस्वरूपे, रूपे रूपप्रकाशे सकलगुणमये निर्गुणे निर्विकल्पे, न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे

जाप्यविज्ञानतुष्टे, विश्वे विश्वान्तराले सकलगुणमये निष्कले नित्यशुद्धे ॥८॥ श्रीं श्रीं श्रीं स्तौमि चाहं मम खलु रसना मा कदाचित्यज त्वं, मा मे बुद्धिर्विरुद्धा भवतु मम मनो पातु मां देवि पापात्। मा मे दुःखं कदाचित् क्वचिदपि विषये, पुस्तके नाकुलत्वं, शास्त्रे वादे कवित्वे प्रसरतु मम धीर्माऽस्तु कुण्ठा कदाऽपि ॥९॥ इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो, वाणी वाचस्पतेरप्य-विदितविभवो वाक्यतत्त्वार्थवेत्ता । स स्यादिष्टार्थलाभे सुतमिव सततं पातु तं सा च देवी, सौभाग्यं तस्य लोके प्रसरतु कविता विघ्नमस्तं प्रयातु ॥१०॥ निर्विघ्नं तस्य विद्या प्रभवति सततं चाशु ग्रन्थप्रबोधः, कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षाद् । दीर्घायुर्लोक- पूज्यः सकलगुणनिधिः सन्ततं राजमान्यो, वाग्देव्याः सम्प्रसादात् त्रिजगति विजयो जायते तस्य साक्षात् ॥११॥ ब्रह्मचारी व्रती मौनी त्रयोदश्यामहर्निशम् । सारस्वतो जनः पाठाद् भवेदिष्टार्थलाभवान् ॥१२॥ पक्षद्वये त्रयोदश्यामेकविंशतिसंख्यया । अविच्छिन्नं पठेद्यस्तु सुभगो लोकविश्रुतः । वाञ्छितं फलमाप्नोति षण्मासैर्नात्रसंशयः ॥१३॥

*॥ इति श्री सनत्कुकमार संहितोक्तं सिद्धसरस्वती स्त्रोत्रं समाप्तः ॥*

# अथ देव्यपराधक्षमापनस्तोत्रम्

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो, न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथा । न जाने मुद्रास्ते तदपि च न जाने विलपनं, परं जाने मातस्त्व-दनुशरणं क्लेशहरणम् ॥१॥ विधेरज्ञानेन द्रविणविरहेणालसतया, विधेया-शक्यत्वात्तव चरणयोर्या च्युतिरभूत् । तदेतत्क्षन्तव्यं जननि सकलोद्धारिणि शिवे, कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२॥ पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः, परन्तेषां मध्ये विरलतरलोऽहं तव सुतः । मदीयोऽयं त्यागः समुचितमिदन्नो तव शिवे, कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥३॥ जगन्मातर्मातस्तव चरणसेवा न रचिता, न वा दत्तं देवि द्रविणमपि भूयस्तव मया ॥ तथाऽपि त्वं स्नेहं मयि निरुपमं यत् प्रकुरुषे, कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥४॥ परित्यक्त्वा देवान् विविधविधिसेवाऽऽकुलतया, मया पञ्चाशीतेरधिकमपनीते तु वयसि ॥ इदानीञ्चेन्मातस्तव यदि कृपा नापि भविता, निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥५॥ श्वपाको जल्पाको भवति मधुपाकोपमगिरा, निरातङ्को रङ्को विहरति चिरं कोटिकनकैः । तवापर्णे कर्णे विशति मनुवर्णे फलमिदं, जनः को जानीते जननि जपनीयं जपविधौ ॥६॥ चिताभस्मालेपो गरलमशनं दिक्पटधरो, जटाधारी कण्ठे भुजगपतिहारी पशुपतिः । कपाली भूतेशो भजति जगदीशैकपदवीं, भवानि त्वत्पाणिग्रहणपरिपाटी-

फलमिदम् ।।७।। न मोक्षस्याकाङ्क्षा भव विभववाञ्छाऽपि च न मे, न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः । अतस्त्वां संयाचे जननि जननं यातु मम वै, मृडानीरुद्राणी-शिव-शिव भवानीति जपतः ।।८।। नाराधिताऽसि विधिना विविधोपचारैः, किं रूक्षचिन्तनपरैर्न कृतं वचोभिः । श्यामे त्वमेव यदि किञ्चन मय्यनाथे, धत्से कृपामुचितमम्ब परं तवैव ।।९।। आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवेशि । नैतच्छठत्व मम भावयेथाः क्षुधातृषार्ता जननीं स्मरन्ति ।।१०।। जगदम्ब विचित्रमत्र किं परिपूर्णा करुणाऽस्ति चेन्मयि । अपराध परम्परावृतं न हि माता समुपेक्षते सुतम् ।।११।। मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ।। एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु ।।१२।।

*।। इति श्रीमच्छङ्कराचार्यविरचितं देव्यपराध्यक्षमापनस्तोत्रं समाप्तम् ।।*

# अथ माघशुक्लसप्तमी रथसप्तमी

सा चारुणोदयव्यापिनी ग्राह्या ।। सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।। अरुणोदयवेलायां तस्यां स्नानम्महाफलम् ।। इति विष्णूक्तेः। सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी । तस्यां स्नानञ्च दानञ्च महापातकनाशनम् । तथा, अरुणोदयवेलायां शुक्ला माघस्य सप्तमी । गङ्गायां यदि लभ्येत शतसूर्य्यग्रहैः समा ।। प्रयागे यदि लभ्येत कोटिसूर्य्यग्रहैः समा ।। जलाशये गत्वा कुशादिकमादाय ओम् अद्य माघे मासि शुक्ले पक्षे सप्तम्यां तिथावमुकगोत्रस्यामुकशर्मणः आयुरारोग्य सम्पत्पूर्वकसूर्य्य-ग्रहणकालिकगङ्गास्नानजन्यफलसमफलकामोऽस्मिन् जलाशये स्नानमहङ्करिष्ये ।। गङ्गातटे तु, ॐ अद्येत्यादिसूर्य्यग्रहणकालिकगंगास्नानजन्यफल-शतगुणाधिकफलकामोऽरुणोदये गङ्गायां स्नानमहं करिष्ये ।। (प्रयोगे तु ॐ अद्येत्यादि कोटिगुणाधिकफलकाम इत्यूहः कर्त्तव्यः) इति सङ्कल्प्य, इक्षुदण्डेन जलं चालयित्वा सप्तार्कपत्राणि, सप्त बदरीपत्राणि च शिरसि निधाय स्नानेतिकर्त्तव्यतां विधाय ॐ यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु । तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी ।। एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् । मनोवाक्कायजं यच्च ज्ञाताज्ञातञ्च यत्पुनः ।। इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके । सप्तव्याधि समायुक्तं हर माकरि ! सप्तमि ! ।। इति मन्त्रानुच्चार्य्य स्नायात् ।। ततो यथाकालं सप्तार्कवदरीपत्रशालितिलदूर्वाक्षतचन्दनयुक्त- ताम्रपात्रेणार्घमादाय ॐ अद्येत्यादि, आयुरारोग्यसम्पत्कामःश्रीसूर्यायार्घमहं ददे इति संकल्प्य, ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे । जगत्सवित्रे शुचये सवित्रे कर्मदायिने ।। ॐ सप्तसप्ति-वहप्रीति-सप्तलोक-प्रदीपन ! । सप्तमीसहितो देव ! गृहाणार्घं दिवाकर ! ।। इति

सूर्य्यायार्घं दत्वा, ॐ जननी सर्वभूतानां सप्तमी सप्तसप्तिके !। सप्तव्याहृतिके ! देवि ! नमस्ते रविमण्डले ! ।। इत्यनेन प्रार्थयेत् ।। शूद्रकृत[illegible]ाने तु तूष्णीं-विधानात् । स्नानमन्त्रं विनैव अर्घ्यप्रणाममन्त्राः पाठ्याः पौराणिकत्वात् ।।

## अत्रैव विधानसप्तमीव्रतम

कुशादिकमादाय ॐ अद्येत्यादिमाघमासीयशुक्लपक्षीयसप्तमीतिथिं प्रारभ्य प्रतिमासीयशुक्लसप्तम्यां पौषसप्तमीं यावद् आरोग्यसम्पत्कामोऽभीष्टतत्तत्फलकामो वा अर्काग्रादीतरभोजनविच्छित्तिविधानेन सप्तमीव्रतमहङ्करिष्ये इति संकल्प्य, सय्यँमपारणसहितं तत्तन्मासि तत्तन्नियमेन कुर्य्यात् ।। तत्र माघे अर्काग्रमात्रं भुञ्जीत ।। फाल्गुने अन्तरिक्षगृहीतयवमात्रप्रमाणं कपिला विटं, तदभावेऽन्यगोमयमपीति ।। चैत्रे मरीचमेकम् ।। वैशाखे किञ्चिज्जलम् ।। ज्यैष्ठे अपक्वकदलीफलमध्यकणामात्रम् ।। आषाढ़े स्वच्छायाद्विगुणसमये यवप्र[illegible]ाणं कुशमूलम् ।। श्रावणे सायंकालेऽल्पं हविष्योदनम् ।। भाद्रे शुद्धोपवासः ।। आश्विने पञ्चमार्द्धयामे मयूराण्डप्रमाणं हविष्यान्नम् ।। कार्तिके अर्द्धप्रसृतिमात्रं कपिलाक्षीरं, तदभावे क्षीरान्तरम् ।। मार्गशीर्षे प्राङ्मुखो वाय्वशनम् ।। पौषे स्वल्पं घृतम् ।। तदनन्तरं, ब्राह्मणान् भोजयेद् भक्त्या गुडक्षीरनिरामिषैः । त्रिप्राय दक्षिणा देया विभवस्यानुरूपतः ।। अष्टम्यां पारणं कुर्य्यात् कट्वम्लरहितेन च । मुद्गमाषतिलादीनि घृतं चैव विवर्जयेत् ।। एकसिद्ध-भक्ष्यमुक्तमर्कतन्त्रानुसारतः । चान्द्रमासविशेषोल्लेखवद् अनन्तादिव्रतवद् मल-मासेतरे तद्व्रतं कर्त्तव्यम् ।।

## अचला सप्तमी (माघशुक्ल सप्तमी)

**अरुणोदयकालस्तु**–'चतुस्रो घटिकाः प्रातररुणोदय उच्यते'। पञ्च पञ्च उषः-कालः सप्तपञ्चारुणोदयः। अष्टपञ्च भवेत् प्रातः शेषः सूर्योदयः स्मृतः ।। इति ।। उभयदिनेऽरुणोदयलाभे पूर्वदिन एव स्नानं ततो दिने सगुड़पायसैः कुलदेव्याः पूजनम्। सप्तमीक्षयावसरे दैवादरुणोदयकाले यदि सप्तमी न लभ्यते तदा सप्तमीतः पूर्वं षष्ठ्यामेव स्नानम्। तथाहि–अचला सप्तमी दूर्वा शिवरात्रिर्महाभरः। द्वादशी वत्सपूजायां सुखदा प्राग्युता सदा ।। इति विष्णूक्तेः । अत्र लवणवर्जने महत् फलम्।

## अथ माघशुक्लाष्टमी भीष्माष्टमी

अथात्र भीष्मतर्प्पणम् ।। यथोक्तं पाद्मे, माघे मासि सिताष्टम्यां सलिले भीष्मतर्प्पणम् । श्राद्धञ्च ये नराः कुर्य्युस्ते स्युः सन्ततिभागिनः ।। भारतेऽपि, शुक्लाष्टम्यान्तु माघस्य दद्याद् भीष्माय यो जलम् । सर्व्वँत्सरकृतं पापं तत्क्षणादेव

नश्यति ॥ इति । जीवत्पितापि कुर्वीत तर्प्पणं यमभीष्मयोरिति पाद्मोक्तेः। अकरणे निन्दा । स्मृतिरपि, ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् । सव्वँत्सरकृतं तेषां पुण्यं नश्यति सत्तम ! ॥ इति मदनरत्ने । अष्टम्यां देवादितर्पणं निर्वर्त्य दैव-विधिना कुशत्रंययवजलैः, ॐ वैयाघ्रपदगोत्राय सांकृतिप्रवराय च । अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥ वसूनामवताराय शान्तनोरात्मजाय च । अर्घं ददामि भीष्माय आबालब्रह्मचारिणे ॥ इति मन्त्राभ्यां भीष्मन्तर्प्पयेत् । तर्प्पणमेतन्नित्यमिति दैवविधिना सर्ववर्णैश्च कर्त्तव्यमिति **समयप्रदीपः** ॥

माघशुक्लैकादशी भीष्मगास्यात्तत्रैव भीमोत्पत्तिः ॥ सा च परयुता ग्राह्या ॥ माघशुक्लद्वादशी । इयं पूर्वयुता ग्राह्या, युग्मवाक्यात् ॥ पाद्मे ॥ त्वया कृतमिदं वीर ! तव नाम्ना भविष्यति । सा भीम द्वादशीह्येषा सर्वपापहरा शुभा ॥ इति **म० महेशठक्कुराः** ॥ भैम्येकादश्यामुपोष्य द्वादश्यां तिलोद्वर्तनमवश्यं कर्त्तव्यम् ॥ स्नानतर्पणमहादानभोजनादि यथालाभं कुर्य्यात् ॥

## अथ माघीपूर्णिमा

इयं परयुता ग्राह्या । ज्योतिषे तु, मेषस्पृष्टे यदा सौरिः सिंहे च गुरुचन्द्रमाः । भास्करः श्रवणर्क्षे च महामाघीति सा स्मृता ॥ तथा, आयाति चारचक्रैश्च पितृऋक्षे गुरुर्य्यदा । माघी चैव मघायुक्ता महामाघीति सा स्मृता ॥ वैशाखी कार्तिकी माघी तिथयोऽतीव पूजिताः ॥ इतिभविष्योक्तेः । अत्रानन्तफलकामनया स्नानदानादिकञ्च कर्त्तव्यमिति ॥

*॥ इति माघकृत्यम् ॥*

# अथ फाल्गुनकृत्यम्

## शिवरात्रिव्रतनिर्णयः

अथ फाल्गुनकृष्णचतुर्दश्यां शिवरात्रिव्रतं कुर्य्यात् ॥ तथाहि, अतीतायान्तु माघ्यां वै या स्यात्कृष्णचतुर्दशी । शिवन्तु पूजयेत्तत्र रात्रौ कुर्य्याच्च जागरम् ॥ भूतेश्वरादिह परोऽस्ति न पूजनीयो, नैवाश्वमेधसदृशः क्रतुरस्ति कश्चित् । गङ्गासमं त्रिभुवने नहि तीर्थमस्ति, नान्यद् व्रतं च शिवरात्रिसमं तथास्ति ॥ सा च प्रदोषव्यापिनी निशीथव्यपिनी च । यत्र विकल्पः तत्र नानास्मृतिः। तत्रेशानसंहितायाम् , माघे कृष्ण चतुर्दश्यामादिदेवो महानिशि । शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः ॥ तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ॥ अर्द्धरात्रादधश्चोर्द्धवयुक्ता यत्र चतुर्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्याद् व्रतं नरः ॥ तत्तिथावेव कुर्वीत शिवरात्रिचतुर्दशी । नार्द्धरात्रादयधश्चोद्धर्वंयुक्ता यत्र चतुर्दशी ॥ नैव तत्र व्रतं कुर्य्यादायुरैश्वर्य्यहानितः ॥

महानिशा तु द्वितीययामान्त्यघटिकैका तृतीययामादिघटिकैका चेति मिलित्वा घटीद्वयमिति महासूक्ष्मकालः प्रतिभाति एवं सति पूर्वेद्युरुभयव्याप्तौ पूर्वैव ग्राह्या । त्रयोदशी यदा देवि ! दिनभुक्ति-प्रमाणतः । जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ।। इतिस्कान्दे । तत्र दिनभुक्तिरस्तमनकाल इतिबोध्यम् ।। एवञ्च यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्द्दशी तद्दिने व्रतम्, उभयव्याप्त्यनुरोधात् । यदा पूर्वेद्यु-र्निशीथमात्रव्यापिनी, परेद्युः प्रदोषमात्रव्यापिनी तदा पूर्वत्र व्रतं प्रधानकालानुरोधात्, पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्द्दशीत्यादिवाक्याद् इत्यादि-तिथितत्वचिन्तामण्या-दिसर्वनिबन्धेषु सिद्धान्तितम् । तिथ्यन्ते पारणं जयन्तीमात्रपरम् । अत्र चतुर्द्दश्यामपि पारणं प्रशस्त्यात् ।। दिनमानप्रमाणेन या तु रात्रौ चतुर्दशी । शिवरात्रिस्तु सा ज्ञेया चतुर्द्दश्यान्तु पारणमिति गौतमीयात् ।। यदा तु पूर्वेद्युर्न्न निशीथव्याप्तिः परेद्युः प्रदोषमात्रव्याप्तिः, तदा परैव ग्राह्या, प्रदोषव्यापिनीत्यादिस्मृतेस्त्रिसन्ध्यव्यापित्वाच्च ।। व्रतमिदं नित्यं काम्यञ्च । यथा, परात्परतरं नास्ति शिवरात्रिः परात्परम् । न पूजयति भक्त्येशं रुद्रं त्रिभुनेश्वरम् ।। जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः ।। इत्यकरणे प्रत्यवायस्मृतेः ।। वर्षे वर्षे महादेवि ! नरो नारी पतिव्रता । शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेत् ।। इतिवीप्सा-श्रवणात्। अर्णवो यदि वा शुष्येच्छाद्यते हिमवानपि । चलेन्त्येते कदाचिद्वै निश्चिलञ्च शिवव्रतमिति वचनाच्च नित्यत्वमिति ।। शिवरात्रिचतुर्दश्यां संपूर्णोपवासाशक्तौ नक्तव्रतं कुर्य्यात् ।। तत्र नक्तं यथा, तच्च दिवानशनपूर्वं रात्रिभोजनम् । तत्र, प्रदोषव्यापिनी ग्राह्या तिथिर्न्नक्तव्रते सती-तिव्यासोक्तेः ।। प्रदोषस्तु, त्रिमुहुर्त्त प्रदोषः स्याद्भानावस्तं गते सति । नक्तं तत्र प्रकर्त्तव्यमितिशास्त्रविनिश्चय इति व्यासः ।। नक्तव्रते तु तद्व्यापिन्येव ग्राह्या। कर्मणो यस्य यः काल इत्यादिस्मृतेः। उभयत्र नक्तव्याप्तौ पूर्वेद्युरेव कपाला-धिकारणन्यायादिति**समयप्रदीपः** ।।

## अथ शिवरात्रिव्रतविधिः

तथाहि फाल्गुन कृष्णचतुर्दश्याः पूर्वदिने निरामिषमेकवारं भुक्त्वा सय्यँमी भवेत् ।। तद्दिने दुर्लभं मानुषं जन्म लब्ध्वा तत्सार्थक्याय शिवरात्रिव्रत-मद्याहङ्करिष्यामीति मनसि निश्चित्य स्वबन्धुभृत्यादीन् प्रतिनिवेद्य नद्यादौ गत्वा स्नानं कृत्वा तात्कालिकनित्यक्रियो भूत्वा व्रती अनन्तफलकामश्चेच्छिवालये व्रतं कुर्य्यात् । दूरादिप्रतिबन्धकवशात्तत्र गमनाशक्तौ जलाशये स्थित्वा सूर्य्यायार्घं दत्वा व्रतनिवेदनं कुर्य्यात् । तद्यथा ताम्रपात्रेऽर्घमादाय ॐ एहि सूर्य्य ! सहस्रांशो ! तेजोराशे ! जगत्पते !! अनुकम्पय माम्भक्त्या गृहाणार्घं दिवाकर ! । इतिमन्त्रेणार्घं दत्वा पुनरर्घं गृहीत्वा

ॐ भगवन् ! सूर्य्य ! भगवत्यो देवता अद्यादिचतुर्दशवर्षाणि यावत्प्रतिफाल्गुनकृष्णचतुर्दश्यां तिथौ सकलपापक्षयपूर्वकसार्वदिकशिवभक्तरूपबुद्धिबिवेकानाहताज्ञात्व-लक्ष्मीगोधनपुत्रायुर्विद्यायशोधनप्राप्तिपूर्वकान्तकालिक-शिवानुचरत्वदेवसाहित्य-सुरालय भ्रमणपूर्वक-शिवसायुज्यकामः शिवरात्रिव्रतमहं करिष्ये ।। इति संकल्प्य यथाशक्ति शिवं संपूज्य प्रणम्य प्रार्थयेदेभिर्म्मंत्रैः ॐ अद्य व्रतं मयादेव ! कर्त्तव्यं च तवाज्ञया । निराहारतया देव ! निर्जलं विधिवत्प्रभो ! ।। कर्तुमिच्छा भवेदद्य धैर्य्यं रक्ष मम प्रभो ! । देवदेव ! महादेव ! नीलकण्ठ सदाशिव ! कर्तुमिच्छा च संजाता शिवरात्रिव्रतस्य च ।। तव प्रभावाद्देवेश ! निर्विघ्नेन ! भवत्विति ।। कामाद्याश्शत्रवो मह्यं पीडान्ददतु मा पुनः । दुरालापं चटुस्पर्श वासनां विविधां पुनः । दिवास्वापं ! हि देवेश ! जलं नैव व्रतावधि ।। करिष्यामि च देवेश ! प्रतापात्तव सुव्रत ! । शिवरात्रिव्रतं ह्येतत् करिष्येऽहम्महाफलम् ।। निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते! इति संप्रार्थ्य नियमेनास्थाय पूजासामग्रीं संपादयेत् ।। प्रथमं शुद्धमृदा पञ्चवक्त्रं त्रिनेत्रं चतुर्बाहुं नागयज्ञोपवीतिनं धृतपद्मासनं शिवस्वरूपं निर्म्माय शुद्धं परिष्कृतं पूजास्थानं कल्पयेत् ।। स्थापितशिवलिङ्गसमीपे स्वाश्रमे सुपरिष्कृतगृहे वा स्थापयेत् । सकलं पूजोपकरणद्रव्यमानीय स्थापनीयदेवस्य पश्चिमभागे सुपवित्रस्थले तद्द्रव्यं निधापयेत् । पञ्चगव्यं, पञ्चामृतं, यवगोधूमधान्यानामन्यतमचूर्णं, सर्वौषधीः, धत्तूरार्कादिप्रशस्त-पुष्पाणि, अच्छिद्र त्रिपत्रबिल्वपत्राणि, बिल्वफलम्, पुष्पमाल्यम्, नानाविधनैवेद्यम्, पक्वान्नं, पायसं, पक्वकदलीफलानि, शुक्लवस्त्रचतुष्टयम्, कर्प्पूरादिवासितताम्बूलानि, च संपादयेत् ।। सायंकाले स्नात्वा यथायोग्यं सायंकृत्यं विधाय शुक्लवस्त्रं परिधाय शुचिर्भूत्वा त्रिराचम्य पूजास्थानमागत्य उन्नतासनं परिकल्प्य तदुपरि शिवस्य प्रतिमां स्थापयित्वा पुष्पहस्तेन ॐ शिवोसीति वाक्येन नामकरणं कृत्वा (स्त्रीचेत्, ब्राह्मणद्वारा) स्वशाखोक्तमन्त्रेण शिव ! इह सुप्रतिष्ठितो भव इतिवाक्यान्तेन प्राणप्रतिष्ठां कृत्वा वामहस्तेन पुष्पं धृत्वा दक्षेणाच्छाद्य ध्यायेत् ।। ॐ ध्यायेन्नित्यम्महेशं रजतगिरिनिभं चारुचन्द्रावतंसं, रत्नाकल्पोज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानं, विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ।। इति मन्त्रेण ।। ततः प्रथमं पञ्चगव्येन प्रत्येकवक्त्रं स्नापयेत् ।। तत्र क्रमः, मध्यवक्त्रे, नमो हौं ईशानाय नमः ।। पूर्ववक्त्रे, नमो हैं तत्पुरुषाय नमः । दक्षिणवक्त्रे, नमो हूँ अघोराय नमः ।। पश्चिमवक्त्रे, नमो हीं सद्योजाताय नमः ।। उत्तरवक्त्रे, नमो हां वामदेवाय नमः। अनेनैव क्रमेण कारयेत् । प्रत्येकं सर्वौषधिना स्नानम् । पुरुषश्चेत् ॐ इति मन्त्रादाबूह्यम् । इदं सर्वौषधिजलं हौं ईशानाय नमः

इत्यादिना । ततः प्रत्येकं पञ्चामृतेन स्नापयेत् ।। तत्र क्रमः , मध्यवक्त्रे ॐ हौं ईशानाय नमः ।। इयं दुग्धधारा ॐ ईशानाय नमः ।। इत्येकवारं दुग्धधारया स्नापयेत् । पूर्ववक्त्रे, ॐ तत्पुरुषाय नमः, इयं दधिधारा ॐ तत्पुरुषाय नमः, इयं दधिधारा ॐ तत्पुरुषाय नमः इति दधिधारया वारद्वयम् ।। दक्षिणवक्त्रे, हूं अघोराय नमः । इयं घृतधारा ॐ अघोराय नमः। इतिघृतधारया वारत्रयम् ।। पश्चिमवक्त्रे, ॐ हीं सद्योजाताय नमः । इयं मधुधारा ॐ सद्योजाताय नमः ।। इतिमधुधारया वारचतुष्टयम् ।। उत्तरवस्त्रे, ॐ हाँ वामदेवाय नमः ।। इयमिक्षु-रसधारा ॐ वामदेवाय नमः इति इक्षुरसधारया पञ्चवारं स्नापयेत् ।। ततो यवगोधूम-धान्यानामन्यतमचूर्णेन तूष्णीं पञ्चवक्त्राणि रूक्षं कृत्वा शुद्धजलेन स्नापयित्वा प्रत्येकं वक्त्रमावाह्य यथाशक्ति पञ्चोपचारैः पूजयेत् ।। तत्र क्रमः, मध्यवक्त्रे, ॐ हौं ईशान ! इहागच्छ इह तिष्ठेत्यावाह्य, अर्घमादाय ॐ नमस्ते देवदेवेश ! नमस्ते मोक्षदायिने । ईशानाय नमस्तुभ्यमर्घोऽयं प्रतिगृह्यताम् ।। ॐ एतानि पाद्यादीनि एषोऽर्घः ॐ ईशानाय नमः ।। इदमनुलेपनं, इदमक्षतम्, एतानि पुष्पाणि, इदं दूर्वादलम्, एतानि बिल्वपत्राणि, एष धूपः, एष दीपः, एतानि गन्धपुष्प-धूप-दीप-तांबूलनानाविधनैवेद्यानि, इदमाचमनीयम्, एष पुष्पाञ्जलिः, ॐ हौं ईशानाय नमः ।। इति वाक्येन पूजयेत् । पूर्ववक्त्रे, ॐ हैं तत्पुरुष ! इहागच्छ इह तिष्ठेत्यावाह्य, ॐ नमस्तुभ्यं विरूपाक्ष ! नमस्ते दितिजान्तक ! । तत्पुरुषाय नमस्तुभ्यमर्घोयं प्रतिगृह्यताम्, एतानि पाद्यादीनि, एषोर्घः ॐ हैं तत्पुरुषाय नमः ।। ततोगंधादिना पूर्ववत्पूजयेत् ।। ततो दक्षिणवक्त्रे, ॐ हूँ अघोर ! इहागच्छ इह तिष्ठेत्यावाह्य अर्घमादाय ॐ नमस्ते शूलहस्ताय नमस्ते दण्डपाणये । अघोराय नमस्तुभ्यमर्घोऽयं प्रतिगृह्यताम् ।। एतानि पाद्यादीनि, एषोऽर्घः ॐ हूँ अघोराय नमः ।। इतिगन्धादिना पूर्ववदुक्तोपचारैः पूजयेत् ।। पश्चिमवक्त्रे, ॐ हीं सद्योजात ! इहागच्छ इह तिष्ठेत्यावाह्य ॐ नमोऽस्तु सद्योजाताय नमः कैलाशवासिने । सद्योजात नमस्तुभ्यमर्घोयं प्रतिगृह्यताम् ।। एतानि पाद्यादीनि, एषोऽर्घः ॐ हीं सद्योजाताय नमः ।। एवं गन्धादिना पञ्चोपचारैः पूजयेत् ।। उत्तरवक्त्रे, ॐ हाँ वामदेव ! इहागच्छ इह तिष्ठेत्यावाह्य ॐ नमस्ते वामदेवाय शर्वाय शशिशेखर !। पापशुद्ध्यर्थमर्घोऽयं गिरिश ! प्रतिगृह्यताम् ।। एतानि पाद्यादीनि एषोऽर्घः ॐ हाँ वामदेवाय नमः । एवं गन्धादिना पञ्चोपचारैरर्चयेत् ।। ततः ॐ आगच्छ देवदेवेश ! मर्त्यलोकहितेच्छया । पूजयामि विधानेन प्रसन्नः सुमुखो भव ।। ॐ भूर्भुवः स्वः शिव ! इहागच्छ इह तिष्ठेत्यावाह्य आसनमादाय ॐ पादासनं कुरु प्राज्ञ ! निर्म्मलं स्वर्णनिर्मितम् । भूषितं

विविधै रत्नैरिदं त्वं पादुकासनम् ।। इतिमन्त्रेण इदमासनम्, ॐ हौं शिवाय नमः । ॐ गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनया हृतम् । तोयमेतत्सुखस्पार्शम्पद्यार्थं प्रतिगृह्यताम्, इदं पाद्यम् ।। गन्धपुष्पसहिताघ्यर्मादाय ॐ गन्धोदकेन पुष्पेण चन्दनेन सुगन्धिना । अर्घं गृहाण देवेश ! भक्तिम्मे ह्यचलां कुरु ।। गौरीवल्लभ ! देवेश ! सर्वादिशशिशेखर ! ।। गृहाणार्घमुमाकान्त पूजेयं प्रतिगृह्यताम् ।। नमश्शिवाय शान्ताय सर्वपापहराय च । शिवरात्रौ मया दत्तं गृहाणार्घमिमं प्रभो !।। एषोऽर्घः ॐ हौं शिवाय नमः ।। ॐ मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम् । स्नानाय ते मया भक्त्या नीरं स्वीक्रियतां विभो ! ।। इदं स्नानीयम्, इदं पुनराचमनीयम्, शुक्लवस्त्रमादाय ॐ वस्त्रं सूक्ष्मं दुकूलञ्च देवानामपि दुर्लभम् । गृहाण त्वमुकान्त ! प्रसन्नो भव सर्वदा ।। इदं शुक्लवस्त्रं बृहस्पतिदैवतम् ।। ॐ यज्ञोपवीतं सहजं ब्राह्मणा निर्मितं पुरा । आयुष्यं भव वर्चस्वमुपवीतं गृहाण मे ।। इमे यज्ञोपवीते बृहस्पतिदैवते ॐ शिवाय नमः ।। ॐ श्रीखण्डचन्दनं दिव्यं मलयाचलसन्निभम् । विलेपनं-सुरश्रेष्ठ ! गृहाण परमेश्वर ! ।। इदमनुलेपनम् ।। इदमक्षतम् ।। ॐ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो !। मया हृतानि पूजार्थं गृहाण परमेश्वर ! ।। एतानि पुष्पाणि, एतानि बिल्वपत्राणि, एतानि दूर्वादलानि, इदं माल्यम् ।। ओम्वनस्पति-रसो धूपो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूऽपोयं प्रतिगृह्यताम् ।। एष धूपः। ॐ आज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश ! त्रैलोक्यतिमिरापहम् ।। एष दीपः । ॐ इदं दिव्यान्नममृतं रसैःषड्भिः समन्वितम् । गृहाण ! देवदेवेश ! नैवेद्यमुमया सह ।। एतानि गन्धपुष्पताम्बूलनानाविधनैवेद्यानि, इदं पक्वान्नम्, एतानि सदधिण्थुकान्नानि, इदमाचमनीयम् । ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्य्युतम् । कर्प्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ।। एतानिताम्बूलानि ॐ शिवाय नमः ।। ॐ इदं फलं मया देव ! स्थापितं पुरतस्तव । तेन प्रीतो ह्युमाधीश ! भव स्वर्गफ्लप्रद ! । इदं बिल्व फलम्, ॐ हौं शिवाय नमः ।। ततोऽष्टनाममन्त्रेण प्रशस्तपुष्पाणि दद्यात् ।। तद्यथा, इदमर्कपुष्पं श्रीभवाय नमः । इदं धत्तूरपुष्पं श्रीशर्वाय नमः । इदं करवीरपुष्पं श्रीरुद्राय नमः ।। इदं जातीपुष्पं श्रीपशुपतये नमः । इदं कर्णिकापुष्पं श्रीमहादेवाय नमः । इदं शमीपुष्पं श्री भीमाय नमः । इदं द्रोणपुष्पं श्रीईशानाय नमः । इदं पलाशपुष्पं हौं शिवाय नमः ।। ततो गन्धपुष्पाक्षतमेकीकृत्य पूजयेदष्टभिर्म्मन्त्रैः ॐ शर्वाय क्षितिमूर्त्तये नमः पूर्वस्याम्[१]।। ॐ भवाय जलमूर्तये नमः ऐशान्यां ।। ॐ रुद्रायाग्निमूर्तये नमः उत्तरस्याम् ।। ॐ

---

१. वामावर्त्तक्रमेणैव वामदेवस्य पूजाप्रदक्षिणादि ।

उग्राय वायुमूर्तये नमः वायव्याम् ॥ ॐ भीमायाकाशमूर्तये नमः पश्चिमायाम् ॥ ॐ पशुपतये यजमानमूर्तये नमः नैर्ऋत्याम् ॥ ॐ महादेवाय सोममूर्तये नमः ॥ दक्षिणस्याम् ॥ ॐ ईशानाय सूर्य्यमूर्तये नमः आग्नेय्याम् ॥ त्रिवारं दण्डवत्प्रणम्य यथाशक्तिस्तवादिकं पठित्वा रुद्रसमष्टोत्तरं शतं वा पञ्चाक्षरमन्त्रजपं कृत्वा समर्प्पयेत् ॥ उत्थाय वामहस्तेन घण्टां वादयन् अधोऽर्धचन्द्राकारमष्टगन्धधूपं प्रदर्श्य कर्प्पूर दीपेन घृतदीपेन वा आरार्तिकं कृत्वोपविश्य पुष्पाञ्जलित्रयं दद्यादेभिर्म्मन्त्रैः "ॐ तावकस्त्वद्गतप्राणस्त्वच्चित्तोहं सदा मृड ! । कृपानिध इतिज्ञात्वा यथा योग्यन्तथा कुरु ॥ अज्ञानाद्यदि वा ज्ञानाज्जपपूजादिकं मया । कृपानिध इतिज्ञात्वा भूतनाथ प्रसीद मे । अनेनैवोपचारेण यज्जातं फलमेव च । तैनेव प्रीयतां देवः शंकरः सुखदायकः ॥ अनेनैव च पुष्पाणामञ्जलिनः प्रभो ! मम । न्यूनं सम्पूर्णतां यातु व्रतञ्चैव **महेश्वर**" ॥ एष पुष्पाञ्जलिः ॐ ह्रौं शिवाय नमः ॥ एवं पुनर्वारद्वयं पुष्पाञ्जलिं दद्यात् ॥ दक्षिणार्थद्रव्यमादाय ॐ हिरण्यर्भगर्भस्थं हेमबीजं विभा-वसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ एतद्द्रव्यमूल्यक हिरण्यमग्नि-दैवतं शिवाय दक्षिणां समर्पयामि ॥ ॐ इमां मत्कृतपूजां तुभ्यमहं समर्प्पयामि ॥

ततो गौरीम्, गणेशम्, विष्णुम्, नवग्रहान्, इन्द्रादिदशदिक्पालांश्च पूजयेत् । तद्यथा ॐ **गौरि** ! इहागच्छ इह तिष्ठेत्यावाह्य, एतानि पाद्यादीनि, एषोऽर्घः ॐ गौर्यै नमः ॥ एवं गन्धादिना पञ्चोपचारैः पूजयेत् ॥ ॐ **गणेश** ! इहागच्छ इह तिष्ठेत्यावाह्य, एतानि पाद्यादीनि एषोऽर्घः ॐ गणेशाय नमः ॥ गन्धादिना पञ्चोपचारैः पूजयेत्। ॐ **विष्णो** ! इहागच्छ इह तिष्ठेत्यावाह्य, ॐ विष्णवे नमः इति पाद्यादिभिः पूजयेत् ॥ ॐ **नवग्रहा** इहागच्छत इह तिष्ठत एतानि पाद्यादीनि, एषोऽर्घः ॐ नवग्रहेभ्यो नमः इतिगन्धादिना पञ्चोपचारैः पूजयेत् ॥ ॐ **इन्द्रादिदशदिक्पाला** इहागच्छत इह तिष्ठत इत्यावाह्य ॐ इन्द्रादिदशदिक्पालेभ्यो नमः । इति गन्धादिभिः पञ्चोपचारैः पूजयेत् ॥ ततोऽर्द्धचन्द्राकारं "यानिकानी" त्यादिमन्त्रेण त्रिःप्रदक्षिणीकृत्य नृत्यगीतवाद्यादिभिश्शिवं सन्तोष्य कथां शृणुयात् ॥

ततो द्वितीयप्रहरे शिरसि गङ्गाजलं दत्वा हस्तौ पादौ प्रक्षाल्याचम्य शुचिर्भूत्वा तस्यामेव प्रतिष्ठित-शिवप्रतिमायां ध्यानादिपूजासमर्प्पणान्तां सकलोपचारेण पूजां कुर्य्यात् ॥ एतावांस्तु विशेषः । ॐ मया कृतान्यनेकानि पापानि हर शंकर ! । गृहाणार्घमुमाकान्त शिवरात्रौ प्रसीद मे ॥ एषोऽर्घः ॐ ह्रौं शिवाय नमः ॥ द्विगुणं जप कृत्वा समर्प्य नृत्यगीतवाद्याद्युत्सवैः शिवं सन्तोषयन् कथाञ्च शृण्वन्प्रहरं नयेत् ॥

पुनस्तृतीयप्रहरे शुचिर्भूत्वा पूर्ववद् ध्यानादिसमर्प्यणान्तामुक्तोपचारैः पूजां कुर्यात् । विशेषस्तु ॐ दुःखदारिद्र्यदग्धोऽहं भगवन् । पार्वतीपते ! । गृहाणार्घं दयां कृत्वा शिवरात्रौ च मे शिव ! ।। इति मन्त्रेणार्घन्दद्यात् ।। त्रिगुणं जपं कृत्वा समर्प्य नृत्यादिभिः सन्तोषयन् कथां शृण्वन् प्रहरं नयेत् ।

पुनश्चतुर्थप्रहरे पूर्ववत् शुचिर्भूत्वा हस्तौ पादौ प्रक्षाल्याचम्य पूर्ववदुक्तोपचारैर्ध्यानादिसमर्पणान्तां पूजां कुर्य्यात् । विशेषस्तु ॐ शिवरात्रौ ददाम्यर्घं सर्वपापप्रमोचनम् । शिव प्रसीद मे भक्त्या प्रसादादुमया सह ।। एषोऽर्घः ॐ शिवाय नमः इति दद्यात् । चतुर्गुणं जपं कृत्वा समर्प्ययेत् । सर्वत्र जपात् पूर्वं ध्यानं कार्य्यम् । नृत्यगीतादिभिरुत्सवं कारयन् व्रतकथां शृण्वन् अरुणोदयपर्य्यन्तकालं नीत्वा जलाशयङ्गत्वा स्नानादि प्रातःकृत्यं विधाय पूजास्थानमागत्य पुनर्न्नानागन्धपुष्पाक्षतैः संपूज्य यथाशक्त्यन्नादिकं शिवमुद्दिश्य दानं दत्वा दण्डवत्प्रणम्य यथाशक्ति स्तवादिकं पठित्वा त्रिःप्रदक्षिणीकृत्य पुष्पाञ्जलिं दद्यादेभिर्मन्त्रैः, ॐ **तावक**स्त्वदित्यादि-**महेश्वरे**त्यन्तैः पूर्वोक्तैः । ब्राह्मणेभ्यस्तिलकाशिषं गृहीत्वा तान्नत्वा शिवं प्रणम्य प्रार्थयेदेभिर्मन्त्रैः । ॐ मम कुले देवदेव ! भजनं तेऽस्तु सर्वदा । मानसान्मम देवेश ! दूरं नैव कदाचन ।। अहर्न्निशं क्षणं वापि विना च स्मरणं तव । श्वसनं न भवेदेव ! दूरं नैव कदाचन ।. अविघ्नेन व्रतं देव ! त्वत्प्रसादात्समर्प्पितम् । क्षमस्व जगतान्नाथ ! त्रैलोक्याधिपते ! हर ! ।। यन्मयात्र कृतं पुण्यं तत्तत्तुभ्यन्निवेदितम् । त्वत्प्रसादान्महादेव ! व्रतमद्य समर्प्पितम् । प्रसन्नो भव मे देव ! सद्गतिं देहि शंकर !। त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः ।। संसारक्लेशदग्धस्य व्रतेनानेन शंकर ! । प्रसीद सुमुखो नाथ ! ज्ञानदृष्टिप्रदो भव ।। इत्येतैः संप्राथ्र्य विसर्जयेदेभिः । ॐ नियमोऽद्य महादेव ! कृतश्चैव त्वदाज्ञया । विसृज्यते मया स्वामिन् ! जातं व्रतमनुत्तमम् ।। व्रतेनानेन देवेश ! यथाशक्ति कृतेन च । सन्तुष्टो भव देवेश ! जातं व्रतमनुत्तमम् ।। शिवशङ्कर ! सर्वात्मन् ! कृपां कुरु ममोपरि ।। गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वर !। पूजाराधनकाले च पुनरागमनाय च ।। ॐ शिव ! पूजितोसि प्रसीद क्षमस्व स्वस्थानङ्गच्छ इतिविसर्जयेत् ।। ॐ नवग्रहाः पूजिताः स्थ क्षमध्वं स्वस्थानङ्गच्छत ।। ॐ गौरि ! पूजितासि प्रसीद क्षमस्व स्वस्थानङ्गच्छ ।। ॐ विष्णो ! पूजितोऽसि प्रसीद क्षमस्व स्वस्थानङ्गच्छ ।। ॐ इन्द्रादिदशदिक्पालाः पूजिताःस्थ क्षमध्वं स्वस्थानं गच्छत । इतिविसर्जयेत् ।। ॐ अद्य कृतैतत् शिपूजनपूर्वकशिवरात्रिव्रतप्रतिष्ठार्थमेतावद्द्रव्यमूल्यक हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे ।। इतिदक्षिणां दद्यात्।

नृत्यगीतवाद्यादिकं कारयन् प्रतिमां नद्यादिजलाशये प्रक्षिपेत् । अर्प्पितद्रव्यं शैवब्राह्मणाय दत्वा यथाशक्ति ब्राह्मणान् यतींश्च भोजयित्वा स्वयं च पारणां कुर्य्यात् ।।

*।। इति श्रीजगद्धरशर्म्म कृता शिवरात्रिव्रतपद्धतिः समाप्ता ।।*

# अथ कथा

नमस्ते विश्वनाथाय संसारस्थितिहेतवे। जगतां रूपिणे तुभ्यं जन्तूनां परमात्मने ।।१।। नमो नित्याङ्गरागाय नमो दिव्यस्वरूपिणे । नमः शिवाय शान्ताय शङ्कराय हराय च ।।२।। कैलाशे च महास्थाने गौरी पृच्छति शङ्करम् । कथयस्व महादेव ! प्रसादेन महेश्वर! ।।३।। **ईश्वर उवाच**–श्रूयतां गिरजे देवि ! महाविद्ये ! महेश्वरि ! कथयामि न सन्देहो मनसा यदि वाञ्छसि ।।४।। **पार्वत्युवाच**–तपसा कर्मणा वाचा व्रतेन नियमेन वा । लप्स्यसे त्वं महादेव ! प्रसन्नो भव केन वा ।।५।। **ईश्वर उवाच**–फाल्गुने मासि या कृष्णा भवेच्चतुर्दशीतिथिः । तस्यान्तु तामसी रात्रिः शिवरात्रिरभिधीयते ।।६।। त्रयोदश्यां कृतस्नान एकाहारी धृतव्रतः । कुशास्तरणशयनं यतीनामपि तद्व्रतम् ।।७।। प्रातरुत्थाय स्नातस्तु तद्दिने मत्परायणः । पुरुषो वाथवा नारी चोपवासं करोति यः ।।८।। रात्रौ प्राङ्गणके रम्ये शिवक्षेत्रे शिवालये । बिल्वपत्रेण या पूजा नानापुष्पसमन्विता ।।९।। अगरुगुग्गुलधूपन्तु दशाङ्गेन तु दापयेत् । स्नानं च पञ्चगव्येन कुर्य्यात्पञ्चामृतेन वा ।।१०।। खण्डक्षीरगुडैर्वापि अपूपैः पिष्टभक्तकैः । नानाफलं च नैवेद्यं विचित्रं रचयेत्तदा ।।११।। नृत्यगीतैस्तथा वाद्यैस्तूर्यमंगलकाहलैः । आनन्दमयशरीरेण शिवभक्तिसमन्वितः ।।१२।। कुर्याज्जागरणं रात्रौ हृष्टलोमा च मानवः । प्रहरे प्रहरे स्नानं पूजां चैव विशेषतः ।।१३।। शिवरात्रिव्रतं दिव्यं चतुर्व्वर्गफलप्रदम् । यत्कथा श्रवणेनापि लप्स्यते वांछितं फलम् ।।१४।। **पार्वत्युवाच**–सत्यं सर्वमिदं प्रोक्तं मिथ्या किमपि नोच्यते । कृतं केन त्रिलोकेश ! शिवरात्रिरिदं व्रतम् ।।१५।। नाम तस्य समाख्याहि प्रसादेन महेश्वर ! तत्कथां श्रोतुमिच्छामि त्वत्तो ब्रह्मविदांव्वँर ! ।।१६।। **शंकर उवाच**–वाराणस्यां महास्थाने व्याधो वसति पापकृत् । पुत्रदारादिसंयुक्तो धर्मकर्मविवर्जितः ।।१७।। प्रत्यहं पापकर्मासौ परजीवेन जीवति । वृत्त्यर्थं पुत्रदारणां निर्दयः सर्वजन्तुषु ।।१८।। मृगारिर्न्नाम व्याधोऽसौ मृगमांसेन जीवति । प्रातराखेटके याति वनं गुह्यं दिने दिने ।।१९।। कृष्णः कपिलकेशी च कोपेनारुणलोचनः । हस्ते धृत्वा धनुर्वाणौ यमवर्ज्जावहारकः ।।२०।। न तस्यास्ति महावृद्धो न युवा न च बालकः । समदृष्टिः

सर्वजन्तूना नित्यं ग्रसति जीवितम् ।।२१।। वनेचराणां स यमो दुरात्मा वनस्पतिं हन्ति च दुर्न्निरीक्ष्यः । ददाति पाशं स गले मृगाणां कक्षातटं हन्ति च शूकराणाम् ।।२२।। तस्यैकेन प्रहारेण हस्ती पतति मूर्छितः । त्रिगंडगलितोन्मत्तः स्वयं दन्तौ प्रयच्छति ।।२३।। व्याधो ददाति गुञ्जारं यावद्घ्राणं न पश्यति । आकर्णपूर्णचापन्तु दृष्ट्वा जीवं विमुंचति ।।२४।। खड्गी खड्गप्रहारेण भूमौ पतति मूर्छितः । महिषो विषाणकोट्या च वल्मीकं खनति स्वयम् ।।२५।। शरप्रहारमासाद्य पदमेकं न गच्छति । का कथा स्वल्पजन्तूनां शशादीनां विशेषतः ।।२६।। ते च तद्घ्राणवातेन गच्छन्ति योजनाधिकम् । बाणधारणमात्रेण धर्माधर्म्मौ न पश्यति ।।२७।। व्याधेन वध्यते प्राणी, तस्य मांसेन जीवति । एकदा दैवयोगेन दूरं गन्तुं न शक्तवान् ।।२८।। आसने दत्तवाणन्तु पुरोमार्गं न पश्यति । सारजं नैव चाप्नोति भ्रमते सकले वने ।।२९।। निभृतेन पदं दत्वा लक्षं लक्षीकरोति सः । बाणमोक्षणकाले तु न च लक्ष्यं विलोकते ।।३०।। अनेनैव प्रकारेण विधिना तत्र वञ्चितः । लज्जाविलक्षितो भूत्वा न गृहङ्गन्तुमिच्छति ।।३१।। स्मृत्वा निष्ठुरवाक्यानि गृहिणी गदितानि च । मस्तके न्यस्तहस्तोऽसौ विल्ववृक्षतटे स्थितः ।।३२।। वासरं नैव जानाति सन्ध्यामपि समागताम् । रात्रिकालं समासाद्य निद्राघूर्णितलोचनः ।।३३।। शयनार्थं किमत्राहं कुर्यां घोरायते निशा । अहं सर्वस्य विद्वेषी मनुष्यो मांसजीवकः ।।३४।। वृक्षमारुह्य तिष्ठामि यावन्नोदयते रविः । रजनी तामसी घोरा पुरोमार्गं न पश्यति ।।३५।। इतिसंचिन्त्य भीतोऽसौ वृक्षमारोहयत्तदा । तत्रैव दैवयोगेन लिंगस्तिष्ठति भूतले।।३६।। तत्पादभग्नपत्राणि पतन्ति शिवमूर्धनि । वाह्ये दृष्टिपथं दद्यामिति शाखाविभञ्जात् ।।३७।। हिमतोयं च तत्पत्रं पपात शिवमस्तके । तस्यैवंविधचित्तस्य न भक्तिर्न्न च भावना ।।३८।। अहो शिवस्य माहात्म्यं सैव पूजा फलप्रदा । एतदेव कृतं तेन सुकृतं चात्र जन्मनि ।।३९।। आयुर्वर्षशतं तस्य अन्तकालः समागतः । यमेन प्रहितो दूता व्याध आनीयतां लघु ।।४०।। आगतः सोऽपि सन्तुष्टः पाशपाणिर्भयंकरः । आगते निकटे दूते शिवदूतेन वेष्टितः ।।४१।। बलात्तु यमदूतेन गले पाशो नियोजितः । हस्तादाकृष्य कोपेन शिवदूतेन वारितः ।।४२।। **यमदूत उवाच**—कस्त्वं केन च कार्य्येण यमाज्ञा प्रतिहन्यते । व्याधोऽयं पापकर्मा च नीयते नरकं प्रति ।।४३।। **शिवदूत उवाच**—व्याधः करोतु पापानि पापदेहो भवत्वथ । शिवेन प्रहितो दूतो व्याध रक्षां करोम्यहम् ।।४४।। **यमदूत उवाच**—कस्तवायं शिवोदेवः को हरिः कः पितामहः । यमाज्ञा भ्राम्यते पृथ्व्यामिच्छया नीयते नरः ।।४५।। उत्थाय शिवदूतेन तलाघातेन ताडितः । आः शक्तिं भाषसे पाप ! शिवाय परमात्मने ।। ४६।। एवं

ते गञ्जिता दूता यमद्वारं प्रपेदिरे। **यमदूत उवाच**—नास्त्याज्ञा यमुना भ्रातरधुना मर्त्यमण्डले ॥४७॥ पदे पदे महाराज ! आज्ञा ते खण्डिता भुवि । क्वचिद्राजा शिवो देवः क्वचिद्धरिपितामहौ ॥४८॥ न त्वया प्रेषितो गन्तुं युज्यते भुवनत्रयम् । बलिनामाश्रयं कुर्य्यान्नाबलस्य कदाचन ॥४९॥ इत्याकर्ण्य वचस्तेषां गञ्जितानां विशेषतः । रोषेणारुणनेत्रोऽसौ बभाषे यमराट् ततः ॥५०॥ गञ्जिताः केन वा यूयं केन वा कलहः कृतः । तान्निहन्मि समाचक्ष्व न भयं पुरतो मम ॥५१॥ **दूत उवाच**—धर्मराट् ! शिवदूतेन बलेनाहं निराकृतः । न मया व्याध आनेतुं भुवनं तव शक्यते ॥५२॥ गत्वा राज्यमिदं तत्राधिकारं त्यक्तुमर्हसि । त एव चिन्तां कुर्वन्तु अधुना मर्त्यमण्डले ॥५३॥ श्रुत्वा वाक्यं यथायुक्तं कोपेन स्फुरिताधरः । उवाच प्रेतराडुच्चैरानेयो महिषो लघु ॥५४॥ दण्डपाशसमायुक्तश्चिह्नचारमरसंयुतः । स्वपुरान्महिषारूढः प्रपेदे शिवसन्निधिम् ॥५५॥ कैलाशे च महास्थाने द्वारि संभाषते यमः । निवेद्यतां महेशाय यमस्यागमनं मम ॥५६॥ नन्दी धावति वेगेन महेशाय निवेदितुम् । देव ! द्वारि यमो दण्डी किमागच्छतु, गच्छतु ॥५७॥ **शिव उवाच**—प्रवेश्यतां च वेगेन दक्षिणाशाधिपो यमः । ततःप्रविश्य यमराट् प्राञ्जलिर्वाक्यमब्रवीत् ॥५८॥ **यम उवाच**—नमस्ते विश्वनाथाय जगतां सृष्टिहेतवे । नमो भस्मांगरागाय शिवाय परमात्मने ॥५९॥ **ईश्वर उवाच**—दक्षिणां दिशमाश्रित्य यमो विशतु सांप्रतम् । ईत्यर्द्धोक्तमिदं श्रुत्वा देवो वचनमब्रवीत् ॥६०॥ ज्ञातं मया हि यत्कार्यं यमाद्यागमने तव । मृगारिणा तु व्याधेन कृतकाराधनं मम ॥६१॥ शिवरात्रौ वने भद्रं विल्वपंत्रेण निश्चितम् । स्वेच्छया च भवेद्राज्यं व्याधस्य प्रहरद्वयम् ॥६२॥ **यम उवाच**—दीयतां तस्य राज्यं वै यावच्चन्द्रार्कमेदनी । मया पुनर्म्महादेव ! त्यक्ता संसारचिन्तना ॥६३॥ यो हि मर्त्ये जगन्नाथ ! पापात्मा पापकर्मकृत् । **शिव उवाच**—धर्मराट् ! भयभीतेन नरेण मम पूजनम् । क्रियते नैव सन्देहो वासुदेवस्य सेवनम् ॥६४॥एतयोस्तु परीहारः कर्तव्यो भवता सदा । अन्येषां भुवि लोकानां स्वामित्वं भवतः कृतम् ॥६५॥ इति तद्वाक्यमाकर्ण्य स गतो निजमंदिरम् । शीघ्रं व्याधोऽपि राज्यार्थं प्रहितो मर्त्यमंडले ॥६६॥ उत्पन्नो राजगेहे स जातिस्मरणसंज्ञितः । अभूज्जन्मदिनं तस्य सुखाय सर्वदेहिनाम् ॥६७॥ लब्धोदयो यथा सूर्यो वन्दनीयो भवेद् भुवि । स तथा सर्वलोकानां वन्दनीयो बभूव ह ॥६८॥ युवराजो युवा चन्द्रः प्रभायुक्तः प्रतापवान् । पितर्य्युपरते तस्य राज्यं भ्रातृशतेष्वपि ॥६९॥ प्राप्ते राज्ये तु तस्यैव संभूतापूर्वसंस्मृतिः । आज्ञा दत्ता तदात्मीया नगरे सर्वमन्दिरे ॥७०॥ सर्वलोकास्समारम्भं कृत्वा विभवविस्तरैः । पूजयध्वं महाभागाः शङ्करं प्रीतये

मम ॥७१॥ पूजयित्वा महादेवं फलं मयि निवेद्यताम् । अनेनैव प्रकारेण लक्षकोटिशतानि च ॥७२॥ शिवरात्रिफलं लब्ध्वा कृतकृत्यो बभूव ह । राजा राज्यदिने पूर्णे क्षीणशक्तिश्च निःप्रभः ॥७३॥ व्याधिकष्टसमायुक्तः शय्यातलसमाश्रितः । शय्यायां मूर्च्छितो भूत्वा तिष्ठेद्दिनचतुष्टयम् ॥७४॥ दिनैकंवा दिनार्द्धव्वाँ शूलपाणिर्गणान्वितः । यमेन पूर्वकोपेन प्रहिता निजसेवकाः ॥७५॥ भायानकाः पाशहस्ताः शतकोटिसहस्रशः । गणैस्तै र्न्निर्जितास्सर्वे युद्धे भग्नपरा-क्रमाः ॥७६॥ याता यमपुरीं शीघ्रं साधवो दुःखिता इव । सर्पा इव विषत्यक्ता निःप्रभा भानुमण्डलाः ॥७७॥ दृष्ट्वा यमश्च कोपेन चित्रगुप्तमपृच्छत । किं कृतं तेन पापेन अधुना सुकृतं महत् । येनामी निर्जिताः सर्वे समायाता ममालयम् ॥७८॥ उवांच वचनं सोऽपि चित्रगुप्तो महामतिः । व्याधेन मतियुक्तेन शिवस्याराधनं कृतम् ॥७९॥ शिवरात्रिफलं तस्य शतकोटिसहस्रशः । तेनास्यास्ति महद्द्राज्यमिदानीं वसुधातले ॥८०॥ तस्य भद्रां विरुद्धां वा न चिन्तां कर्तुमर्हसि । श्रुत्वैवं सर्ववाक्यानि चित्रगुप्तोदितानि सः ॥८१॥ स्तब्धदृष्टिर्य्यमश्चासीद्द्रुमो वज्रहतो यथा । मुहुर्विस्मयमानास्तु हस्तावास्फलंयत्तदा ॥८२॥ किम्मया तत्र कर्त्तव्यं शिवे परमदैवते । फलमेतन्महाभाग शिवरात्रिव्रते कृते ॥८३॥ यः करोत्यधुना मर्त्ये स राजा नात्र संशयः । लक्ष्मीगोधन-पुत्रायुर्विद्याकीर्त्तिधनानि च ॥८४॥ मम देवि ! प्रसादेन तस्य स्यादत्र निश्चितम् । इति शिवधर्मोत्तरे शिवरात्रिव्रतकथासमाप्ता । यदक्षरेत्यादि । इति कथां श्रुत्वा दक्षिणां दद्यात् एवं पूर्णे चतुर्दशे वर्षे शिवरात्रिव्रतस्योद्यापनं कुर्य्यात् ।

## अथ गोविन्दद्वादशी

कृत्यमहार्णवे ब्रह्मपुराणम्, फाल्गुनस्य सिते पक्षे कुम्भस्थे दिवसाधिपे । जीवे धनुषि संस्थे च शोभने रविवासरे ॥ पुष्यर्क्षेण च संयुक्ता गोविन्दद्वादशी मता ॥ तस्यां कर्तव्यमाह, गोविन्दद्वादशीं प्राप्य गच्छेच्छ्रीपुरुषोत्तमम् । विष्णुलोकमवाप्नोति मोक्षं गङ्गाम्बुमज्जनात् ॥ तत्र ॐ अद्येत्यादि सकलपापक्षयपूर्वक विष्णुलोकप्राप्ति-कामः पुरुषोत्तमक्षेत्रयात्रामहं करिष्ये ॥ इतिसङ्कल्प्य जगन्नाथं गच्छेत् । गंगायान्तु ॐ अद्येत्यादिसकलमहापातकोपपातकक्षयपूर्वकपुनर्जन्माभावकामो गोविन्दद्वादश्यां गंगायां स्नानमहङ्करिष्ये इतिसङ्कल्प्य अञ्जलिं बध्वा ॐ महापातकसंज्ञानि यानि पापानि सन्ति मे । गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि !॥ इतिमन्त्रमुच्चार्य्य गंगायां स्नायात् । अथ फाल्गुनीपूर्णिमायां गोविन्दं सम्पूज्य दोलोत्सवं कुर्य्यात् । तथाहि कृत्यचिन्तामणिधृतब्रह्मपुराणम्, नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् । फाल्गुन्यां सय्यँतो भूत्वा गोविन्दस्य पुरम्व्रजेत् ॥

## अथ होलिकादाहः

सायाह्ने होलिंकां कुर्य्यात् पूर्वाह्ने क्रीडनं गवामित्यादिवचनात् सायाह्नव्यापिन्यां चतुर्दशीविद्धायां पूर्णिमायां भद्राशून्यायां होलिकां संपूज्य दहेत् । पूर्वं सङ्कल्प्य शुष्ककाष्ठानां गोमयपिण्डानाञ्च राशिं कृत्वा वह्निना प्रदीप्य तत्र ॐ होलिके ! इहागच्छ इह तिष्ठेत्यावाह्य ॐ अस्माभिर्भयसन्त्रस्तैः कृता त्वं होलिके ! यतः । अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव । इतिमन्त्रेण पाद्यादिभिः ॐ होलिकायै नमः इति वाक्येन संपूजयेत् । अवीराणि पक्वान्नञ्च वह्नौ क्षिपेत् । अन्योऽपि पूजोत्तरं विशेषः । यथा ज्योतिर्निबन्धे, पञ्चमीप्रमुखास्तासु तिथयोऽनन्त-पुण्यदाः । दश स्युः शोभनास्तासु काष्ठस्तेयो विधीयते ॥ चाण्डालसूतिकागेहाच्छिशुहारितवह्निना । प्रप्तायां पूर्णिमायान्तु कुर्य्यात्तत्काष्ठदीपनम् । ग्रामद् बहिश्च मध्ये वा तूर्य्यनादसमन्वितः । स्नात्वा राजा शुचि. र्भूत्वा स्वस्ति वाचनतत्परः ॥ दत्वा दानानि भूरीणि दीपये-द्धोलिकाचितिम् ॥ ततोऽभ्युक्ष्य चितिं सर्वां साज्येन पयसा सुधीः । नारिकेलानि देयानि बीजपूरफलानि च । गीतवाद्यैस्तथा नृत्यैः रात्रिः सा नीयते जनैः ॥ तमग्निं त्रिः परिक्रम्य गायन्तु च हसन्तु च । जल्पन्तु स्वेच्छया लोका निःशङ्का यस्य यन्मतम् ॥ अपि च, तमग्निं त्रिः प''क्रम्य शब्दैर्ल्लिङ्गभगाङ्कितैः । तेन शब्देन सा पापा राक्षसी तृप्तिमाप्नुयात् । इतिहोलिकादाहविधिः ।

**दहनसमये वायुफलम्**—पूर्वे वायौ होलिकायां प्रजाभूपालयोः सुखम् । पलायनञ्च दुर्भिक्षं दक्षिणे जायते ध्रुवम् ॥ पश्चिमे तृणसम्पत्तिरुत्तरे धान्यसम्भवः । यदीशानेप्यनावृष्टिरूर्ध्वं राजा समाश्रयेत् ॥

**सिंदूरक्रीड़ा**—उदयगमिन्यां पूर्णिमायां कुलदेव्यै अपूपादिसमर्पणम्। पूर्णिमा-प्रतिपत्सन्धि-दिने सिंदूरक्रीड़ा कार्या।

*॥ इति फाल्गुनकृत्यम् ॥*

# अथ चैत्यकृत्यम्

चैत्रकृष्णप्रतिपदि वसन्तोत्सवः अत्र हेमाद्रौ भविष्ये—चैत्रे मासि महाबाहो ! पुण्ये तु प्रतिपद्दिने । यस्तत्र श्वपचं स्पृष्ट्वा स्नानं कुर्य्यान्नरोत्तमः ॥ न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप ! ॥ तथा, प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ । कृत्वा चावश्यकार्य्याणि सन्तर्प्य पितृदेवताः ॥ वन्दयेद्धोलिकाभूमिं सर्वदुःखोपशान्तये ॥ ॐ वन्दितासि सुरेन्द्रेण ब्रह्मणा शंकरेण च । अतस्त्वं पाहि नो देवि ! भूते भूतिप्रदा भवेति मन्त्रेण प्रणमेत् ॥ अस्यामेव तिथावाम्रमञ्जरीप्राशनम्, उक्तञ्च पुराणसमुच्चये

"वृत्ते तुषारसमये सितपञ्चदश्यां, प्रातर्वसन्तसमये समुपस्थिते च । संप्राश्य चूत-कुसुमं सह चन्दनेन, सत्यं हि पार्थ! पुरुषोऽथ समाःसुखी स्यात् ।। मन्त्रस्तु-चूतमग्र्यं वसन्तस्य माकन्दकुसुमं तव । सचन्दनम्पिबाम्यद्य सर्वकामार्थसिद्धये ।। इति ।।

तत्र संक्रान्त्यां विस्फोटकभयोपशमनकामो **घण्टाकर्णं**[1] स्नुहीवृक्षे पूजयेत् ।। तद्यथा ॐ घण्टाकर्ण इहागच्छ इह तिष्ठेत्यावाह्य ॐ घण्टाकर्ण ! महावीर ! सर्वव्याधिविनाशन ! । विस्फोटकभये प्राप्ते रक्ष रक्ष महाबल ! ।। इतिमन्त्रेण पाद्यादिभिः ॐ घण्टाकर्णाय नमः इतिवाक्येन पूजयेत् । कुत्रचिदाचारान्मेषसंक्रान्तौ पूजयन्ति । एवं **शीतलादेवीं** विस्फोटकाद्युपद्रवनिवृत्तिकामो यथाशक्ति पूजयेत् ।। ॐ शीतले ! इहागच्छ इह तिष्ठेत्यावाह्य ॐ शीतलायै नमः इति वाक्येन ।। ॐ शीतले ! त्वं जगन्माता शीतले त्वं जगत्पिता । शीतले ! त्वं जगद्धात्री शीतलायै नमोनमः ।। इति मन्त्रेण पाद्यादिभिः संपूज्य स्कन्दपुराणीयं "नमामि शीतलां देवीमित्यादि–भक्तिश्रद्धान्वितो हि य" इत्यन्तं स्तोत्रं पठित्वा प्रणम्य विसर्जयेत् ।।

## अथ वारुण्यादिः

**तत्र स्कान्दे**–वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी । गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ।। शनिवारसमायुक्ता सा महावारुणी स्मृता । गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा ।। शुभयोगसमायुक्ता शनौ शतभिषा यदि । महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ।। शतभिषानक्षत्रयुक्ता चैत्रकृष्ण त्रयोदशी वारुणी, वारुणी शनिवारयुक्ता चेत् महावारुणी, महावारुणी शुभयोगयुक्ता चेत् महामहावारुणी। तत्र संज्ञाविधेः सार्थकत्वाय निमित्तत्वेन मासपक्षतिथ्युल्लेखानन्तरं तत्तत्पर्वनाम उल्लेखनीयम् । ॐ तत्सदित्युच्चार्य ॐ अद्य चैत्रे मासि कृष्णे पक्षे वारुणयुक्तत्रयोदश्यां तिथावमुकगोत्रोऽमुकशर्म्मा सूर्य्यग्रहणकालीनगङ्गास्नान-जन्यफलशतगुणफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये । एवं महावारुण्यां सूर्य्यग्रहणकालीनगङ्गास्नानजन्यफलकोटिगुणफलप्राप्तिकामो गङ्गायां स्नान-महङ्करिष्ये ।। एवं महामहावारुण्यां त्रिकोटिकुलोद्धरणकामो गङ्गायां स्नानमहङ्करिष्ये इति संकल्प्य यथाविधि स्नायात् ।। सधवाया अपि वारुण्यादिस्नानाधिकारः ।।

अथ चैत्रशुक्लप्रतिपदि **नवरात्रारम्भः**, क्रियते या च वार्षिकीतिवचनात् ।। अत्र **प्रपादानमुक्तम्**–भविष्यते अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे । पुण्येऽह्नि विप्रकथिते प्रपादानं समारभेत् ।। इति वचनात्प्रपादानमवश्यङ्कर्तव्यम् ।। मन्त्र संकल्पवाक्ये तु अग्रे वक्ष्येते ।। चैत्रशुक्लतृतीयायां गौरीशङ्करौ सम्पूज्य **दोलोत्सवं**

---

१. घाँटो पूजा ।

कुर्य्यात् । तदुक्तं देवीपुराणे :–तृतीयायां यजेद्देवीं शंकरेण समन्विताम् । कुङ्कुमागरुकर्प्पूरमणिवस्त्रसुगन्धकैः ।। सग्गन्धधूपदीपैश्च दमनेन विशेषतः । आन्दोलयेत्ततो वत्सं शिवोमातुष्टये सदा ।।

## अथ चैत्रशुक्लपञ्चम्यां ब्रह्मपुराणीयवचनात् लक्ष्मीं पूजयेत्

तत्र संकल्पः ॐ अद्येत्यादि चैत्रशुक्लपञ्चम्यां लक्ष्मीकर्तृकास्मद्योगाभाव-पूर्वकविष्णुलोकवासकामो लक्ष्मीपूजनमहङ्करिष्ये । एतानि पाद्यादीनि ॐ श्रियै नमः । अनेनैव गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्याचमनीयपुष्पाञ्जलिभिरर्चयित्वा क्षमापयेत् ।।

## अथ अशोकाष्टमी

अथ चैत्रशुक्लाष्टम्यां ब्रह्मपुत्रस्नानमशोककलिकापानञ्च कुर्य्यात् । तथाहि स्कान्दे, मीने मधौ शुक्लपक्षे अशोकाख्यां तथाष्टमीम् । पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि ।। लौहित्यो ब्रह्मपुत्रः । ॐ अद्येत्यादिसकलपापक्षयपूर्वक-सर्वतीर्थस्नानजन्यफलमसमफलप्राप्तिपूर्वकब्रह्मपदगमनकामो ब्रह्मपुत्रे स्नानमहं करिष्ये ।। इति संकल्प्य स्नानेतिकर्तव्यतां विधाय ॐ ब्रह्मपुत्र ! महाभाग ! शान्तनोः कुलसम्भव !। अमोघागर्भसम्भूत ! पापं लौहित्य ! । मे हर ।। इत्युच्चार्य स्नायात् । तत्र यदि बुधवारपुनर्व्वसुनक्षत्रयोगश्चेत् तदा वाजपेय यज्ञजन्यफल समफल-प्राप्तिकामः स्नायादिति कृत्यतत्वे । तत्र संपूर्णचैत्रस्नाने–चैत्रं तु सकलं मासं शुचिः प्रतयमानसः। लौहित्यतोये यः स्नायात् स वै कैवल्यमाप्नुयात् । ॐ अद्येत्यादिकैवल्यप्राप्तिकामश्चैत्रमासं व्याप्य ब्रह्मपुत्रे स्नानमहं करिष्ये ।। इतिकृत्यसारः ।। अत्रैव अशोककलिकापानमुक्तम् लिंगपुराणे–अशोक कलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ । चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ।। ॐ अद्येत्या-दिशोकरहितत्वकामोऽष्टावशोककलिका अहं पिबे ।। इति संकल्प्य ॐ त्वमशोक-कराभीष्टं मधुमाससमुद्भव !। पिबामि शोकसन्तप्तो मामाशोकं सदा कुरु ।। इतिमन्त्रं पठित्वा प्राङ्मुखो विष्णुपदजलमिश्रिता अष्टौ अशोककलिकाः पिबेत् ।।

*।। इति अशोकाष्टमीकृत्यम् ।।*

## अथ चैत्रशुक्लनवम्यां रामनवमीव्रतं कुर्य्यात्

**तथाहि** अगस्तिसंहितायाम्–प्राप्ते श्रीरामनवमी दिने मर्त्यो विमूढ़धीः । उपोषणं न कुरुते कुम्भीपाकेषु पच्यते । तथा । चैत्रशुक्ले तु नवमी पुनर्वसु युता

यदि इत्याद्यापस्तम्बवचनाच्चेदं नित्यव्रतम्, अकरणे प्रत्यवायश्रवणात्। तत्र भोजने दोषश्रुतिः "यस्तु रामनवम्यां वै मोहाद् भुङ्क्ते नराधमः। कुम्भीपाकेषु घोरेषु पच्यते नात्र संशय" इति ॥ अगस्तिसंहितायाम् "चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ। उदये गुरुगौरांश उच्चस्थे ग्रहपञ्चके ॥ मेषे पूषणि संप्राप्ते लग्ने कर्कटकाह्वये। आविरासीत् सकलया कौशल्यायां परः पुमान्"॥ प्राक्पक्षे शुक्लपक्षे उदये लग्ने। गुरुगोरांशे गुरुनवांशे ॥ तस्मिन् दिने तु कर्तव्यमुपवासव्रतं सदा। तत्र जागरणं कुर्य्यात् रघुनाथपरो भुवि ॥ चैत्रमासे नवम्यान्तु जातो रामः स्वयं हरिः पुनर्वस्वर्क्षसंयुक्ता सा तिथिः सर्वकामदा ॥ सा रामनवमी प्रोक्ता कोटिसूर्य्यग्रहाधिका। केवलापि सदोपोष्या नवमीशब्दसंग्रहात् ॥ तस्मात् सर्वात्मना सर्वैः कार्यं वै नवमीव्रतम् ॥ दिनद्वये मध्याह्नव्यापिनी चेत् परैव कर्तव्या, नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैरित्यादि निषेधवाक्यात्। अत्र यदा प्रातस्त्रिमुहूर्ता नवमी, दशमी च क्षयवशात् सूर्य्योदयात् प्रागेव समाप्यते तदा स्मार्तानामेकादशीनिमित्तोपवासिनां नवमीव्रतांगपारणालोपः स्यात्, अतोऽष्टमी विद्धैव स्मार्तैः कार्य्या ॥ उपोषणं जागरणं पितृनुद्दिश्यतर्पणम् ॥ तस्मिन् दिने तु कर्त्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः ॥ सर्वेषामप्ययं धर्मो भक्तियुक्त्यैकसाधनः। अशुचिर्वापि पापिष्ठः कृत्वेदं व्रतमुत्तमम् ॥ पूज्यः स्यात् सर्वभूतानां यथारामस्तथैव सः। इत्याहुः तिथितत्त्वचिन्तामणौ महामहोपाध्यायमहेशठक्कुराः ॥

तत्र पूर्वदिने निरामिषमेकवारं भुक्त्वा स्वर्णमयीं मृन्मयीर्वां प्रतिमां कारयित्वा परदिने प्रातः कृतनित्यक्रियो व्रती आचम्य ताम्रपात्रेऽर्घमादाय ॐभगवन्! सूर्य्य! भगवत्यो देवता अद्यादि यावज्जीवम्प्रतिचैत्रशुक्लनवम्यां ससीतलक्ष्मणादिसहित श्रीरामपूजनोपवासव्रतमहमाचरिष्यामीति निवेद्य कुशत्रयतिलजलान्यादाय ॐ अद्येत्यादिकुलकोटिसमुद्धरणपूर्व्वक-भूरिदक्षिणानेकयज्ञजन्यफलसमफल-दुष्करानेकतपोजन्यफलसमफलकार्तिक्यां द्वारकाधिकरण–कपिलगवीकोटिदान-जन्यफलसमफलधरादानजन्यफलमसमफल–बहुजन्मार्जितैकादश्युपवासजन्य-फलसमफलप्राप्तिपूर्व्वकान्तकालिक-विष्णुलोकमहितत्वसार्वदिकाव्यभिचारिश्रीराम-प्रीतिकामोऽद्यादि यावज्जीवम्प्रतिचैत्रशुक्लनवम्यां लक्ष्मणादिसहित ससीत श्रीरामचन्द्रपूजनोपवासव्रतमहङ्करिष्ये ॥ इति सङ्कल्प्य प्रतिमायां श्रीरामचन्द्रोऽसि, ॐ सीतासि, ॐ लक्ष्मणोऽसि, ॐ भरतोऽसि, ॐ शत्रुघ्नोऽसि, ॐ दशरथोऽसि, ॐ कौशिल्यासि, ॐ कैकेय्यसि, ॐ सुमित्रासि, ॐ सुग्रीवोऽसि, ॐ हनुमानसि, इतिप्रत्येकं नामकरणं कृत्वा स्वस्वशाखोक्तमन्त्रेण प्राणप्रतिष्ठां कृत्वा पूजा-मारभेत ॥ ततः श्रीरामचन्द्रं ध्यायेत्। तद्यथा, ॐ कोमलाङ्गम् विशाला-

क्षमिन्द्रनीलसमप्रभम् । दक्षिणांशे दशरथम्पुत्रावेक्षणतत्परम् ।। पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभम् । पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ।। अग्रे व्यग्रहनूमन्तं रामानुग्रहकांक्षिणम्'' ।। ततः शंखस्थजलमादाय, ॐ इन्द्रोऽग्निर्य्यमश्चैव निर्ऋतो वरुणोऽनिलः । कुबेर ईशो ब्रह्मा च दिक्पालाः स्नापयन्तु ते ।। इतिमन्त्रेण स्नापयेत् । ततो यवमादाय, ॐ ! हौं श्री महावीर ! वीरसंभव ! वीरपते ! भगवन् ! श्रीरामचन्द्र ! इहागच्छ इह तिष्ठेत्यावाह्य, स्थापयित्वा फलपुष्पाम्बुपूर्णाशोकपत्रतुलसीदलसंयुक्तं शंखं गृहीत्वा ॐ दशग्रीवविनाशाय जातोऽसि रघुनन्दन ! गृहाणार्घं मया दत्तं प्रसीद परमेश्वर ! ।। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ॐ भगवते श्रीरामाय नमः । ॐ सुगन्धि चन्दनं दिव्यं कर्पूरादिविमिश्रितम् । सीतया भार्य्यया सार्द्धं रक्षोघ्नं परिगृह्यताम् ।। इदमनुलेपनं भगवते श्रीरामचन्द्राय नमः ।। एते तिलयवाः ॐ भगवते श्रीरामाय नमः । ततः पुष्पमादाय ॐ पुष्पन्तु परमं दिव्यं पुण्यं सुरभिसम्भवम् । गृहाण परया भक्त्या मया दत्तं जगत्पते ! ।। एतानि पुष्पाणि ॐ भगवते श्रीरामचन्द्राय नमः । इति त्रिः । एतानि तुलसीदलानि ॐ भगवते श्री रामाय नमः ।। ॐ श्रीरामविबुधाधीश ! सुरासुरवरप्रद !। यज्ञोपबीतं मद्दतं परिधत्स्व रघूद्वह ! । इमे यज्ञोपवीते वृहस्पतिदैवते ॐ भगवते श्रीरामाय नमः । ॐ वासो-युगं गृहाणेश ! तन्तुसंन्तानकल्पितम् । सीतया भार्यया सार्द्धं रक्षोघ्नं परिधीयताम् ।। इदं वासोयुगं बृहस्पतिदैवतम् ॐ भगवते श्रीरामाय नमः ।। ॐ रामचन्द्र ! सुरश्रेष्ठ ! जानक्या भ्रातृभिस्सह ! ! पूजितोऽसि महादेव ! धूपोऽयं प्रतिगृह्यताम् । एष धूपः ॐ भगवते श्रीरामाय नमः ।। ॐ मारीचघ्न ! महाबाहो संग्रामव्यसनप्रभो !। दीपोऽयं गृह्यतां देव त्रैलोक्य तिमिरापहम् ।। एष दीप ॐ भगवते श्रीरामाय नमः ।। ॐ नागवल्लीदलं दिव्यं कर्प्पूरादिसमन्वितम् । ताम्बूलङ्गृह्यतां देव ! प्रीतये मे जगत्प्रभो ! । इदं ताम्बूलं ॐ भगवते श्री रामाय नमः ।। ॐ नैवेद्यं फलपक्वान्नं शर्कराघृतपाचितम् । गृहाण जगतीपाल ! सर्वैर्बन्धुजनैस्सह ।। एतानि नानाविधनैवेद्यानि ॐ भगवते श्रीरामाय नमः । इदमाचमनीयम् ॐ भगवते श्रीरामाय नमः । ॐ नमस्ते पुण्डरीकाक्ष ! त्राहि माम्भवसागरात् । सर्वपापप्रणाशार्थं दण्डवत्प्रणमाम्यहम् । इत्यनेन प्रणामं कुर्य्यात् ।। ॐ यानि कानि कृतानीह पापानि मम जन्मनि । तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ।। अनेन त्रिः प्रदक्षिणं कुर्य्यात् । तत उपविश्य पठेत्–ॐ नमस्ते देवदेवेश ! सुरासुरपते ! जय ! जय कामद ! भक्तानां जयदाशरथे ! प्रभो ।। जय सीतापते ! नाथ ! जय भग्नेशकार्मुक । जय ब्रह्माण्डखण्डेश ! जय रावणमर्द्दन ।। जय बालिकपीशघ्न ! जय सुग्रीवराज्यद ! । जय द्विजगणानन्द ! जय

वायुसुतप्रिय ! ।। इति संकीर्त्यदेवेशं प्रणिपत्य पुनः पुनः । सर्वान् कामानवाप्नोति ततो मोक्षमवाप्नुयात् ।। एष **पुष्पाञ्जलिः** ॐ भगवते श्रीरामाय नमः इति ॥ ।।

ततः **सीतापूजा** ।। ॐ सीते ! इहागच्छ इह तिष्ठेत्यावाह्य, अर्घमादाय ॐ दशाननविनाशाय जाता धरणिसंभवा । मैथिली शीलसम्पन्ना पातु नः पतिदेवता ।। एतानि पाद्यादीनि ॐ सीतायै नमः ।। इदमनुलेपनम् ॐ सीतायै नमः। इदं सिन्दूरं ॐ सीतायै नमः । इदमक्षतम्, इदं पुष्पम्, इदं वस्त्रम् ॐ सीतायै नमः । एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि ॐ सीतायै नमः । ततो **लक्ष्मणपूजा** ।। यवमादाय ॐ लक्ष्मण ! इहागच्छ इह तिष्ठेत्यावाह्य । अर्घमादाय ॐ निहतो रावणिर्य्येन शक्रजिच्छत्रुघातिना । स पातु लक्ष्मणो धन्वी सुमित्रानन्दवर्द्धनः ।। एतानि पाद्यादीनि ॐ लक्ष्मणाय नमः ।। इदमनुलेपनम्, एते तिलयवाः, एतानि पुष्पाणि, ॐ लक्ष्मणाय नमः ।। इमे यज्ञोपवीते बृहस्पतिदैवते०, इदं वस्त्रं बृ० दैवतम् ।। इदं माल्यम्, एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यानि, ॐ लक्ष्मणाय नमः ।। ततोऽष्टदलं लिखित्वा पूर्वदले ॐ **दशरथ** ! इहागच्छ इह तिष्ठेत्यावाह्य अर्घमादाय ! ॐ नानाविधगुणागार ! गृहाणार्घं नृपोत्तम !। रविवंशप्रदीपाय नमो दशरथाय वै ।। एतानि पाद्यादीनि, ॐ दशरथाय नमः । एवं चन्दनादिभिः पूजयेत् ।। आग्नेयदले ॐ **कौशल्ये** ! इहागच्छ इह तिष्ठेत्यावाह्य, अर्घमादाय, ॐ गृहाणार्घं महादेवि ! रम्ये दशरथप्रिये ! । जगदानन्दवन्द्यायै कौशल्यायै नमो नमः ।। एतानि पाद्यादीनि ॐ कौशल्यायै नमः ।। एवं चन्दनादिभिः पूजयेत् ।। याम्यदले ॐ **कैकेयि** ! इहागच्छ इह तिष्ठेत्यावाह्य, अर्घमादाय, ॐ दृढ़प्रतिज्ञे ! कैकेयि ! मातर्भरतवन्दिते । गृहाणार्घं महादेवि ! रक्ष मां भक्तवत्सले ! ।। एतानि पाद्यादीनि ॐ कैकेय्यै नमः । एवं चन्दनादिभिः पूजयेत् ।। नैर्ऋतिदले ॐ **सुमित्रे** ! इहागच्छ इह तिष्ठेत्यावाह्य अर्घमादाय, ॐ शुभलक्षणसम्पन्ने ! लक्ष्मणानन्दकारिणि ! सुमित्रं देहि मे देवि ! सुमित्रायै नमो नमः ।। एतानि पाद्यादीनि ॐ सुमित्रायै नमः । एवं चन्दनादिभिः पूजयेत् । पश्चिमदले ॐ **भरत** ! इहागच्छ इह तिष्ठेत्यावाह्य, अर्घमादाय ॐ भक्तवत्सल ! भव्यात्मन् ! राम भक्तिपरायण ! । भक्त्या दत्तं गृहाणार्घं भरताय नमोनमः ।। एतानि पाद्यादीनि ॐ भरताय नमः । एवं चन्दनादिभिः पूजयेत् ।। वायव्यदले ॐ **शत्रुघ्न** ! इहागच्छ इह तिष्ठेत्यावाह्य, अर्घमादाय ॐ लवणान्तक ! शत्रुघ्न ! शत्रु काननपावक ! । गृहाणार्घं मया दत्तं प्रसीद कुरु मे शुभम् । एतानि पाद्यादीनि ॐ शत्रुघ्नाय नमः । एवं चन्दनादिभिः पूजयेत् ।। उत्तरदले ॐ **सुग्रीव** ! इहागच्छ इह तिष्ठेत्यावाह्य, अर्घमादाय, ॐ सुग्रीवाय नमस्तुभ्यं दशग्रीवान्तकप्रिय ! ।

गृहाणार्घं महावीर ! किष्किन्धानायकप्रभो ! ।। एतानि पाद्यादीनि, ॐ सुग्रीवाय नमः । एवं चन्दनादिभिः पूजयेत् ।। ईशानदले ॐ **हनुमन्निहागच्छ** इह तिष्ठेत्यावाह्य, अर्घमादाय ॐ कूर्म्मकुम्भीरसंकीर्णमुत्तीर्णोऽसि महार्णवम् । हनुमते नमस्तुभ्यं गृहाणार्घं नमोऽस्तुते ।। एतानि पाद्यादीनि ॐ हनुमते नमः । एवं चन्दनादिभिः संपूजयेत् ।। ॐ **विभीषण** ! इहागच्छ इह तिष्ठेत्यावाह्य ॐ विभीषणाय नमः इति पाद्यादिपञ्चोपचारैः पूजयेत् ।। ॐ **जाम्बवन्निहागच्छ** इह तिष्ठेत्यावाह्य, ॐ जाम्बवते नमः इति पाद्यादिपञ्चोपचारैः पूजयेत् ।। ॐ **अङ्गद** ! इहागच्छ इह तिष्ठेत्यावाह्य, ॐ अङ्गदाय नमः इतिपाद्यादिपञ्चोपचारैः पूजयेत् ।। ततोऽष्टदलमध्ये धृष्टि, जयन्त, जय, विजय, सुराष्ट्र, राष्ट्रवर्द्धन, अकोपन, धर्मपाल, सुमन्तून्, पञ्चोपचारैः पूजयेत् ।। तत्र क्रमः ॐ **धृष्टे** ! इहागच्छ इह तिष्ठेत्यावाह्य एषोऽर्घः ॐ धृष्ट्यै नमः । एवं पञ्चोपचारैः सर्वान् सम्पूजयेत् ।।

ततो दलाग्रे इन्द्रादिलोकपालान् पूजयेत् । तत्र क्रमः, पूर्वदलाग्रे इन्द्र ! इहागच्छ इह तिष्ठेत्यावाह्य एषोऽर्घ ॐ इन्द्राय नमः । एवं पञ्चोपचारैः संपूज्य, अग्नि, यम, निर्ऋति, वरुण, वायु, कुबेर, ईशानादीन् सर्वान् पूर्ववत् सम्पूजयेत् ।। तत इन्द्रेशानयोर्म्मध्ये ॐ ब्रह्मन्निहागच्छ इह तिष्ठ ।। एषोऽर्घः ॐ ब्रह्मणे नमः ।। एवं पञ्चोपचारैः पूजयेत् ।। ईशानकुबेरयोर्मध्ये अनन्त ! इहागच्छ इह तिष्ठ । एषोऽर्घः ॐ अनन्ताय नमः एवं पञ्चोपचारैः पूजयेत् । **ततोऽस्त्रपूजा** । गन्धपुष्पाक्षतैः ॐ बज्राय नमः । ॐ शक्तये नमः । ॐ दण्डाय नमः । ॐ खड्गाय नमः । ॐ पाशाय नमः । ॐ अङ्कुशाय नमः । ॐ गदायै नमः । ॐ शूलाय नमः । ॐ चक्राय नमः । ॐ शंखाय नमः । ॐ पद्माय नमः । ततो **नवग्रहान्** पूजयेत् । तत ॐ नल ! इहागच्छ इह तिष्ठ । एषोऽर्घः ॐ नलाय नमः । एवं पञ्चोपचारैः संपूज्य, ॐ नील ! इहागच्छ इह तिष्ठ । एषोऽर्घः ॐ नीलाय नमः । एवं पञ्चोपचारैः पूजयेत् । प्रतिमापूजने सर्वत्र वस्त्रादिकमवश्यं दद्यात् ।

ततः कथां श्रुत्वा नृत्यगीतादिभिरुत्सवं कारयन् दिवसं नीत्वा सायंकाले उक्तमन्त्रेण पुष्पाञ्जलित्रयं दद्यात् । एवं पूजां विधाय रात्रौ नृत्यगीतवाद्यादिभिरुत्सवं कुर्य्यात् ।।

प्रभातसमये पुनः पुष्पाञ्जलित्रयं दत्वा विसर्जनं कुर्य्यात् । तद्यथा ॐ देवदेव ! महाबाहो ! दशग्रीवनिकृतन ! । गृहीत्वा मत्कृतां पूजा स्वस्थानं गच्छ ते नमः ।। ॐ देवपूजां मत्कृतां हि सौभाग्यसुखदां सदा । गृहीत्वा गच्छ स्वस्थानमपराधं क्षमस्व मे ।। ॐ न्यूनाधिकं च यत्किञ्चिन्नवम्याञ्च मया कृतम् । कृपां मयि

विधायेत्थं क्षमस्व पुरुषोत्तम ! ।। ॐ रामचन्द्र सुराधीश ! वैकुण्ठं व्रज पार्थिव !। पूजां मदीयामादाय मम स्वस्तिकरो भव ।। ॐ रूपं देहि जयं देहि भाग्यं भगवन ! देहि मे । धर्म्मान् देहि धनं देहि सर्वान् कामान् प्रदेहि मे । ॐ यान्तु देवगणाः सर्व्वे पूजामादाय मामकीम् । इष्टकामप्रसिध्यर्थं पुनरागमनाय च ।। श्रीरामचन्द्र ! पूजितोसि प्रसीद क्षमस्व स्वस्थानं गच्छ इति विसर्जयेत् । ॐ सीते ! पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ । ॐ लक्ष्मणादयो देवाः पूजितास्थ क्षमध्वं स्वस्थानं गच्छतेति विसर्जयेत् । ततः कुशादिकमादाय ॐ अद्य कृतैतद्रामनवमीव्रतससीत रामादि पूजनतत्कथाश्रवण कर्मप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । यथाशक्तिभूयसीं दक्षिणां दद्यात् । प्रतिमा स्वर्णमयी चेदाचार्याय निवेदयेत् । मृन्मयीचेद् महानद्यां सामान्यजले वा प्रक्षिपेत् । ततो यथावत्स्वयं स्नात्वा नित्यक्रियां च विधाय ब्राह्मणान् भोजयित्वा तेभ्यो दक्षिणां दत्वा स्वयञ्च भुञ्जीत बन्धुभिःसह ।।

*।। इति श्रीरामनवमी पूजाविधिः ।।*

# अथकथा

**नारद उवाच**–व्रतानां यद्व्रतं पुण्यं धर्माणां धर्म्ममुत्तमम् । गुप्तानां यन्महद् गोप्यं तपसां यन्महत्तपः ।।१।। केन पुण्येन विश्वात्मन् ! घोरं संसारसागरम् । मायावर्त्तशताकीर्णं नरस्तरति दुस्तरम् ।।२।। व्रतान्युक्तान्यनेकानि विष्णोः प्रीतिकराणि वै । नाम्नां विष्णोः सहस्राणि पुरा प्रोक्तानि मे प्रभो ।।३।। एकादशीव्रतं प्रोक्तं जागरादिसमन्वितम् । केन व्रतेन सहसा प्रीतो भवति केशवः ।।४।। केन यज्ञेन दानेन तपसा वा जगत्पतिः । प्रीतो भवति विश्वात्मा तन्मे ब्रूहि पितामह ।।५।। **पितामह उवाच**–साधु पृष्टं त्वया वत्स ! लोकानां हितकाम्यया । यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ।।६।। पुरा कैलासशैलस्थं गौरी पृच्छति शङ्करम् । शृणु नारद ! तत्सर्वं यथावत् कथयामि ते ।।७।। चैत्रमासे सिते पक्षे या तिथिर्नवमी भवेत् । सा रामनवमी प्रोक्ता पुण्योपचयकारिणी ।।८।। तस्यामुपोषणं सद्यो विष्णुप्रीतिकरं परम् । इति मत्वा प्रयत्नेन विधानं तत्र मारद ! ।।९।। नारी वा पुरुषो वापि तत्रैवं भक्तियोगतः । पूजां कुर्य्याद्विधानेन जागरां चाप्युपोषणम् ।।१०।। किं भूरदक्षिणैर्यज्ञैः किं तपोभिस्सुदुष्करैः । किं दानेन भवेत्तस्य येन नैतद् व्रतं कृतम् ।।११।। व्रतान्युक्तान्यनेकानि पावनीयानि नारद !। परं श्रीरामनवमीव्रतं जगति दुर्लभम् ।।१२।। कार्तिक्यां पूर्णिमायां वै द्वारकायां द्विजोत्तम । कपिलाकोटिदानस्य फलं प्राप्नोति

तद्व्रती ।।१३।। तेन तप्तं तपस्तीव्रं दत्ता तेन वसुन्धरा । येन चैतत् कृतं सम्यक् श्रीरामनवमीव्रतम् ।।१४।। एकादश्युपवासेन बहुजन्मार्जितेन वै । यत्फलं लभते मर्त्यस्तव चैकोपवासतः ।।१५।। तस्मान्नारद ! नारीभिः पुरुषैश्च समाहितैः । कर्त्तव्यं व्रतमेतत्तु नात्र कार्य्या विचारणा ।।१६।। **नारद उवाच**–भागच्छ्रीरामनवमीमाहात्म्यं प्रोक्तमुत्तमम् । विधिना केन कर्तव्यं तत्सर्वं वक्तुमर्हसि ।।१७।। **ब्रह्मोवाच**–निरामिषं सकृद् भुक्त्वा नरोऽष्टम्यां समाहितः। नवम्यां प्रातरुत्थाय कृतनित्यक्रियः शुचिः ।।१८।। नानाविधानि पुष्पाणि नैवेद्यान्यपि चाहरेत् । ततः सुविस्तरे पुण्ये मण्डपे सुपरिष्कृते ।।१९।। निर्म्मायाष्टदलं पद्मं पूजयेत्तद्दिने दले । तन्मध्ये रामचन्द्रस्य मूर्त्तिवल्लक्ष्मणस्य च ।।२०।। सीतायाश्च प्रकर्तव्या पूजयेत्तां समाहितः । भक्त्या दशरथं तत्र नरः पूर्वदलेऽर्चयेत् ।।२१।। वह्निकोणे दले कुर्य्यात् कौशल्यायाः प्रपूजनम् । याम्ये दले च कैकेय्याः सुमित्रायाश्च नैर्ऋते ।।२२।। वरुणे भरतस्यापि शत्रुघ्नस्य च मारुते । सुग्रीवस्य च कौबेरे तथैशान्यां हनूमतः ।।२३।। एवमष्टदले पूज्याः पाद्यार्घादिभिरुत्तमैः । अर्घमंत्रान् प्रयत्नेन श्रृणु नारद ! विस्तरात् ।।२४।। ॐ दशग्रीवविनाशाय जातोऽसि रघुनन्दन । गृहाणार्घं मया दत्तं प्रसीद पुरुषोत्तम ।।२५।। ॐ दशग्रीवविनाशय जातासावनिसम्भवा । मैथिली शीलसम्पन्ना पातु नः पतिदेवता ।।२६।। ॐ निहतो रावणिर्य्येन शत्रुजिच्छत्रुघातिना । स पातु लक्ष्मणो धन्वी सुमित्रानन्दवर्द्धनः ।।२७।। नानाविधगुणागार ! गृहाणार्घं नृपोत्तम । रविवंशप्रदीपाय दाशरथाय ते नमः ।।२८।। गृहाणार्घं मया देवि ! रम्ये ! दशरथप्रिये ! । जगदानन्दवन्द्यायै कौशल्यायै नमोनमः ।।२९।। ॐ दृढ़प्रतिज्ञे ! कैकेयि ! मातर्भरतवन्दिते । गृहाणार्घं महादेवि ! रक्ष मां भक्तवत्सले ।।३०।। ॐ शुभलक्षणसंपन्ने । लक्ष्मणानन्दवर्द्धिनि । सुमित्रं देहि मे देवि ! सुमित्रायै नमो नमः ।।३१।। ॐ भक्तवत्सल ! भव्यात्मन् ! रामभक्तिपरायण । भक्त्या दत्तं गृहाणार्घं भरताय नमोनमः ।।३२।। ॐ लवणान्तक ! शत्रुघ्न ! शत्रुकाननपावक । गृहाणार्घं मया दत्तं प्रसीद कुरु मे शुभम् ।।३३।। ॐ सुग्रीवाय नमस्तुभ्यं दशग्रीवान्तकप्रिय ! गृहाणार्घं महाबाहो ! किष्किन्धानायक ! प्रभो ।।३४।। ॐ कूर्म्मकुम्भीरसङ्कीर्णमुत्तीर्णोसि महार्णवम् । हनूमते नमस्तुभ्यं गृहाणार्घं महामते !।।३५।। एभिर्मन्त्रैः प्रदातव्यो योर्घो नारद ! भक्तितः । पुष्पैर्गन्धैश्च धूपैश्च कर्त्तव्यो विधिनाऽमुना ।।३६।। नृत्यवादित्रगीतैश्च कुर्य्याज्जागरणं निशि । य एवं कुरुते विप्र ! रम्यं रामव्रतं शुभम् ।।३७।। तं दृष्ट्वा शत्रवो यान्ति दूरं भयसमन्विताः । पुत्रार्थी लभते पुत्रं राज्यार्थी राज्यमाप्नुयात् ।।३८।। मोक्षार्थी लभते मोक्षं धनार्थी तु धनं लभेत् । ब्राह्मणो

धर्ममाप्नोति क्षत्रियो यज्ञमुत्तमम् ।।३९।। वैश्यो धनसमृद्धिञ्च शूद्रः प्राप्नोति सद्गतिम् । अयोध्यायां मुनिश्रेष्ठ ! य एतत्कुरुते व्रतम् ।।४०।। पितरस्तस्य तृप्यन्ति वर्षकोटिशतानि च । स्नात्वा वै सरयूतोये कृत्वा रामव्रतं शुभम् ।।४१।। न जातु लभते जन्तुर्जन्मसंसारबन्धनम् ! गयायां पिण्डदानेन यत्फलं कथितं मुने ! ।।४२।। तत्फलं कोटिगुणितमयोध्यायां कृते व्रते । नारीभिः पुरुषैर्वापि पुरुषार्थम-भीप्सुभिः ।।४३।। कर्त्तव्यञ्च प्रयत्नेन भुक्तिमुक्तिशुभप्रदम् । यो नरः कुरुते भक्त्या व्रतं रामस्य दुर्लभम् ।।४४।। पुत्रं सौभाग्यमैश्वर्य्यं लभते नात्र संशयः । श्रीरामनवमीं प्राप्य भुङ्क्ते या वरवर्णिनी ।।४५।। लभते सा मुनिश्रेष्ठ ! वैधव्यं जन्मजन्मनि । व्रतमेतन्मया प्रोक्तं मुने ! गुह्यतरं महत् ।।४६।। रक्षणीयं प्रयत्नेन न देयं यस्य कस्यचित् । रामभक्ताय शुद्धाय शान्ताय निर्मलात्मने ।।४७।। दातव्यं व्रतमेतत्तु सर्वकामफलप्रदम् । ततः प्रभाते सम्प्राप्ते स्वर्णादिप्रतिमा शुभा ।।४८।। आचार्य्याय प्रदातव्या मृन्मयीं तु विसर्जयेत् । स्नात्वा तु विधिना विप्र ! सरयूं पूजयेत् ततः । विप्रेभ्यो दक्षिणां दत्वा स्वयं पारणमाचरेत् ।।४९।।

*।। इति श्रीब्रह्मपुराणे ब्रह्मनारदसंवादे श्रीरामनवमीव्रतमाहात्म्यं संपूर्णम्।*

*ततः पूजितदेवान् विसृज्य दक्षिणां दद्यात् ।।*

# अथ हनुमद्ध्वजदानविधिः

तत्र पूजास्थानं गोमयेनोपलिप्य सपादहस्तद्वयपरिमितं गर्तं खनित्वा तदासन्ने उपरितनप्रदेशे पूजां कुर्यात् । तत्र सङ्कल्पः कुशत्रयतिलजलान्यादाय–ॐअद्येत्यादि अमुकगोत्रस्य सपरिवारस्य मम श्री अमुकशर्मणः उपस्थितशरीराविरोधेन सकलोपद्रवनिवृत्तिपूर्वकदीर्घायुष्ट्वबलपुष्टिनैरुज्यधनारिजनसुखसौमनस्या-भीष्टसिद्धिकामः (पूर्वाङ्गीकृतं) हनुमद्ध्वजदानं[1] तदङ्गदेवतापूजनञ्चाहं करिष्ये । इति सङ्कल्प्य तिलेन ॐ भूर्भुवः स्वः श्रीससीतरामलक्ष्मणाविहागच्छतम्, इह तिष्ठतम्, इत्यावाह्य, एतानि पाद्यादीनि ॐ ससीतरामलक्ष्मणाभ्यां नमः । एवं चन्दनाक्षतपुष्पधूपनैवेद्यानि दद्यात् । ततः ॐ भूर्भुवः स्वर्वायो इहागच्छ, इह तिष्ठेत्यावाह्य, एतानि पाद्यादीनि ॐ वायवे नमः । एवं गन्धादिभिः पूजयेत् । ततः ॐ नवग्रहा इहागच्छत, इह तिष्ठत, एतानि पाद्यादीनि ॐ नवग्रहेभ्यो नमः । एवं

---

१. ध्वजयोग्यवंशलक्ष्म–सरलश्छिद्ररहितो निर्व्रणो मूलसंयुतः । दशहस्ताधिको ग्राह्यो वंशस्तु ध्वजहेतवे ।। सिन्दूरपिष्टलिप्ताङ्गो रक्तवस्त्रपताककः । अनुच्छिष्टोऽनुल्लङ्घितः साग्रमूलोध्वजो मतः ।। कुजवारे नवम्यां वाऽन्यस्यां शुभतिथौ दिने । सार्धयामोत्तरे काले ध्वजदानविधिः शुभः ।।

गन्धादिभिः पूजयेत् । तत ॐ इन्द्रादिदशदिक्पाला इहागच्छत इह तिष्ठत, इत्यावाह्य एतानि पाद्यादीनि ॐ इन्द्रादिदशदिक्पालेभ्यो नमः, एवं गन्धादिभिः पूजयेत् । ततस्ताम्रपत्रे सिन्दूरेण रक्तचन्दनेन वा षट्कोणं यन्त्रं विलिख्य तदुपरि हनुमन्तं पूजयेत् । तत्र रक्तपुष्पमेकं गृहीत्वा—ॐ तप्तकाञ्चनसङ्काशं हृदये विहिताञ्जलिम् । किरीटिनं कुण्डलिनं ध्यायेद्वानरनायकम् ॥ इति ध्यात्वा ॐ हनुमन्निहागच्छ इह तिष्ठ इत्यावाह्य—ॐ आञ्जनेय महाबाहो रामकार्यार्थतत्पर । गृहाणार्घ्यं मया दत्तं मम कार्यं च साधय ॥ एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ॐ हनुमते नमः । इदमनुलेपनम्, इदं रक्तचन्दनम्, इदं सिन्दूरम्, इदमक्षतम् हनुमते नमः । ततः पुष्पाण्यादाय—ॐ नानागन्धसमायुक्तं देवतानां सुखावहम् । गृहाण कुसुमं देव वायुपुत्र सुखावहम् । एतानि पुष्पाणि हनुमते नमः । इदं वस्त्रं बृहस्पतिदैवतं हनुमते नमः । इमे यज्ञोपवीते बृहस्पतिदैवते हनुमते नमः । इदं माल्यम्, एष धूपः, एष दीपः हनुमते नमः ॥ एतानि लड्डुकानि, इदमाचमनीयं हनुमते नमः । इदं ताम्बूलं हनुमते नमः । एष पुष्पाञ्जलिः हनुमते नमः ।

ततो गर्तं खनित्वा तस्मिन् ॐ पृथिवि इहागच्छ इह तिष्ठेत्यावाह्य, एतानि पाद्यादीनि पृथिव्यै नमः । एवं गन्धादिभिः सम्पूज्य तत्र फलद्रव्ये दत्वा ध्वजमारोप्य मृत्तिकया परितः चतुरस्रां पिण्डिकां निर्माय ततोऽक्षतमादाय—ॐ सपताकध्वज इहागच्छ इह तिष्ठ, एतानि पाद्यार्घाचमनीयानि ॐ सपताकध्वजाय नमः । ततश्चन्दनाक्षतपुष्पैः सम्पूज्य एतानि मोदकसहितानि लड्डुकानि सपताकध्वजाय नमः । एवं सम्पूज्य अमुं सपताकध्वजं विष्णुदैवतं ॐ हनुमतेऽहं ददे। ततः सति सम्भवे अग्निं संस्थाप्य ॐ हनुमते नमः स्वाहेति मन्त्रेणाष्टोत्तरशतवारं घृताक्तपवित्रप्रादेशमात्रेण इन्धनेन हवनं कृत्वा—ॐ देवासुराणां सर्वेषां मङ्गलोऽयं महाध्वजः। गृह्यतां सुखहेतोर्मे ध्वजः श्रीपवनात्मज ॥ इदं सपताकध्वजं श्री हनुमते नमः ।

**ततो हनुमत्प्रणाममन्त्राः**—ॐ अञ्जनीगर्भसम्भूतं वायुपुत्रं महाबलम् । सीताशोक-विनाशाय सुग्रीवस्य सदा प्रियम् ॥ प्रणमामि सदा भक्त्या सर्वविघ्नविनाशनम् । रक्षोघ्नं वरदं शीघ्रं गदितं सर्वकामदम् ॥ रामेष्टफाल्गुनसखं रसिनः सुखकारकम् । समुद्रलङ्घनं देवं कार्यसिद्ध्यै नमाम्यहम् ॥

**एभिर्मन्त्रैर्दण्डवत्प्रणम्य**—ॐ रूपं देहि जयं देहि भाग्यं वायुज ! देहि मे । पुत्रान् देहि धनं देहि सर्वान् कामान् प्रदेहि मे ॥ इति वरं सम्प्रार्थ्य पूजनक्रमेण पूजित देवताः विसृज्य दक्षिणां कुर्य्यात्। कुशत्रयतिलजलान्यादाय ॐ अद्य कृतैतद्धनुमत्पूजनतद्ध्वजारोपणकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानाम-

गोत्राय ब्राह्मणाय दक्षिणामहं ददे। इति दक्षिणां कृत्वा प्रसादं विप्रेभ्यो दत्त्वा यथाशक्ति ब्राह्मणभोजनं च कारयेत्।

*॥ इति हनुमद्ध्वजदानविधिः ॥*

# अथ कामदेवपूजाविधिः ॥

अथ चैत्रशुक्लत्रयोदश्यां दमनकवृक्षे शालग्रामे जले वा कामदेवं पूजयेत्। **तद्यथा** ॐ अद्य चैत्रे मासि शुक्ले पक्षे त्रयोदश्यां तिथावमुक गोत्रस्यामुक-**शर्म्मणः** पुत्रपौत्रविवर्द्धनसर्वापद्विमुक्तिकामः कामदेवपूजनमहङ्करिष्ये इति-संकल्प्य, ॐ चापेषुधृक् कामदेवो रूपवान्विश्वमोहनः। इतिध्यात्वा एतानि पाद्यादीनि ॐ कामदेवाय नमः इति। एवं गन्धादिभिर्द्दशोपचारैः सम्पूज्य अञ्जलिंबद्ध्वा ॐ पुष्पधन्वन्नमस्तेस्तु नमस्ते मीनकेतन !। मुनीनां लोकपालानां धैर्यच्युतिकृते नमः ॥ माधवात्मज ! कन्दर्प्प ! शँव्वरारे ! रतिप्रिय !। नमस्तुभ्यं जिताशेष-भुवनाय मनोभुवे ॥ आधयो मम नश्यन्तु व्याधयश्च शरीरजाः। सम्पद्यतामभीष्टम्मे सम्पदः सन्तु मे स्थिराः ॥ नमो माराय कामाय देवदेवस्य मूर्त्तये। ब्रह्मविष्णुशिवेन्द्राणां मनःक्षोभकराय च ॥ इत्येतैः संप्रार्थ्य गीतवाद्यादिभिः सन्तोष्य तत्प्रीतये जुगुप्सितञ्च ब्रूयात्। तत ॐ कामदेव पूजितोऽसि प्रसीद क्षमस्वेति विसृज्य ब्राह्मणान् भोजयेत्। स्वयञ्च भुञ्जीतेति। एवं चतुर्द्दश्यां वा कुर्यात्। इति मदनपूजाविधिः ॥

चैत्री पूर्णिमायाम् ब्राह्मे, मन्दे वार्के गुरौ वापि वारेष्वेतेषु चैत्रिका। तत्राश्वमेधजं पुण्यं स्नानश्राद्धादिभिर्लभेत् ॥

*॥ इति चैत्रकृत्यम् ॥*

# अथ वैशाखकृत्यम्

## प्रातः स्नानम्

तत्र मेषस्थे रवौ प्रात:स्नानदिकर्म्म कुर्य्यात्। तथाच विष्णुस्मृति पाद्मयोः, तुलामकर मेषेषु प्रात:स्नानं विधीयते। हविष्यम्ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥ इति ॥ उदयात्प्रागेव जलाशयङ्गत्वा ॐ माधवे मेषगे भानौ मुरारे ! मधुसूदन ! प्रात:स्नानेन मे नाथ ! फलदो भव पापहन् !॥ इति पठित्वा स्नायात् ॥ सङ्कल्पस्तु ॐ अद्येत्यादिसकलपापक्षयपूर्वकमाधवप्रीतिकामोऽद्यादिमासं व्याप्य प्रत्यहं प्रात:स्नानमहङ्करिष्ये ॥ एवं चान्द्रस्नानेऽप्यूह्यम् ॥

**अत्र संक्रान्तौ घटदानं कुर्वन्ति**। तथाहि, पुण्यकाले नूतनं वारिपूर्णघटं

पुष्पादिनाऽभ्यर्च्य [१] ॐ एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः । अस्य प्रदानात्सफलाः मम सन्तु मनोरथाः ।। इति मन्त्रेण घटं जलेन सिक्त्वा ॐ अद्येत्यादिमेषार्कसंक्रमणप्रयुक्तपुण्यकाले सकलपापक्षयपूर्वकैहिकसकलमनोरथसिद्धिपूर्वकान्तकालिकस्वर्गप्राप्तिकामोऽमुं जलपूर्णं धर्म्मघटं ब्रह्मविष्णुशिवात्मकं वरुणदैवतं यथानाम गोत्राय ब्रह्मणायाहं ददे । ॐ अद्य कृतैतद्धर्म्मघटदानप्रतिष्ठार्थमेतद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । इति दद्यात् प्रतिपादयेच्च ।। यदि मासं व्याप्य दीयते तदा एवं वाक्यम् । काम इत्यन्तमुक्त्वाऽद्यादि मासं व्याप्य प्रत्यहं जलपूर्णघटं वरुणदैवतं यथेत्यादि अथवा बहुरसोपस्थितिवियदधिकरणपूज्यत्वकामोऽद्यादिमासं यावत्प्रतिदिनं घटपरिमितजलं वरुणदैवतं यथेत्यादि इति दद्यात् ।।

अत्र मासं व्याप्य पुनर्ज्जन्माभावकामो **मधुद्विषं तुलसीपत्रेण** पूजयेत् । तथाहि तुलसीकृष्णगौराख्या ततोऽभ्यर्च्य मधुद्विषम् । विशेषेण तु वैशाखे नरो नारायणो भवेत् ।। अन्यदपि, माधवं सकलं मासं तुलस्या मेऽर्चयेन्नरः । त्रिसन्ध्यं मधुहन्तारं नास्ति तस्य पुनर्भवः ।। तथा, प्रातः स्नात्वा विधानेन माधवे माधवप्रियम् । योऽश्वत्थमूलमासिञ्चेत्तोयेन बहुना सदा । कुर्य्यात्प्रदक्षिणं तं तु सर्वदेवमयं ततः । पितृदेवमनुष्यांश्च तर्पयेत्सचराचरम् ।। योऽश्वत्थमर्चयेद्देवमुदकेन समन्ततः । कुलानामयुतं तेन तारितं स्यान्न संशयः ।। कण्डूय पृष्ठतो गां तु स्नात्वा पिप्पलतर्प्पणम् । कृत्वा गोविन्दमभ्यर्च्य न दुर्गतिमवाप्नुयुः ।। तथा, एकभुक्तमथो नक्तमयाचितमतन्द्रितः । माधवे मासि यः कुर्य्याल्लभते सर्वमीप्सितम् ।। वैशाखे विधिना स्नानं देवनद्यादिके बहिः । हविष्यं ब्रह्मचर्यञ्च भूशय्या नियमस्थितिः ।। व्रतं दानं दमो देवि ! मधुसूदनपूजनम् । अपि जन्मसहस्रोत्थं पापं दहति दारुणम् । इत्येतैर्ब्रह्मपुराणीयवचनैरुक्तफलकामस्तत्तदुक्तकर्म्म कुर्य्यात् । संकल्पस्तु ऊहनीयः ।। पुनः मदनरत्ने स्कान्दे—**प्रपा कार्य्या** च वैशाखे देवे देया गलन्तिका । उपानद्व्यजनच्छत्रसूक्ष्मवसांसि चन्दनम् ।। जलपात्राणि देयानि तथा पुष्पगृहाणि च । यानि कानि च चित्राणि द्राक्षारम्भाफलान्यपि ।। अन्यच्च तिथितत्त्वे, ददाति यो हि मेषादौ सक्तूनम्बुघटान्वितान् ।। पितॄनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते ।। इतिब्रह्मपुराणम्। अस्मिन्नेव दिने **यवदानं** कुर्व्वन्ति । तत्र प्रकारः ॐ यवेभ्यो नमः इति त्रिः संपूज्य कुशरूपब्राह्मणं त्रिः संपूज्य जलेन सिक्त्वा कुशमादाय ॐ अद्येत्यादि

---

१. पुष्पचन्दनाक्षतैः त्रिवारं घटे—ओं वारिपूर्ण घटाय नमः । कुशोपरि त्रिवारम् ॐ ब्राह्मणाय नमः इति ।

मेषार्कसंक्रमणप्रयुक्त पुण्यकाले अमुकगोत्रेत्यादि विष्णुप्रीतिकामः स्वर्गप्राप्तिकामो वा एतान् यवान् विष्णुदैवतान् यथेत्यादिवाक्येन यवान् दद्यात् । ॐ अद्य कृतैतद्यवदानप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामेत्यादिना दक्षिणाञ्च दत्वा प्रतिपादयेत् । अन्यान्यपि पूर्णघटव्यजनादीनि यथाशक्ति उत्सृज्य ब्राह्मणाय दद्यात् ॥

## अक्षयतृतीयाकृत्यम्

अत्र दानमावश्यकम् । विष्णुधर्म्मोत्तरे, वैशाखे शुक्लपक्षे तु तृतीयायां द्विजोत्तम ! । यद्ददाति नरश्रेष्ठ ! तद्दाताऽक्षयमश्नुते ॥ तथा च स्मृति समुच्चये बैशाखे मासीत्युपक्रम्य, योऽस्यां ददाति करकान् वारिवाजसमन्वितान् । स याति पुरुषोवीर । ! लोकान् वै हेममालिनः ॥ भविष्येऽपि, उदकुम्भान् सकनकान् सान्नान् सर्वरसैस्सह । यवगोधूमचणकान् सक्तुदध्योदनं तथा ॥ ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते ॥ पुनर्देवीपुराणे, तृतीयायान्तु वैशाखे रोहिण्यर्क्षे प्रपूज्य तु । उदकुम्भप्रदानेन शिवलोके महीयते ॥ एष धर्म्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः । अस्य प्रदानात्तृप्यन्तु पितरोऽपि पितामहाः ॥ गन्धोदकतिलैर्म्मिश्रं सान्नं कुम्भं फलान्वितम् । पितृभ्यः संप्रदास्यामि अक्षय्यमुपतिष्ठतु ॥ इति मन्त्रं पठित्वा सान्नं गन्धोदकतिलफलसहितं कुम्भम्पितृभ्यो दद्यात् । अस्यां गङ्गास्नाने सकलापापक्षयं फलम् । मूलन्तु निबन्धान्तरे द्रष्टव्यम् । संकलपस्तु विस्तर भयान्नलिखितः ॥ कौशिक्यां स्नाने अश्वमेधयज्ञजन्यं फलम् । कुजशनिशुक्रेतरवारे जन्मनन्दा-रिक्तात्रयोदशीतरतिथौ जन्मत्रयपञ्चमतारेतरेषु पूर्वफल्गुनीपूर्वभाद्रपूर्वाषाढा-मघाभरण्याश्लेषार्द्राजन्मनक्षत्रेतरेषु यवेन पार्वणङ्कर्तव्यम् । मेषसंक्रान्तावक्षयतृतीया-याञ्च उक्तनिषिद्धकालेऽपि विशेषतः कर्तव्यम् ।

## अथ श्रीजानकीनवमीव्रतनिर्णयः

**आगमे**–वैशाखस्य सितपक्षे नवम्यां जनकात्मजा । आविर्बभूव लोकानां हिताय जगदम्बिका ।

**बृहद्विष्णुपुराणे**–महर्षिभिः समादिष्टो मार्गेण मिथिलाधिपः । माधवे धवले पक्षे नवम्यां यज्ञमारभत् ॥ स्वर्णलाङ्गलमादाय विचकर्ष महीतलम् । तत्र पुत्री समुत्पन्ना तां तदा गृहमानयत् ॥ जानकी तेन वै नाम्ना विख्याता भुवनत्रये । कदाचिन्नारदो योगी तत्रागत्य महामुनिः ॥ सीतेति नाम्ना चाभाष्य रहस्येतदुपादिशत् ॥

**व्रतनिर्णयस्तत्रैव**–वैशाखस्य सिते पक्षे नवमी मघासंयुता । सैव मध्याह्नयोगेन शस्यते व्रतकर्मणि ॥ निरृक्षापि तिथिर्ग्राह्या नवमीशब्दसंग्रहात् । तिथिक्षये

तिथेर्वृद्धौ शुद्धा विद्धापि वा पुनः ।। मध्याह्नव्यापिनी ग्राह्या कर्मकालस्तु शस्यते । परैव शस्यते तज्ज्ञैर्मध्याह्ने चेद् दिनद्वये ।। दिनद्वयेप्यतद्व्याप्तौ तदा सा गृह्यते परा । दशम्यां पारणं शस्तं दशमीं नैव लंघयेत् ।।

**प्रतिमानिर्माणप्रकारोपि तत्रैव**—निर्माय मण्डपं श्रेष्ठं तत्र पूजनमाचरेत् । ज्ञानमुद्राधरं रामं वीरासनसमाश्रयम् ।। दिव्यसिंहासनासीनं न्यसेदष्टदलाम्बुजे । श्रीरामवामभागस्थां सीतां सर्वाङ्गशोभनाम् ।। नीलपद्मधरां देवीं करायेत् साधकोत्तमः । मिथिलाधीश्वरं पार्श्वे जनकं तत्र स्थापयेत् । लक्ष्मणं पश्चिमे भागे धृतच्छत्रं सचामरम् । पार्श्वे भरतशत्रुघ्नौ तालवृन्तकराम्बुजौ ।। आञ्जनेयं तथैवाग्रे एवं वै प्रतिमा क्रमात् ।।

**पूजनप्रकारोऽपि तत्रैव**—पूजा स्याद् वैष्णवे पीठे वेदिकोपरि संस्थिते । प्राणप्रतिष्ठामन्त्रैश्च न्यसेत् प्रणान् प्रयत्नतः ।। संस्कारान् विधिवत् कृत्वा देवमावाह्य पूजयेत् । आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।। मधुपर्काचमनं स्नानं वासो यज्ञोपवीतकम् । गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ।। ताम्बूलं चेति रामस्य सीतायाश्चापि पूजने । यज्ञसूत्रोपचारे तु सीतायै भूषणं न्यसेत् ।। अन्येषां नाममात्रेण चतुर्थ्या नमसा सह । एवं होमोपि कर्त्तव्यैस्तर्पणस्यैव वै क्रमः ।। पुनः शङ्खे जलं ग्राह्यमर्घ्यं दद्याद्विचक्षणः ।

'रामभद्र महेष्वास रघुवीर नृपोत्तम । गृहाणार्घ्यं मया दत्तं कृपया रघुनन्दन ।।'
'उत्पन्नासि महाभागे स्वर्णलाङ्गलपद्धतौ । गृहाणार्घ्यं मया दत्तं कृपया मिथिलेशजे ।।'

## अथ श्रीजानकीनवमीव्रतपूजाविधिः

वैशाखशुक्लनवम्यां कृतनित्यक्रियो व्रती पूजास्थानमागत्य पञ्चदेवतां विष्णुं च सम्पूज्य कुशत्रयतिलजलान्यादाय—ॐअद्य वैशाखे मासि शुक्ले पक्षे नवम्यां तिथौ मम श्री अमुकशर्मणः सपरिवारस्य उपस्थितशरीराविरोधेन दीर्घायुष्ट्वबलपुष्टिनैरुज्यप्राप्तिपूर्वकधनधान्यसन्ततिसुखान्वितत्वनिखिलमनोऽभिलषितफलप्राप्तिकामो लक्ष्मणादिसहित श्रीरामजानकीपूजनमहं करिष्ये । इति संकल्प्य शान्तिकलशं[1] प्रतिष्ठाप्य प्रथमं सूर्यादिनवग्रहान् दशदिक्पालांश्च पूजयेत् । ततः प्रतिमायां—

ॐ श्रीरामचन्द्रोसि ! ॐ श्रीजानक्यसि । ॐ श्रीजनकोसि । ॐ श्रीलक्ष्मणोसि । ॐ श्रीभरतोसि । ॐ शत्रुघ्नोसि । ॐ श्रीहनूमानसि ।

इति प्रतिमासत्त्वे प्रत्येकं नामकरणं कृत्वा कुशत्रतिलजलान्यादाय—ॐ मनोजूतिर्जुष-

१. द्रष्टव्यम्—पृ० १९७

तामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमं दधातु विश्वेदेवास इह मादयन्तामोंप्रतिष्ठ ॐ भूर्भुवः स्वः श्रीरामचन्द्रजानक्याविहागच्छतमिह तिष्ठतम् । इति पठित्वा अनेनैव क्रमेण जनकादीनपि नामग्रहणपूर्वकमुक्तमन्त्रेण प्रतिष्ठापयेत् ।

ततः करकच्छपिकां बद्ध्वा--ॐआवाहयामि विश्वेशं जानकीवल्लभं विभुम् । कौशल्यातनयं विष्णुं श्रीरामं प्रकृतेः परम् ।। ॐ आवाहयाम्यहं सीते सर्वकामार्थसिद्धये । अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु । इत्यावाह्य– ॐ राजाधिराज राजेन्द्र रामचन्द्र महीपते । रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो ।। ॐ नानाप्रभाभिराकीर्णं नानावर्णविचित्रतम् । आसनं कल्पितं देवि प्रीत्यर्थं प्रतिगृह्यताम् ।। इमे आसने श्रीरामजानकीभ्यां नमः । ॐ त्रैलोक्यपावनानन्त नमस्ते रघुनायक । पाद्यं गृहाण राजर्षे नमो राजीवलोचन ।। ॐ गङ्गादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम् । पाद्ये तेऽहं प्रदास्यामि गृहाण परमेश्वरि ।। इमे पाद्ये श्री रामजानकीभ्यां नमः । ॐ रामभद्र महेष्वास रघुवीर नृपोत्तम। गृहाणार्ध्यं मया दत्तं कृपया रघुनन्दन ।। उत्पन्नासि महाभागे स्वर्णलाङ्गलपद्धतौ । गृहाणार्घ्यं मया दत्तं कृपया मिथिलेशजे ।। इमे अर्घ्ये० । ॐ नमः सत्याय शुद्धाय नित्याय ज्ञानरूपिणे । गृहाणाचमनं नाथ सर्वलोकैकनायक ।। ॐ कर्पूरावासितं तोयं मन्दाकिन्याः समाहृतम् ।। आचम्यतां महामाये मया दत्तं हि भक्तितः ।। इमे आचमनीये० । ॐ पयो दधि घृतं चैव मधुशर्करयान्वितम् । पञ्चामृतेन स्नपनं गृहाण 'परमेश्वर' (परमेश्वरि) ।। इमे पञ्चामृतस्नानीये० । ॐ जाह्नवीजलमत्यनतं पवित्रकरणं परम् स्नानार्थन्तु मयानीतं स्नानं कुरु जगत्पते ।। ॐ ज्ञानमूर्ते महामाये दिव्यरूपे सुरेश्वरि । स्नानं गृहाण देवि त्वं नारायणि नमोऽस्तु ते ।। इमे शुद्धोदकस्नानीये० । इमे आचमनीये० । ॐ तन्तुसन्तानसंयुक्तं कलाकौशकल्पितम् । सर्वाङ्गाभरणं 'देव' (देवि) वाससी परिधीयताम् ।। इमे पीतवस्त्रे बृहस्पतिदैवते० । ॐ श्रीराम विबुधाधीश सुरासुरवरप्रद । यज्ञोपवीतं मद्दत्तं परिधत्स्व रघूत्तम् ।। इमे यज्ञोपवीते बृहस्पति दैवते श्रीरामचन्द्राय नमः । ॐ अलङ्कारान् महादिव्यान् नाना रत्नविनिर्मितान् । गृहाण वरदे देवि प्रसीद परमेश्वरि ।। इदमलङ्करणं श्रीजानक्यै नमः । ॐ मलयाचलसम्भूतं नानागन्धसमन्वितम् । शीतलं बहुलामोदं गृहाण 'वरदो भव' ('वरदे शुभे') एतानि श्रीखण्डचन्दनानि० । ॐ सिन्दूरं सर्वसाध्वीनां भूषणाय विनिर्मितम् । गृहाण वरदे देवि भूषणानि प्रयच्छ मे ।। इदं सिन्दूराभरणं श्रीजानक्यै नमः । ॐ तिला यवाः सुरश्रेष्ठ कम्बूजाश्च सुशोभनाः । वासुदेव जगन्नाथ प्रीत्यर्थं स्वीकुरु प्रभो ।। एते यवतिला ॐ श्रीरामचन्द्राय नमः । ॐ अक्षतं धान्यज देवि ब्रह्मणा निर्मितं

पुरा। प्राणदं सर्वभूतानां गृहाण वरदे शुभे ।। इदमक्षतं श्रीजानक्यै नमः । ॐ सुगन्धीनि सुपुष्पाणि देशकालोद्भवानि च । मयानीतानि पूजार्थं प्रीत्या स्वीकुरु 'महेश्वर' ('महेश्वरि') ।। एतानि पुष्पाणि ॐ श्रीरामजानकीभ्यां नमः। ॐ तुलसी हेमरूपां च रत्नरूपां च मञ्जरीम् । भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् । एतानि तुलसीपत्राणि श्रीरामचन्द्राय नमः । एतानि दूर्वादलानि० ॐ नानापुष्पविचित्राढ्यां पुष्पमालां सुशोभनाम् । प्रयच्छामि 'च राजर्षे गृहाण परमेश्वर' (सदा भद्रे गृहाण परमेश्वरि) ।। इमे पुष्पमाल्ये श्रीरामजानकीभ्यां नमः । ॐ नमः सत्याय शुद्धाय नित्याय ज्ञानरूपिणे । गृहाणाचमनं नाथ जानकीसहितप्रभो ।। इमे आचमनीये श्रीरामजानकीभ्यां नमः। ॐ रामचन्द्र सुरश्रेष्ठ जानक्या भ्रातृभिः सह । पूजितोऽसि महादेव धूपोऽयं प्रतिगृह्यताम् ।। गुग्गुलं घृतसंयुक्तं नानाभक्ष्यैश्च संयुतम् । दशाङ्गं गृह्यतां धूपं सीते देवि नमोऽस्तुते। एतौ धूपौ० । ॐ सुप्रकाशो महान्दीपः सर्वतस्तिमिरापहः । स बाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।। एतौ दीपौ० । ॐ दिव्यान्नरससंयुक्तं ननाभक्ष्यैस्तु संयुतम् । चोष्यपेयसमायुक्तं परमान्नं प्रगृह्यताम् ।। एतानि नैवेद्यानि० । ॐ नमस्ते देव देवेश सर्वतृप्तिकरं परम् । अखण्डानन्दसम्पूर्णं गृहाण जलमुत्तमम् ।। ॐ पानीयं शीतलं स्वच्छं कर्पूरादि-सुवासितम् । भोजने तृप्तिकृद्यस्मात् कृपया गृह्ण जानकि ।। इदमाचमनीयम्० । ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् । इमे ताम्बूले० ।

**ततः प्रार्थना** :—ॐ नमस्ते पुण्डरीकाक्ष त्राहि मां भवसागरात् । सर्वपाप-प्रणाशार्थं दण्डवत् प्रणमाम्यहम् ।। ॐ दशाननविनाशाय जाता धरणिसम्भवा । मैथिलीगुणसम्पन्ना पातु नः पतिदेवता ।। इति प्रणम्य पार्श्वे मिथिलाधीश्वरं जनकं यथोपचारैः सम्पूज्य अर्घ्यं तस्मै निवेदयेदनेन—ॐ विदेहाधिप राजेन्द्र मिथिलेश कृपानिधे । गृहाणार्घ्यं मया दत्तं सर्वसिद्धिं प्रयच्छ मे ।। ततो लक्ष्मणं भरतं शत्रुघ्नं हनुमन्तं च यथोपचारैः पूजयेत् । ततः श्रावणकृत्यान्तपरिशिष्टोक्तविधिना अग्नि[1] संस्थाप्य 'ॐ श्रीरामजानकीभ्यां नमः स्वाहा' इति मूलमन्त्रेण अष्टोत्तरशतं सहस्रंवा आज्याहुतीर्जुहुयात् ।

ततो वर्षकृत्यद्वितीयभागोक्तं मिथिलामाहात्म्यं श्रुत्वा नृत्यगीतादिभिरुत्सवं कारयन् दिवसं नीत्वा सायङ्काले पुष्पाञ्जलिं दद्यात् । रात्रौ नृत्यगीतवाद्यादिभिरुत्वसं कारयेत् ।

---

१. द्रष्टव्यम्—पृ०—२०५

**अथ विसर्जनम्** :–प्रभातेऽरुणोदयवेलायां कृतनित्योक्रियो व्रती यथोपचारैः सर्वान् सम्पूज्य पुष्पाञ्जलिं दत्त्वा–ॐ रामचन्द्र सुराधीश बैकुण्ठं व्रज पार्थिव । पूजां मदीयामादाय जानकीसहितप्रभो ।। ॐ गच्छ गच्छ परं स्थानं स्वस्थानं देवि जानकि । यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ।। ॐ रूपं देहि जयं देहि भाग्यं भगवति देहि मे । धर्मान् देहि धनं देहि सर्वान् क मान् प्रदेहि मे ।। ॐ विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् । पूर्णं भवतु तत्सर्वं त्वत्प्रसादान् महेश्वरि । शक्नुवन्ति न ते पूजां कर्तुं ब्रह्मादयः सुराः । अहं किं वा करिष्यामि मृत्युधर्मा नरोऽल्पधीः ।। न जानेऽहं स्वरूपं ते न शरीरं न वा गुणान् । एकामेव हि जानामि भक्तिं त्वच्चरणाब्जयोः ।। तस्मात् सम्भाव्य भक्तिं मे मदीयार्चां प्रगृह्य च । गच्छ देवि निजं स्थानं मह्यं दत्त्वा वरान् बहून् ।। इति सम्प्रार्थ्य मूर्तिस्थनिर्माल्य पुष्पमादाय–ॐ ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः । मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ।। इत्यैशान्यां क्षिपेत् ।

ततः चरणं स्पृष्ट्वा–ॐ व्रज त्वं स्रोतसि जले मद्गेहं तिष्ठ मर्तये । आगामिवत्सरे च त्वं पुनरायास्यसि ध्रुवम् ।। ॐ गच्छन्तु देवताः सर्वे दत्त्वा मे वरमीप्सितम् । त्वं गच्छ परमेशानि सुखं सर्वगुणैः सहः ।। ॐ साङ्गसपरिवारश्रीरामजानक्यौ पूजितौस्थः क्षमेयाथां स्वस्थानं गच्छतम् । श्रीमिथिलाधिपतिजनक पूजितोऽसि प्रसीद क्षमस्व स्वस्थानं गच्छ । एवं लक्ष्मणादिपूजितदेवानपि स्वस्वनामोक्त्या वि ज्य शान्तिकलशाधिष्ठितदेवानपि विसृजेत् । ततः कुशत्रयतिलजलान्यादाय ॐ अद्य कृतैतच्छ्रीरामजानक्यादि पूजनकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्य–मग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे । ततः परिशिष्टोक्तविधिना अभिषेक-मन्त्रैर्यजमानमभिषिञ्चे त् । ततो नृत्यगीतवाद्यादिना प्रतिमामुत्थाप्य जलाशयं नीत्वा–ॐ सीते देवि जगन्मातः स्वस्थानं गच्छ पूजिते । संवत्सरव्यतीते तु पुनरागमनाय वै । इमां पूजां मया देवि यथाशक्त्या निवेदिताम् । रक्षणार्थं समादाय व्रज स्वस्थानमुत्तमम् ।। इति जले प्रवाहयेत् । तद्दिने देवीप्रीत्यर्थं ब्राह्मणांश्च भोजयेत् ।

*।। इति श्रीजानकीनवमीव्रतपूजा समाप्ता ।।*

# वैशाखीपूर्णिमाकृत्यम्

कृष्णाजिनङ्कृष्णतिलान् हिरण्यमधुसर्प्पिर्ब्राह्मणाय सकलपापक्षयकामो दद्यात् । अस्यां गङ्गास्नाने ॐ अद्येत्यादि गङ्गास्नानजन्यफल–सहस्रगुणाधिक-फलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये इतिसङ्कल्पः ।।

# अथ ज्येष्ठकृत्यम्

## वटसावित्री पूजा

ज्येष्ठकृष्णामावास्यायां पूर्वयुतायां केवलायां वा वटमूले सावित्रीपूजनं वटप्रदक्षिणं सूत्रेण सप्तवार बेष्टनञ्च कृत्वा त्रिरात्रोपवासं तदशक्तौ नक्तमेकभुक्तं वा अवैधव्यकामाः स्त्रियः कुर्य्युः ।। तथा च **भविष्ये, अमायाञ्च** यथा ज्येष्ठे वटमूले महासती । त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ।। गृहीत्वा बालुकां पात्रे प्रस्थमात्रां युधिष्ठिर !। ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते ।। सावित्रीप्रतिमां कुर्य्यात्सौवर्णीं वापि मृन्मयीम् । सार्द्धं सत्यवता साध्वी फलनैवेद्यदीपकैः ।। रजन्या कण्ठसूत्रैश्च शुभैः कुङ्कुमकेशरैः । पूजयेत्परया भक्त्या वित्तशाठ्य- विवर्जिता ।। सावित्र्याख्यानकं चापि वाचयीत द्विजोत्तमैः । रात्रौ जागरणं कृत्वा प्रभाते विमले ततः । तामपि ब्राह्मणे दत्वा प्रणिपत्य क्षमापयेत् इति ।। मन्त्रस्तु, "सावित्रीयं मया दत्ता सहिरण्या महासती । ब्राह्मणः प्रीणनार्थाय ब्राह्मणः प्रतिगृह्यतामिति" ।। व्रतेनानेन राजेन्द्र ! वैधव्यन्नाप्नुयात् क्वचित् ।। देवीभागवते[१] चतुर्दश्यामिदमुक्तम् ।।

## अथ संक्षिप्तवटसावित्रीव्रतपूजाविधिः

ज्येष्ठामावास्यायां सावित्रीपूजनम्[२] । तत्र वटस्याधः शुद्धासने उपविश्य कृतनित्यक्रियो भूत्वा कुशत्रयतिलजलान्यादाय—नमोऽद्य ज्येष्ठे मासि कृष्णे पक्षेऽमावास्यां तिथौ अमुकगोत्राऽमुकीदेवी सौभाग्यप्राप्तिकामा ब्रह्मणा सह सावित्रीपूजनं तत्कथाश्रवणञ्चाऽहं करिष्ये । ततः सौवर्णमयीं मृन्मयीं वा प्रतिमां विधाय अक्षतमादाय—नमो ब्रह्मणा सह सावित्रि इहागच्छ इह सुप्रतिष्ठिता भव। एतानि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि नमो ब्रह्मणा सह सावित्र्यै नमः। इदमनु- लेपनम्०, इदं सिन्दूरम्०, इदमक्षतम्, इदं रक्तवस्त्रं बृहस्पतिदैवतम्, इदं पुष्पम्०, इदं विल्वपत्रम्०, इदं पुष्पमाल्यं नमो ब्रह्मणा सह सावित्र्यै नमः । एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि नमो ब्रह्मणा सह सावित्र्यै नमः। इदमाचमनीयम्०, एष पुष्पाञ्जलिः नमो ब्रह्मणा सह सावित्र्यै नमः । एष कर्पूरदीपः नमो ब्रह्मणा सह सावित्र्यै नमः । ततः प्रार्थयेदनेन—ओङ्कारपूर्विके देवि वीणापुस्तकधारिणि ।

---

१. स्कन्दपुराणीय-सावित्रीव्रतकथायां पूर्णीमायां व्रतमुक्तम्, धवव्यवहारस्तु अमावस्यायामेवेति विस्तृत पूजाविधिरग्रे द्रष्टव्यः। ध्वजयोग्यवंशलक्षम्—सरलश्छिद्ररहितो निर्व्रणो मूलसंयुतः । दशहस्ताधिको ग्राह्यो वंशस्तु ध्वजहेतवे ।। सिन्दूरपिष्टलिप्ताङ्गो रक्तवस्त्रपताकक: ।

२. तथा च भविष्ये—आमयां च तथा ज्येष्ठे वटमूले महासती ।। इति । व्यवहारोऽप्येवमेव कथायान्तु पूर्णिमायां व्रतमुक्तं, देवीभाग व्रते तु चतुर्दश्यामिति ।

जगदम्बिके नमस्तुभ्यमवैधव्यं प्रयच्छमे ।। इति । ततः प्रदक्षिणं कुर्वती सती सूत्रेण वृक्षवेष्टनं कुर्यात् । ततः कथां शृणुयात् ।

## अथ वटसावित्रीव्रतकथा

ॐ प्रणम्य सच्चिदानन्दं नृणां श्रेयोविवृद्धये । वक्ष्ये सनातनं धर्मं श्रुति-स्मृतिप्रचोदितम् ।।

**पार्वत्युवाच**—प्रभासे संस्थिता या तु सावित्री ब्रह्मणः प्रिया । तस्याश्चरित्रं मे ब्रूहि देवदेव जगत्पते ।।१।। व्रतमाहात्म्यसंयुक्तमितिहाससमन्वितम् । पातिव्रत्यकरं स्त्रीणां महाभाग्यं महोदयम् ।।२।। **ईश्वर उवाच**—कथयामि महादेवि सावित्र्याश्चरितं महत् । प्रभासक्षेत्रसंस्थायाः स्थलस्थाने महेश्वरि ।।३।। यथा चीर्णं व्रतकरं सावित्र्या राजकन्यया । आसीन्मन्द्रेषु धर्मात्मा सर्वभूतहिते रतः ।।४।। पार्थिवोऽश्वपतिर्नाम पौरजानपदप्रियः । क्षमावाननपत्यश्च सत्यवादी जितेन्द्रियः ।।५।। प्रभासक्षेत्र-यात्रायामाजगाम स भूपतिः । यात्रां कुर्वन्विधानेन सावित्रीस्थलमागतः ।।६।। स सभार्यो व्रतमिदं तत्र चक्रे नृपः स्वयम् । सावित्रीति प्रसिद्धं यत्सर्वकामफलप्रदम् ।।७।। तस्य तुष्टाऽभवद् देवी सावित्री ब्राह्मणः प्रिया । भूर्भुवः स्वरितीत्येषा साक्षान्मूर्त्तिमती स्थिता ।।८।। कमण्डलुधरा देवी जगामादर्शनं पुनः । कालेन बहुना जाता दुहिता देवरूपिणी ।।९।। सावित्र्या प्रीतया दत्ता सावित्र्याः पूजया तथा । सावित्रीत्येव नामाऽस्याश्चक्रे विप्राज्ञया नृपः ।।१०।। सावित्री या ह्यतीव श्रीः प्रावर्धत नृपात्मजा । सावित्री सुकुमारांगी यौवनस्था बभूव ह ।।११।। या सुमध्या पृथुश्रोणी प्रतिभा काञ्चनी यथा । प्राप्तेयं देवकन्या वा दृष्ट्वा तां मेनिरे जनाः ।।१२।। सा तु पद्मविशालाक्षी प्रज्वलन्तीव तेजसा । चचार सा च सावित्री व्रतं यद्भृगुणोदितम् ।।१३।। अथोपोष्य शिरःस्नाता देवतामभिगम्य च । हुत्वाग्निं विधिवद्विप्रान्वाचयेद्वरवर्णिनी ।।१४।। तेभ्यः सुमनसः शेषं प्रतिगृह्य नृपात्मजा । सखीपरिवृताभ्येत्य देवी श्रीवत्सरूपिणी ।।१५।। साऽभिवाद्य पितुः पादौ शेषं पूर्वं निवेद्य च । कृताञ्जलिर्वरारोहा नृपतेः पार्श्वतः स्थिता ।।१६।। तां दृष्ट्वा यौवनप्राप्तां स्वां सुतां देवरूपिणीम् ! उवाच राजा सम्मंत्र्य पुत्र्यर्थं सह मन्त्रिभिः ।।१७।। पुत्रि प्रदानकालस्ते नहि कश्चिद् वृणोति त्वाम् । विचारयन्न पश्यामि वरं तुल्यमिहात्मनः ।।१८।। देवादीनां यथा वाच्यो न भवेयं तथा कुरु । पठ्यमानं मया पुत्रि धर्मशास्त्रेषु च श्रुतम् ।।१९।। पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता । ब्रह्महत्या पितुस्तस्य सा कन्या वृषली स्मृता ।।२०।। अतोऽर्थं प्रेषयामि त्वां कुरु पुत्रि स्वयंवरम् । वृद्धैरमात्यैः सहिता शीघ्रं गच्छावधारय ।।२१।। एवमस्त्विति सावित्री प्रोच्य तस्माद्विनिर्ययौ । तपोवनानि रम्याणि राजर्षीणां जगाम

सा ।।२२।। मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम् । ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमाणि च ।।२३।। आजगाम पुनर्वेश्म सावित्री सह मन्त्रिभिः । तत्रापश्यद्धि देवर्षिं नारदं पुरतः शुचिम् ।।२४।। आसीनमासने विप्रं प्रणम्य स्मितभाषिणी । कथयामास तत्कार्यं येनारण्यं गता च सा ।।२५।।

**सावित्र्युवाच**—आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः । द्युमत्सेन इति ख्यातो दैवादन्धो बाभूव सः ।।२६।। आर्यस्य बालपुत्रस्य द्युमत्सेनस्य रुक्मिणा । सबालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।।२७।। स वने तस्य वृद्धस्य पुत्रः परम-धार्मिकः । सत्यवाननुरूपो मे, भर्तेति मनसेप्सितः ।।२८।।

**नारद उवाच**—अहो व्रत महत्कष्टं सावित्र्या नृपते कृतम् । बालस्वभावादनया गुणवान्सत्यवान्वृतः ।।२९।। सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते । सत्यं वदेति मुनिभिः सत्यवान्नाम वै कृतम् ।।३०।। नित्यं चाश्वाः प्रियास्तस्य करोत्यश्वांश्च मृन्मयान् । चित्रेपि च लिखत्यश्वांश्चित्राश्व इति चोच्यते ।।३१।। सत्यवान्न्ति-देवस्य शिष्यो दानगुणैः समः । ब्रह्मण्यः सत्यवादी च शिविरौशीनरो यथा ।।३२।। ययातिरिव चोदारः सोमवत्प्रियदर्शनः । रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ।।३३।। एको दोषोऽस्ति नान्यश्च सोऽद्यप्रभृति सत्यवान् । संवत्सरेण क्षीणायुर्देहत्यागं करिष्यति ।।३४।। नारदस्य वचः श्रुत्वा दुहिता प्राह पार्थिवम् ।

**सावित्र्युवाच**—सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति ब्राह्मणाः ।।३५।। सकृत्कन्या प्रदीयेत त्रीण्येतानि सकृत्सकृत् । दीर्घायुरथवाऽल्पायुः सगुणो निर्गुणोऽपि वा ।।३६।। सकृद् वृतो मया भर्त्ता न द्वितीयं बृणोम्यहम् । मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते ।।३७।। क्रियते कर्मणा पश्चात् प्रमाणं हि मनस्तदा ।

**नारद उवाच**—यद्येतदिष्टं भवतः शीघ्रमेव विधीयताम् ।।३८।। अविघ्नेन तु सावित्र्याः प्रदानं दुहितुस्तव । एवमुक्त्वा समुत्पत्य नारदस्त्रिदिवं गतः ।।३९।। राजा च दुहितुः सर्वं वैवाहिकमथाकरोत् । शुभे मुहूर्ते पार्श्वस्थैर्ब्राह्मणैर्वेदपारगैः ।।४०।। सावित्र्यपि च तं लब्ध्वा भर्तारं मनसेप्सितम् । मुमुदेऽतीव तन्वङ्गी स्वर्गं प्राप्येव पुण्यकृत् ।।४१।। एवं तत्राश्रमे तेषां तदा निवसतां सताम् । कालस्तु पश्यतां किञ्चिदतिचक्राम पार्वति ।।४२।। सावित्र्यास्तु तदा नार्यास्तिष्ठन्त्याश्च दिवानिशम् । नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ।।४३।। ततः काले बहुतिथे व्यतिक्रान्ते कदाचन । प्राप्तः कालोऽथ मर्तव्यो यत्र सत्यव्रतो नृपः ।।४४।। ज्येष्ठमासे सिते पक्षे द्वादश्यां रजनीमुखे । गणयन्त्याश्च सावित्र्या नारदोक्तं वचो हृदि ।।४५।। चतुर्थेऽहनि मर्तव्यमिति सञ्चिन्त्य भामिनी । व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताश्रमे ।।४६।।

ततस्त्रिरात्रं न्यवसत्स्नात्वा सन्तर्प्य देवताम् । श्वश्रूश्वशुरयोः पादौ ववन्दे चारुहासिनी ।।४७।। अथ प्रतस्थे परशुं गृहीत्वा सत्यवान्वनम् । सावित्र्यपि च भर्तारं गच्छन्तं पृष्ठतोऽन्वयात् ।।४८।। ततो गृहीत्वा तरसा फलपुष्पसमित्कुशान् । अथ शुष्काणि चादाय काष्ठभारमकल्पयत् ।।४९।। अथ पाटयतः काष्ठं जाता शिरसि वेदना । काष्ठभारं क्षणात्यक्त्वा वटशाखाबलंबितः ।।५०।। तवोत्संगे क्षणं तावत्स्वप्तुमिच्छामि सुन्दरि । विश्रमस्व महाबाहो सावित्री प्राह दुःखिता ।।५१।। पश्चादपि गमिष्यामि ह्याश्रमं श्रमनाशनम् । यावदुत्सङ्गगं कृत्वा शिरोऽस्य तु महीतले ।।५२।। तावद्ददर्श सावित्री पुरुषं कृष्णपिङ्गलम् । किरीटिनं पीतवस्त्रं साक्षात्सूर्यमिवोदितम् ।।५३।। तमुवाचाथ सावित्री प्रणम्य मधुराक्षरम् । कस्त्वं देवोऽथवा दैत्यो यो मां धर्षितुमागतः ।।५४।। न चाऽहं केनचिच्छक्या स्वधर्माद्-दवरोधितुम् । विद्धि मां पुरुषश्रेष्ठ दीप्तमग्निशिखामिव ।।५५।। **यम उवाच**—यमः संयमनश्चास्मि सर्वलोकभयङ्करः । क्षीणायुरेष ते भर्ता सन्निधौ ते पतिव्रते ।।५६।। न शक्यः किङ्करैर्नेतुमतोऽहं स्वयमागतः ।।५७।। एवमुक्त्वा सत्यव्रतं शरीरात्पाशसंयुतः । अङ्गुष्ठमात्रं पुरुषं निचकर्ष यमो बलात् ।।५८।। अथ प्रयातुमारेभे पंथानं पितृसेवितम् । सावित्र्यपि वरारोहा पृष्ठतोऽजुगामह ।।५९।। पतिव्रतत्वाच्चाश्रान्तां तामुवाच यमस्तथा । निवर्त्त गच्छ सावित्रि मुहूर्तं त्वमिहागता ।।६०।। एष मार्गो विशालाक्षि न केनाप्यनुगम्यते ।

**सावित्र्युवाच**—न श्रमो न च मे ग्लानिः कदाचिदपि जायते ।।६१।। भर्त्तार-मनुगच्छन्त्या विशिष्टस्य च सन्निधौ । सतां सन्तो गतिर्नान्या स्त्रीणां भर्त्ता सदा गतिः ।।६२।। वेदो वर्णाश्रमानाञ्च शिष्याणाञ्च गतिर्गुरुः । सर्वेषामेव भूतानां स्थानमस्ति महीतले ।।६३।। भर्तारमेकमुत्सृज्य स्त्रीणां नान्यः समाश्रयः । एवमन्यैः सुमधुरैर्वाक्यैर्धर्मार्थसंहितैः ।।६४।। तुतोष सूर्यतनयः सावित्रीं वाक्यमब्रवीत् ।

**यम उवाच**—तुष्टोऽस्मि तव भद्रन्ते वरं वरय भामिनि ।।६५।। सापि वव्रे च राज्यं स्वं विनयावनतानना । चक्षुःप्राप्ति तथा राज्यं श्वशुरस्य महात्मनः ।।६६।। पितुः पुत्रशतञ्चैव पुत्राणां शतमात्मनः ।। जीवितञ्च तथा भर्तुर्धर्मसिद्धिं च शाश्वतीम् ।।६७।। धर्मराजो वरं दत्त्वा प्रेषयामास तां ततः । अथ भर्तारमासाद्य सावित्री हृष्टमानसा ।।६८।। जगाम स्वाश्रमपदं सह भर्त्रा निराकुला । ज्येष्ठस्य पूर्णिमायां च तया चीर्णं व्रतं त्विदम् ।।६९।। माहात्म्यतोऽस्य नृपतेश्चक्षुःप्राप्तिरभूत्पुरः । ततः स्वदेशराज्यं च प्राप निष्कण्टकं नृपः ।।७०।। पितास्याः पुत्रशतकं सा च लेभे सुताञ्छतम् । एवं व्रतस्य माहात्म्यं कथितं सकलं मया ।।७१।।

**देव्युवाच**–कीदृशं तद्व्रतं देव सावित्र्याश्चरितं महत् । तस्मिंस्तु ज्येष्ठमासे हि विधानं तस्य कीदृशम् ।।७२।। का देवता व्रते तस्मिन् के मन्त्राः किं फलं विभो । विस्तरेण महेश त्वं ब्रूहि धर्मं सनातनम् ।।७३।।

**ईश्वर उवाच**–श्रूयतां देवदेवेशि सावित्रीव्रतमादरात् । कथयामि यथा चीर्णं तया सत्या महेश्वरि ।।७४।। त्रयोदश्यां तु ज्येष्ठस्य दन्तधावनपूर्वकम् । त्रिरात्रं नियमं कुर्यादुपवासस्य भामिनि ।।७५।। अशक्तस्तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रियः । अयाचितं चतुर्दश्यां ह्युपवासेन पूर्णिमाम् ।।७६।। नित्यं स्नात्वा तडागे वा महानद्यां च निर्झरे । पाण्डुकूपे तु सुश्रोणि सर्वस्नानफलं लभेत् ।।७७।। विशेषात्पूर्णिमायां तु स्नानं सर्षपमृज्जलैः । गृहीत्वा वालुकं पात्रे प्रस्थमात्रे यशस्विनि ।।७८।। अथवा धान्यमादाय यवशालितिलादिकम् । ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते ।।७९।। सावित्रीप्रतिमां कृत्वा सर्वावयवशोभिताम् । सौवर्णीं मृण्मयीं वापि स्वशक्त्या दारुनिर्मिताम् ।।८०।। रक्तवस्त्रद्वयं दद्यात्सावित्र्यै ब्रह्मणे सितम् । सावित्रीं ब्रह्मणा सार्धमेवं शक्त्या प्रपूजयेत् ।।८१।। गन्धैः सुगन्धपुष्पैश्च धूपनैवेद्यदीपकैः । पूर्णकोशातकैः पक्वैः कूष्माण्डैः कर्कटीफलैः ।।८२।। नारिकेलैः सखर्जूरैः कपित्थैर्दाडिमैः शुभैः । जम्बूजम्बीरनारङ्गैरक्षोटैः पनसैस्तथा ।।८३।। जीरकैः कटुरसैश्च गुडेन लवणेन च । विरूढैः सप्तधान्यैश्च वंशपात्रप्रकल्पितैः ।।८४।। रंजयेत्पट्टसूत्रैश्च शुभैः कुंकुमकेसरैः । अवतारं करोत्येवं सावित्री ब्रह्मणः प्रिया ।।८५।। तामर्च्चयीत मन्त्रेण सावित्रीं ब्रह्मणा समम् । इतरेषां पुराणोक्तो मन्त्रोऽयं समुदाहृतः ।।८६।। ओङ्कारपूर्वके देवि वीणापुस्तकधारिणि । वेदाम्बिके नमस्तुभ्यम-वैधव्यं प्रयच्छ मे ।।८७।। एवं सम्पूज्य विधिवज्जागरं तत्र कारयेत् । गीतवादित्रशब्देन नरनारीकदंबकम् ।।८८।। नृत्यद्भसन्नयेद्रात्रिं नृत्यशास्त्रविशारदैः । सावित्र्याख्यानकं चापि वाचयीत द्विजोत्तमान् ।।८९।। यावत्प्रभातसमयं गीतभावरसैः सह । विवाहं एवं कृत्वा तु सावित्र्या ब्रह्मणा सह ।।९०।। परिधाप्य सितैर्वस्त्रैर्दम्पतीनां तु सप्तकम् । गृहदानं प्रदातव्यं सर्वोपस्करसंयुतम् ।।९१।। ब्राह्मणे वेदविदुषे सावित्रीं विनिवेदयेत् । अथ सावित्रीकल्पज्ञे सावित्र्याख्यानवाचके ।।९२।। दैवज्ञे ह्युञ्छवृत्तिस्थे दरिद्रे चाग्निहोत्रिणि । एवं दत्त्वा विधानेन तस्यां रात्रौ निमन्त्रयेत् ।।९३।। पौर्णमास्यां वटाधस्ताद्दम्पतीनां चतुर्दश । ततः प्रभातसमये उषःकाल उपस्थिते ।।९४।। भक्ष्यभोज्यादिकं सर्वं सावित्रीस्थलमानयेत् । पाकं कृत्वा तु शुचिना रक्षां कृत्वा प्रयत्नतः ।।९५।। ब्राह्मणान्गृहिणीयुक्तांस्तत्र तत्रानयेत्सुधीः । सावित्र्याः स्थलके तत्र कृत्वा पादाभिषेचनम् ।।९६।। सुस्नातान्ब्राह्मणांस्तत्र सभार्यानुपवेशयेत् । सावित्र्याः

पुरतो देवि दम्पत्योर्भोजनं ददेत् ।।९७।। तेनाहं भोजितस्तत्र भवामीह न संशयः । द्वितीयं भोजयेद्यस्तु भोजितस्तेन केशवः ।।९८।। लक्ष्म्याः सहायो वरदो वरांस्तत्र प्रयच्छति । सावित्र्या सहितो ब्रह्मा तृतीये भोजितो भवेत् ।।९९।। एकैकं भोजनं तत्र कोटिभोजसमं स्मृतम् । अष्टादशप्रकारेण षड्रसं कृतभोजनम् ।।१००।। देव्यास्तत्र महादेवि सावित्रीस्थलसन्निधौ । विधवा न कुले तस्या न बन्ध्या न च दुर्भगा ।।१०१।। न कन्या जननी चापि न च स्याद्भर्त्तुरप्रिया । अष्टौ दोषास्तु नारीणां न भवन्ति कदाचन ।।१०२।। तस्मात्सर्वप्रयत्नेन सावित्र्यग्रे च भोजनम् । दातव्यं सर्वदा देवि कटुनीलविवर्जितम् ।।१०३।। न चाम्लं न च वै क्षारं स्त्रीणां भोज्यं कदाचन । पञ्च प्रकारं मधुरं हृद्यं सर्वं सुसंस्कृतम् ।।१०४।। घृतपूर्णाः पूपकाश्च बहुक्षीरसमन्विताः । पूपकास्तादृशाः कार्या द्वितीयाऽशोकवर्त्तिका ।।१०५।। तृतीया पूपिका कार्या खर्जूरेण समन्विता । चतुर्थश्चैव संयावो गुडाज्याभ्यां समन्वितः ।।१०६।। आह्लादकारिणी पुंसां स्त्रीणां चातीव वल्लभः । धनधान्यजनोपेतं नारीनरशताकुलम् ।।१०७।। पूपकैस्तु कुलं तस्या जायते नात्र संशयः । न ज्वरो न च संतापो दुःखं च न वियोगजम् ।।१०८।। अशोकवर्त्तिदानेन कुलानामेकविंशतिः । वधूभिश्च सुतैश्चैव दासीदासैरनन्तकैः ।।१०९।। पूरितं च कुलं तस्याः पूरिका या प्रयच्छति । पुत्रिण्यो वै दुहितरो वधूभिः सहिताः कुले ।।११०।। शिखरिण्याः प्रदात्रीणां युवतीनां न संशयः । मोदते च कुलं सर्वं सर्वसिद्धिप्रपूरितम् ।।१११।। मोदकानां प्रदानेन एवमाह पितामहः । एतच्च देवि गौरीणां भोजनं हि विशिष्यते ।।११२।। सुभगा पुत्रिणी साध्वी धनवृद्धिसमन्विता । सहस्रभोजनी देवि भवेज्जन्मनि जन्मनि ।।११३।। पापानि चैव मुख्यानि हृद्यानि मधुराणि च । द्राक्षापानं तु चिञ्चायाः पानं गुडसमन्वितम् ।।११४।। सरसेन तु तोयेन कृतखण्डेन वै शुभम् । सुवासिनीनां पेयं वै दातव्यं च द्विजन्मनाम् ।।११५।। इतरैरितराण्येव वर्णयोगानि यानि च । सुरभीणि च पानानि तासु योग्यानि दापयेत् ।।११६।। प्रतिपूज्य विधानेन वस्त्रदानैः सकञ्चुकैः । कुंकुमेनानुलिप्तांगाः स्रग्दामभिरलंकृताः ।।११७।। गन्धैर्धूपैश्च संपूज्य नारिकेलान्प्रदापयेत् । नेत्राणाञ्चाञ्जनं कृत्वा सिन्दूरं चैव मस्तके ।।११८।। पूगीफलानि हृद्यानि वासितानि मृदूनि च । हस्ते दत्वा सपात्राणि प्रणिपत्य विसर्जयेत् ।।११९।। स्वयं च भोजयेत्पश्चाद्बन्धुभिर्बालकैः सह । अथवा नैव सम्पद्येत्तीर्थे चैव तु भोजनम् ।।१२०।। गृहं गत्वा प्रभोक्तव्यं तुष्टा देवी यथा भवेत् । एवमेव पितृणां च आगम्य स्वे च मन्दिरे ।।१२१।। पिण्डप्रदानपूर्वन्तु श्राद्धं कृत्वा विधानतः । पितरस्तस्य तुष्टा वै भवन्ति ब्रह्मणो दिनम् ।।१२२।। तीर्थादष्टगुणं पुण्यं

स्वगृहे ददतः शुभे । न च पश्यन्ति वै नीचाः श्राद्धं दत्तं द्विजातिभिः ।।१२३।। एकान्ते तु गृहे गुप्ते पितॄणां श्राद्धमिष्यते । नीचं दृष्ट्वाऽपि दत्तं तु पितॄणां नोपतिष्ठति ।।१२४।। तस्मात्सर्वप्रयत्नेन श्राद्धं गुप्ते च कारयेत् । पितॄणां तृप्तिदं प्रोक्तं स्वयमेव स्वयम्भुवा ।।१२५।। गौरीभोज्यादिका या तु उत्सर्गात् क्रियते क्रिया । राजसी सा समाख्याता जनानां कीर्त्तिदायिनी ।।१२६।। इदं दानं सदा देयमात्मनो हितमिच्छता । श्राद्धे चैव विशेषेण यदीच्छेत्सात्विकम्फलम् ।।१२७।। इदमुद्यापनं देवि सावित्र्यास्तु व्रतस्य च । सर्वपातकशुद्ध्यर्थं कार्यं देवि नरैः सदा ।।१२८।। अकामतः कामतो वा पापं नश्यति तत्क्षणात् । इह लोके तु सौभाग्यं धनं धान्यं वराः स्त्रियः ।।१२९।। भवन्ति विविधास्तेषां यैर्यात्रा तत्र वै कृता । इदं यात्राविधानं तु भक्त्या यः कुरुते नरः ।।१३०।। शृणोति वा स पापैस्तु सर्वैरेव प्रमुच्यते । ज्येष्ठस्य पूर्णिमायान्तु सावित्रीस्थलके शुभे ।।१३१।। प्रदक्षिणां यः कुरुते फलदानैर्यथाविधि । अष्टोत्तरशतं वापि तदर्धार्धं तदर्धकम् ।।१३२।। यः करोति नरो देवि स्पृष्ट्वा तत्र प्रदक्षिणाम् । अगम्यागमनं यैश्च कृतं ज्ञानाच्च मानवैः ।।१३३।। अन्यानि पातकान्येवं नश्यन्ते नात्र संशयः । यैर्गत्वा स्थलके सन्ध्या सावित्र्याः समुपासिता ।।१३४।। स्वपत्न्याश्चैव हस्तेन पांडुकूपजलेन च । भृङ्गारकनकेनैव मृण्मयेनाथ भामिनि ।।१३५।। आनीय तु जलं पुण्यं सन्ध्योपास्तिं करोति यः । तेन द्वादशवर्षाणि भवेत्संध्या ह्युपासिता ।।१३६।। अश्वमेघफलं स्नाने दाने दशगुणं तथा । उपवासे त्वनन्तं च कथायाः श्रवणे तथा ।।१३७।।

*।। इति श्रीस्कन्दपुराणोक्तसावित्रीव्रतकथा समाप्ता ।।*

## अथ विसर्जनम्

आरार्तिकं विधाय यानि कानीति प्रदक्षिणीकृत्य—नमो ब्रह्मणा सह सावित्रि पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ । ततो **दक्षिणा**—कुशत्रयतिलजलान्यादाय, नमोऽद्य कृतैतद् ब्रह्मणा सह सावित्रीपूजनतत्कथाश्रवणकर्मप्रतिष्ठार्थमेतावद्-द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे । इति दक्षिणान्दद्यात् । सौवर्णादिप्रतिमासत्त्वे तु ब्राह्मणाय प्रतिपादयेदनेन—ओमद्येत्यादि अमुकीदेव्यहं सर्वसौभाग्यसम्पत्समृद्धये श्रीवटसावित्रीव्रतसांगतासिद्धये च इमां सुपूजितां सुवर्णमयीं (रजतमयीं वा) प्रतिमां सोपस्करां यथानामगोत्राय ब्राह्मणाय दास्ये । इति ब्राह्मणाय प्रतिपाद्य पठेत्—सावित्रीयं मया दत्ता पूजिता विधिना सती । ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यताम्। ततो ब्राह्मणान् भोजयेत् ।

*।। इति वटसावित्रीव्रतपूजा समाप्ता ।।*

# ज्येष्ठशुक्लतृतीयायां पञ्चाग्निव्रतम् ॥

राजमार्तण्डे, भद्रे ! कुरु प्रयत्नेन रम्भाख्यं व्रतमुत्तमम् । ज्येष्ठशुक्लतृतीयायां स्नात्वा नियमतत्परा ॥ एतद्व्रतोद्यापनं पञ्चमाब्दे कुर्य्यात् समाचारात् । ज्येष्ठशुक्लचतुर्थ्यामुपहारनानाविधनैवेद्यगीतनृत्यवाद्यहोमैः पयोभिर्वस्त्रैः कुसुमैः सुगन्धिभिरुमापूजायां सौभाग्यं फलम् । रजस्वला चेदन्यद्वारा कारयेत् । वृषस्थे रवौ सर्प्पाभयकामैः शिरीषबीजमेकं पातव्यम् ॥

## अथारण्यषष्ठीव्रतविधिः
## ( स्कन्दषष्ठी )

तत्र ज्येष्ठशुक्लषष्ट्यां शुभसन्ततिकामा विन्ध्यवासिनीस्कन्दषष्ठीपूजनमहं करिष्ये इतिसङ्कल्प्य ॐ स्कन्दषष्ठि ! इहागच्छ इह तिष्ठेत्यावाह्य ॐ विन्ध्यवासिन्यै षष्ठ्यै नमः इत्यादिना पूजयेत् । ततः, ॐ जयदेवि जगन्मातर्जगदानन्दकारिणि ! प्रसीद मम कल्याणि ! नमस्ते षष्ठि ! देवते ! ॥ इतिमन्त्रेण प्रणम्य रूपं देहीत्यादिना प्रार्थयेत् । ततः फलाहारं कुर्य्यात् । तथा च राजमार्तण्डे, ज्येष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञिता । व्यजनैककरास्तस्यामटन्ति विपिने स्त्रियः ॥ तां विन्ध्यवासिनीं स्कन्दषष्ठीमाराधयन्ति च । कन्दमूलफलाहाराः लभन्ते सन्ततिं शुभामिति । अत्र पूर्वविद्धैव षष्ठी ग्राह्येति सर्वसम्मतम् ।

## अथ दशहरा

उदयगामिन्यामस्यां सामान्यजलाशये ॐ अद्येत्यादिदशविधपापक्षयकामोऽस्मिन् जलाशये स्नानमहं करिष्ये । एवं दानेऽपि । गङ्गायान्तु, दशविधमहापातकोपपातकक्षयकामो गङ्गायां स्नानमित्यादि । तत्र हस्तनक्षत्रयोगश्चेत् दशजन्मकृतदशविधपापक्षयं फलम् । मङ्गलवारयोगे तु, मङ्गलवारयुक्तायां दशम्यां दशविधपापक्षयपूर्वकशतगुणवाजिमेधायुतयज्ञजन्यफलसमफलप्राप्तिकाम इतिवाक्येन विशेषः । अत्र दर्भहस्तेन ॐ अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतं चैव पैशुन्यञ्चापि सर्वशः । असम्बद्ध-प्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ परद्रव्येष्वभिध्यानम्मनसाऽनिष्टचिन्तनम् । वितथाभिनेवेशश्च त्रिविधं कर्म्म मानसम् ॥ एतानि दशपापानि प्रशमं यान्तु जाह्नवि ! । स्नातस्य मम ते देवि ! जले विष्णुपदोद्भवे ॥ विष्णुपादार्घ्यसम्भूते ! गङ्गे ! त्रिपथगामिनि ! धर्म्मद्रवेति विख्याते पापम्मे हर जाह्नवि ! श्रद्धया भक्तिसम्पन्ने ! श्रीमातर्द्देवि ! जाह्नवि ! । अमृतेनाम्बुना देवि ! भागीरथि ! पुनीहि माम् ॥ इतिमन्त्रान् पठित्वा स्नायात् । तथाहि पाद्मे, शुक्लपक्षस्य दशमी ज्येष्ठे मासि द्विजोत्तम ! ।

हरते दश पापानि तस्माद्दशहरा स्मृता ।। पराशरभाष्ये यमः, ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तयोगतः । दशजन्माघहा गङ्गा दशपापहरा स्मृता ।। शङ्खः, ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां, हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् । पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्य्याः। पुण्यं दद्यादपि शतगुणं वाजि-मेधायुतस्येति ।। ज्येष्ठपूर्णिमायां तिलदाने अश्वमेधतुल्यं फलम् ।।

## अथाषाढ़कृत्यम्

तत्र यद्वारे यत्काले मिथुनसंक्रमणं तद्दिनाभ्यन्तरे तावत्कालावधि विंशत्यादिदण्डाधिकदिनत्रयमम्बुवाची तत्राध्ययनं वीजवपनं न कार्य्यम् । सर्प्पभयोपशमनाय दुग्धम्पेयम् । अत्राम्बुवाचिप्रभृत्यार्द्रास्थे निषिद्धेतरकाले नवोदकनिमित्तकपार्वणश्राद्धं कर्तव्यम् ।।

## अथ पुलिकबन्धनम्

आषाढ़शुक्लरविवारे सर्प्पविषाभावकामः करमूले पुलिकमूलम्बध्नीयात् । तथाच बृहद्वसिष्ठः अकृत्वा पुलिकैर्बन्धः प्रायश्चित्तीयते नरः । चतुर्मासे व्यतीते तु मुक्तिस्तस्य कराद्भवेत् ।। **ॐ शुचिसितदिनकरवारे करमूले बद्धपुलिकमूलस्य नागारेरिव नागाः प्रयान्ति किल दूरतस्तस्य** ।। इति मन्त्रेण ब्राह्मण द्वारा दक्षिण करमूले बध्नीयात्, स्त्री चेद्वामकरमूले इति ।।

## अथ रथयात्रा

आषाढ़शुक्लद्वितीयायां रथयात्रोत्सवः । तदुक्तं स्कान्दे :—आषाढ़स्य सिते पक्षे द्वितीया पुष्यसंयुता तस्यां रथे समारोप्य रामं मां भद्रया सह ।। यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान् बहून् । ऋक्षाभावे तिथौ कार्य्या यात्राऽसौ मम पुण्यदा ।।

## अथैकादशी कृत्यम्

एकादशी द्वादशी युतैव ग्राह्या, यदा दशमीमिश्रैव एकादशी, अग्रिमदिने न वर्तते, तदा दशमीयुतैव ग्राह्या, परदिने एकादश्यलाभात् । यत्तु दशमीयुक्तायां दोषश्रवणं तदुभयदिन एकादशीसम्भवे । तिथिमलरूपापि परयुतैवेति । रात्रिशेषे त्रयोदशी चेत्तदा सहस्रगुणं फलम् । मच्छये च मदुत्थाने मत्पार्श्वपरिवर्त्तने । फलमूलपयोहारी हृदि शूलम्मार्पति ।। इति भगवद्वाक्यादेकादशीत्रयेषु आतुराणामप्यावश्यकत्वं-द्योतितम् । हरिवासरलक्षणमाह स्मृतितत्त्वे । आभाकासितपक्षे च मैत्रश्रवणरेवती । द्वादशी बुधवारेण हरेर्वासर इष्यते । तथाआषाढ़शुक्ल द्वादशी बुधानुराधायुता, भाद्रशुक्लद्वादशी बुधश्रवणायुता, कार्तिकशुक्लद्वादशी बुधरेवतीयुता हरिवासर इत्यर्थः । पुत्रवतो गृहस्थस्य कृष्णपक्षैकादश्यां नाधिकारः । हरिशयनाभ्यन्तरे सर्वेषामधिकारः । विधवायाः वैष्णवानाञ्च सर्वत्राधिकारः । दशम्यां नियममाह कांस्यपात्रे भोजनं,

मांसं, मसूरं, चणकं, कोद्रवं, शाकं, मधु, परान्नं, मैथुनं, दिवाशयनं, पुनर्भोजनं, द्यूतं, अत्यम्बुपानम् एतानि द्वादश्यामपि वर्जयेत् ।

**अथोपवासविधिः**–तत्र पूर्वदिने निरामिषमेकवारं भुक्त्वा उक्तनियमेनास्थाय प्रातः कृतस्नानादिराचान्तो व्रती ताम्रपात्रेऽर्घमादाय ॐ अद्यामुकमासीयामुकपक्षीयैकादशीव्रतमहमाचरिष्यामीतिनिवेद्य, ॐ अद्यामुकमासीयामुकपक्षीयैकादश्यां तिथावामुकगोत्रस्यामुकशर्म्मणः पुरुषार्थचतुष्टयप्राप्तिकाम एकादशीव्रतमहङ्करिष्ये । इतिसंकल्प्य यथाशक्ति विष्णुं संपूज्य प्रार्थयेत् । ॐ एकादश्यां निराहारो भूत्वा चैव परेऽहनि । भोक्ष्येऽहं पुण्डरीकाक्ष ! शरणम्मे भवाच्युत ।। ॐ इदं व्रतं मया देव ! गृहीतं पुरतस्तव । निर्विघ्नां सिद्धिमाप्नोतु त्वत्प्रसादाज्जनार्दन ! ।। इति मन्त्राभ्याम् । ततोऽहर्निशमुपोष्य परदिनेऽपि प्रातर्विष्णुं संपूज्य, ॐ ! अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ! प्रसीद सुमुखो नाथ ! ज्ञानदृष्टिप्रदो भव ।। कृष्ण ! कृष्ण ! कृपालुस्त्वमगतीनां गतिर्भव । संसारार्णवमग्नानां प्रसीद मधुसूदन ! ।। इत्याभ्यां सम्प्रार्थ्य ब्राह्मणायान्नं दत्वा भोजयित्वा वा पारणाङ्कुर्य्यात् । हरिवासरयोगेषु द्वादश्यामप्युपोष्य त्रयोदश्यां ब्राह्मणान् भोजयित्वा पारणाङ्कुर्य्यात् ! पारणायां मासभेदेन वस्तुभेदमाह पाद्मे, "गोमूत्रेण चं गोमयेन पयसा दध्ना गवां सर्पिषा, सद्दर्भोदककार्तवीर्य्ययवजैश्चूर्णैस्तथा दूर्वया । कूष्माण्डेन गुडेन विल्वतुलसीपत्रेण वा पारणम्, द्वादश्याङ्गदितं क्रमान्मुनिवरैर्मार्गादितस्तत्फलम्" ।। पयसा दुग्धेन, कार्तवीर्य्यस्तिलः, बिल्वतुलसीपत्रयोर्विकल्पः । मार्गादिद्वादशमासेषु क्रमेण द्वादशवस्तुभिः पारणमितिकृत्यसागरः ।।

एतद्व्रतस्य नित्यत्वेनावश्यकर्तव्यतया मार्गशुक्लैकादश्याम् ॐ अद्येत्यादि अद्यारभ्य सर्व्वत्सरय्याँवत्प्रतिमासशुक्लैकादशीव्रतमहङ्करिष्ये इति सङ्कल्प्य प्रतिशुक्लैकादशीव्रतं कुर्य्यात् । वत्सरान्ते उद्यापनं कुर्य्यात्तदशक्तौ ब्राह्मणाय गां सुवर्णञ्च दत्वा यथाशक्ति तान् भोजयेत् । मुख्यकल्पस्तु, अद्यारभ्य चतुर्वर्गप्राप्तिकामो यावज्जीवं प्रतिमासैकादशीव्रतमहङ्करिष्ये इति यथोक्तनियमेन कुर्य्यात् । तद्दिने जितेन्द्रियः सुसमाहितो गन्धपुष्पधूपदीपताम्बूल–नानाविधनैवेद्यबहुविधोपचार–जपहोमस्तोत्रदिव्यगीतमनोहर वाद्यदण्डवत्प्रणामजयशब्दैः पूजां कृत्वा विष्णुगीतकथादिभिः रात्रौ जागरणं कुर्य्यात् । अशक्तौ प्रतिशुक्लैकादशीषु व्रतं कुर्य्यात् ।। तत्राप्यशक्तौ शयनी–पार्श्वपरिवर्तिनी–बोधिनी–भैमी–निर्ज्जलासु व्रतं कुर्य्यात् । उपवासासामर्थ्ये वायुं, पञ्चगव्यं, घृतम्, जलं, दुग्धं, तिलान्, फलानि, मूलानि, नक्तं, हविष्यान्नमानोदनव्वाँ क्रमेण भुक्त्वा व्रतरक्षां कुर्य्यात् । तथा च वायुपुराणम् । नक्तं

हविष्यान्नमनोदनव्वाँ फलं तिलाः क्षीरमथाम्बु चाज्यम् । यत्पञ्चगव्यं यदि वाऽथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्चेति ।। अथ कस्याञ्चिदेकादश्यां सकलपापक्षयकामो नरसिंहार्चनपूर्वकैकादशीव्रतमहङ्करिष्ये इति संकल्प्य व्रतं कुर्य्यात् । अथ यावज्जीवैकादशीव्रतकरणे पुरुषार्थचतुष्टयं फलम् । अथवा दुर्गमार्ग-सन्तरणपूर्वकस्वर्गवासः फलम् । एतद् द्वयं विष्णुरहस्ये उक्तम् । एवं ब्राह्मेप्युक्तम् । नारदपुराणे च अश्वमेधसहस्रराजसूय-शतफलाधिकं फलम् । अथवा गङ्गा-काशीगयापुष्करकुरुक्षेत्ररेवा-देविका-यमुना-चन्द्रभागादिस्नानजन्य-फलाधिकं फलम् । अथवा-मातृ-पितृ-पितामह-तत्पितृ-तन्मातामह-मातृजनक- तज्जनकतत्वपूर्वोक्त-सहितस्य विष्णुलोकवासः फलम् । अथवा यमकर्तृकलिपिमार्जनयमत्या-गानन्तरहरिगमन-कुलत्रयसमुद्धरणानन्तरयममार्गहर्तृत्त्वपूर्वकहरिमन्दिरप्राप्त्यने-कयज्ञानेक दानानेकतीर्थानेक-विष्णुव्रतातिरिक्तव्रतजन्यगत्यधिकगतिःफलम् । अथास्यां रात्रौ जागरणे पितृवंश्यदशपुरुष-मातृवंश्य-दशपुरुषपत्नीवंश्यदशपुरुष-सहितात्मोद्धरणपूर्वकविष्णुलोकगमनं फलम् ।। एकादश्युपवासपूर्वकद्वादश्यां वासुदेवपूजने विष्णुः :- मार्गशुक्लैकादश्यामुपोषितो द्वादश्याम्भगवन्तं वासुदेवमर्चयेत् पुष्पगन्धानुलेपनदीपनैवेद्यैर्वह्निब्राह्मणतर्प्पणैः व्रतमेतत्संवत्सरं कृत्वा पूतो भवति पापेभ्यः, यावज्जीवं कृत्वा स्वर्गलोकमाप्नोति, श्वेतद्वीपमवाप्नोति, विष्णुलोकमवाप्नोति । ॐ अद्येत्यादिसकलपापक्षयपूर्वकैहिकश्वेतद्वीपनिवासपूर्वकान्तकालिकविष्णु-लोकगमनकामोऽद्यादिसव्वँत्सरय्याँवदेकादश्युपवासपूर्वकं, प्रतिशुक्लद्वादश्यां वासुदेवपूजनव्रतमहङ्करिष्ये इतिसंकल्पं कुर्य्यात् । निवेदनन्तु संकल्पात्प्रागेव कुर्य्यात् ।। पूजा च ॐ वासुदेवाय नमः । इतिमन्त्रेण । पाद्यगन्धतिलपुष्प-धूपदीपनैवेद्यादिभिः पूजां कृत्वा ॐ वासुदेवाय स्वाहा। इतिमन्त्रेण होमं कुर्य्यात् । एकादश्युपवासे निवेदनसङ्कल्पयोर्न्नावश्यकत्वं नित्यत्वात् । यानि यानीह पापानि ब्रह्महत्यासमानि च । अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।। इत्यादिवाक्यैरकरणे प्रत्यवायश्रवणात् । गृहस्थानां शुक्लमात्रे नित्यत्वम् । "गृहस्थस्यापि धर्मोऽयं शुक्लायाञ्च सदा गृहीति" वाक्यात् । अथ सभर्तृकाणां स्त्रीणां भर्तुराज्ञाव्विँना व्रतादौ नाधिकारः । तथा च विष्णुः, पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् । आयुर्हरति सा भर्तुर्नरकञ्चैव गच्छति ।। अपि च, नारी याप्यननुज्ञाता पित्रा भर्त्रा सुतेन वा । निःफलन्तु भवेत्तस्याः यत्करोति व्रतादिकम् ।। इत्यादिवाक्यैर्दोषश्रवणात् ।। अपि च स्कान्दे । नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । भर्तृशुश्रूषयैवैताः लोकान्निष्टान्व्रजन्ति हि ।। यद्देभ्यो यच्च पित्रदिकेभ्यः कुर्याद् भर्ताभ्यर्चनं सत्क्रियाञ्च । तस्यार्द्धं वै सा फलं नान्यचित्ता नारी भुङ्क्ते भर्तृशुश्रूषयैव ।। भार्य्या

पत्युर्मतेनैव व्रतादीनाचरेत्सदा । कामं भर्त्रनुज्ञाताया व्रतोपवासनियमेष्वभ्यास इत्यादि कात्यायनशङ्खलिखितवाक्यात् पत्यनुमत्या पृथगुपवासे दोषाभावः ।

अथाशक्त्यादिना स्वयं व्रताद्यकरणे प्रतिनिधिद्वारा कारयितव्यम्। तथाहि पराशरकात्यायनौ :- उपवासं व्रतं होमं तीर्थयात्रां जपादिकम् । विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तत्फलम् ।। पितृमातृपतिभ्रातृगुर्वर्थे च विशेषतः । उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ।। भार्य्या भर्तुर्व्रतं कुर्य्यात् भार्यायाश्च पतिस्तथा ।। स्कन्दपुराणे, असामर्थ्ये शरीरस्य व्रते च समुपस्थिते । कारयेद्धर्म्मपत्नीं वा पुत्रं वा विनयान्वितम् ।। भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिरिति ।। सङ्कल्पितव्रतमशौचेऽपि कर्तव्यम् । तथा च विष्णुः—व्रतयज्ञविवाहेषु श्राद्धे होमर्च्चने जपे । आरम्भे सूतकं न स्यादनारब्धे तु सूतकम् ।। सङ्कल्परहितं कर्म्म न कुर्य्यादिति । संकल्पेन विना राजन् ! यत्किञ्चित्कुरुते नरः । फलं चाल्पाल्पकं तस्य धर्म्मस्यार्द्धक्षयो भवेदिति भविष्यपुराणम् ।। एकादश्यान्तु नक्तं यस्तथा कुर्य्याद्यथाविधि । मार्गशीर्षस्य शुक्लायामारभ्याब्दं विचक्षणः ।। तद्व्रतं धनदस्येष्टं कृतं वित्तम्प्रयच्छति । मार्गशुक्लैकादश्यां प्रातः कृतनित्यक्रियस्ताम्रपात्रेणार्घमादाय ॐ भगवन् ! सूर्य्यं भगवत्यो देवताऽद्यादिवर्षं यावत् प्रत्येकादशि नक्तभोजनेतरभोजननिवृत्तिव्रत महमाचरिष्यामीतिनिवेद्य, ॐ अद्येत्यादि धनधान्यसमृद्धिकामोऽद्यादिवर्षं यावत् प्रत्येकादशि नक्तभोजनेतर भोजननिवृत्तिव्रतमहं करिष्ये, इति । अस्यां प्रदोषे विष्णुं सम्पूज्य हविष्यान्नम्फलमूलादिकं वा भुञ्जीत ।।

## अथ चातुर्मास्यव्रतविधिः

अथाषाढशुक्लैकादश्यां चातुर्म्मास्यव्रतारम्भः । तथाच हेमाद्रौ भारते—आषाढे तु सिते पक्षे एकादश्यामुपोषितः । चातुर्म्मास्यव्रतं कुर्य्याद्यत्किञ्चिन्नियतो नरः ।। अस्य नित्यत्वं पुन स्तत्रैव, वार्षिकांश्चतुरोमासान्वाहयेत्केनचिन्नरः । व्रतेन, नोचेदाप्नोति किल्बिषं वत्सरोद्भवम् ।। अशक्तौ कार्तिकेऽपि कर्तव्यम्, असम्भवे तुलार्केऽपि कर्तव्यं तत्प्रयत्नत इत्यादि—वचनात् । ततः प्रातः स्नानादिकृत्यं विधाय ॐ भगवन् ! सूर्य्य ! भगवत्यो देवता अद्यादिकार्तिकशुक्लैकादशीय्याँवच्चातुर्म्मास्यव्रतम-हमाचरिष्यामीतिनिवेद्य, ॐ अद्येत्यादिसकलपापक्षयपूर्वकैहिककीर्त्यायुर्य्यशो-बलावाप्तिपूर्वकान्तकालिकार्कतेजस्समानातिप्रदीप्तविमानकरणकाकल्पान्त-विष्णुलोकमहितत्वकामोऽद्यादिकार्तिकशुक्लैकादशीं यावच्चातुर्म्मास्यव्रतमहं करिष्ये इति संकल्प्य, कार्तिकदशमीपर्य्यन्तं कृत्वैकादश्यामुपोष्य द्वादश्यां यथाशक्ति ब्राह्मणाय गां सुवर्णं भोजनं च दत्वा स्वयमपि भुञ्जीत । व्रतस्वरूपन्तु एकान्तरो-

पवासरूपम् । प्रतिदिनं एकभुक्तेतरभोजननिवृत्तिरूपं वा हविष्यान्नभोजनं वा, फलमूलादिभक्षणं वा, सर्वथाऽशक्तौ निरामिषैकबारभोजनं वा कुर्य्यात् । व्रत-नियमास्तु, प्रातःस्नानम् । ॐ सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् । विबुद्धे च विबुद्ध्येत प्रसन्नो मे भवाच्युत ! ।। इतिमन्त्रेण यथाशक्ति विष्णुं संपूज्य प्रार्थयेदनेन ॐ चतुरो वार्षिकान्, यो मांसं वर्जयेन्मासं पुरुषः शुभमानसः । स याति स्वर्गमतुलं दिव्यभोगसमृद्धिमान् ।। इतिवाक्यात् मासद्वयमांसपरित्यागे ब्रह्मलोकप्राप्तिः फलम् । एवं पक्षत्रयमासत्रयमासचतुष्टयादिक्रमेण च मांसपरित्यागे इदमेव फलम् । अत्र त्रिंशद्दिनरूपो यः कश्चिन्मासः स एव गृह्यते । अथ मासविशेषोपादानेन फलविशेषमाह । आश्विने मांसत्यागे मासषट्कावच्छिन्नमांसभक्षणनिवृत्तिव्रतजन्यं फलम् ।। आश्विनं संकलं मासं वर्जयेन्मांसभक्षणम् । मासषट्ककृतं पुण्यं लभते नात्र संशय इतिवचनात् ।। कार्तिके मांसपरित्यागे, यो नरः कार्तिकम्मासं मांसन्तु परिवर्जयेत् । सव्वँत्सरस्य लभते फलं मांसविवर्जनादिति वाक्यात् । तुला-संक्रान्तिप्रथमदिने प्रातःस्नानादिकर्म्म कृत्वा ॐ भगवन् ! सूर्य ! भगवत्यो देवता कार्तिकमासं व्याप्य मांसभक्षणनिवृत्तिव्रतमहमाचरिष्यामीति निवेद्य ॐ अद्येत्यादिसंवत्सरावच्छिन्नमांसपरित्यागव्रतजन्यफलसमफलप्राप्तिकामोऽद्यादि कार्तिकमासं व्याप्य मांसभक्षणनिवृत्तिव्रतमहङ्करिष्ये । एष सौरो मास आचारात् । वर्षमांसपरित्यागे मत्स्यपुराणे :—वर्जयित्वा पुमान्मांसमब्दान्ते गोप्रदो भवेत् । तद्वद्धेममृगं दद्यात्सोऽश्वमेधफलं लभेत् ।। अहिंसाव्रतमित्युक्तः कल्पान्तं भूपतिर्भवेत् इति ।। पूर्ववत् निवेद्य ॐ अश्वमेधफलप्राप्तिपूर्वकाकल्पान्तभूपतित्वकामोऽद्यादिवर्षं व्याप्य मांसभक्षणनिवृत्तिव्रतमहङ्करिष्ये । अत्र व्रतान्ते ब्राह्मणाय गौर्देया । सुवर्ण-घटितमृगश्च देयः । तत्र वाक्यं ॐ अद्य कृतैतद्वर्षावच्छिन्नमांसभक्षणनिवृत्तिव्रत-कर्मप्रतिष्ठार्थमिमां गां रुद्रदैवतामिमं हैममृगं विष्णुदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे । ॐ स्वास्तीति प्रतिवचनम् । यावज्जीवमांसपरित्यागे, मासि मास्यश्वमेधेन यो यजेत शतं समाः ।। न मांसं चतुरो मासान् देवस्योत्थानपनावधि । इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ! ।। इदं व्रतं मया देव ! गृहीतं पुरतस्तव ! निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ! ।। गृहीतेऽस्मिन् व्रते देव ! पञ्चत्वं यदि मे भवेत् । तदा भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दनेति ।। ततः श्रावणे शाकं, भाद्रे दधि, आश्विने दुग्धं, कार्तिके द्विदलम् क्रमेण वर्जयेत् । पटोलं, मूलकं, कूष्माण्डं तिन्तिणीं, बदरीं, वृन्ताकं, जम्बीरं, इक्षुदण्डं, मसूरं, सितसर्षपं, राजमाषान्, कुलत्थान्, आशुधान्यं, मधु, गुडं, तैलं, मासं, नखकेशश्मश्रुवपनं, खट्वायां शयनम् एतानि चातुर्म्मास्ये यत्नेन वर्जयेत् ।।

अथ प्रसङ्गतश्चातुर्मास्ये मांसपरित्यागे ब्रह्मपुराणम् ।। चतुरो वार्षिकान्मासान्यो मांसं परिवर्जयेत् । चत्वारि भद्राण्याप्नोति कीर्तिमायुर्य्यशो बलमिति ।। आषाढ़शुक्लैकादश्यां पूर्णिमायां कर्कसंक्रान्तौ वा, प्रातः कृतस्नानादिराचान्तो व्रती ताम्रपात्रेणार्घमादाय, ॐ भगवन् ! सूर्य्य ! भगवत्यो देवता अद्यादि मासचतुष्टयं व्याप्य प्रतिदिनमांसभक्षणनिवृत्ति व्रतमहमाचरिष्यामीति निवेद्य ॐ अमुकगोत्रेत्यादि कीर्त्यायुर्य्यशोबलप्राप्तिकामोऽद्यादि मासचतुष्टयं यावत्प्रतिदिनमांस-भक्षणनिवृत्तिव्रतमहङ्करिष्ये। बृश्चिकसंक्रान्तेः परदिने ब्राह्मणान् मांसानि भोजयित्वा स्वयमपि भुञ्जीत, इति । एवं सर्वत्र निवेदनसंकल्पयोर्वाक्यमूह्यम्। अथैक-दिनमांसपरित्यागे, यश्च सम्यक् सधर्म्मस्थो गुरुशुश्रूषणे रतः । गच्छेल्लोकं शुभं मर्त्यो दिव्यं देवनिषेवितम् । तमेव दिवसं मांसाद्विरतो लोकमाप्नुयादितिस्मृतेः । मांसात्तु विरतो मर्त्यः स्वर्गं याति दिनत्रयमितिवचनात् दिनत्रयं मासाद्विरतो स्वर्गंयातीत्यर्थः । एवं मांसं व्याप्य मांसत्यागे, दिव्यभोग-समृद्धिमतातुलस्वर्गप्राप्तिः फलम् ।। न खादति च यो मांसं सममेतद्युधिष्ठिरेतिवचनात् कस्याञ्चित्तिथौ प्रातः ॐ भगवन् ! सूर्य्य ! भगवत्यो देवताअद्यादि यावज्जीवं मांसभक्षण-निवृत्तिव्रतमहमाचरिष्यामीति निवेद्य ॐ शतवर्षावच्छिन्नप्रतिमासाश्वमेघ यागजन्यपुण्यसमपुण्य प्राप्तिकामोऽद्यादि यावज्जीवमांसभक्षणनिवृत्तिव्रतमहं करिष्ये । अत्र सर्वत्र मांसनिवृत्तिव्रते पूजादिकव्रतधर्मोनास्तीतिसमयप्रदीपः ।।

## अथैकभुक्तव्रतविधिः

कार्तिकञ्चापि यो मासमेकभुक्तेन तिष्ठति सोऽश्वमेधफलम्प्राप्य वह्निलोके महीयते ।। इति भविष्योक्तेः । सर्वत्र सूर्य्याय व्रतं निवेद्य संकल्पं कुर्य्यात् । कुशादिकमादाय ॐ अद्यामुकगोत्राया अमुकीदेव्या अश्वमेधयज्ञजन्यफलसमफलप्राप्ति पूर्वकंवह्निलोकमहितत्वकामनयाऽद्यादिकार्तिकमासं व्याप्य प्रतिदिनैकभुक्ते-तरभोजननिवृत्तिव्रतमहं करिष्ये । एवं मार्गे । माघे तु, माघन्तु नियतोमास-मित्यादिपद्मपुराणात् ॐ अद्येत्यादि श्रीमत्कुलजन्मोत्तरमहत्त्वप्राप्तिकामोऽद्यादिमाघमासं व्याप्य प्रतिदिनैकभुक्तेतरभोजननिवृत्तिव्रतमहङ्करिष्ये एवं ।। वैशाखेऽपि एकभुक्तमथो नक्तमित्यादिपद्मपुराणवचनात् वैशाखमासं यावदेकभुक्तव्रतेन सर्वमीप्सितं फलमिति पद्मपुराणवचनात् वैशाखमासं यावदेकभुक्तव्रतेन सर्वमीप्सितं फलमिति पद्मपुराणवचनात् वैशाखमासं यावदेकभुक्तव्रतेन सर्वमीप्सितं फलमिति । एवं द्वादशमासेषु पृथक् पृथक् फलम् तद् **व्रतपद्धतौ** प्रपञ्चितम् ।

**अथोपवासव्रतानि** ।। तत्रैकाहोरात्रोपवासे दशसुवर्णदानजन्यं फलम् ।

यावज्जीवम् प्रतिमासमेकोपवासे विद्वत्त्वं धार्म्मिकत्वं च यावज्जीवं प्रतिमासत्रिरात्रोपवासे कौबेरलोकप्राप्तिपूर्वकं परमपदप्राप्तिः फलम् । एवं पञ्चरात्रसप्तरात्रपक्षमासोपवासानां विधिः **समयप्रदीपादौ** द्रष्टव्या । विस्तरत्वादप्रसिद्धत्वान्न लिखितम् ।। अथ **हविष्याणि** लिख्यन्ते भविष्ये :–हैमन्तिकं सिता स्विन्नं धान्यं मुद्गास्तिला यवाः । कलायङ्कङ्गु नीवारं वास्तुकं हिलमोचिका ।। षाष्टिका कालशाकञ्च मूलकं केमुकेतरत् । कन्दः सैन्धवसामुद्रगव्ये च दधिसर्पिषी ।। पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी । पिप्पली जीरकं चैव नागरङ्गं चैव तिन्तिणी ।। कदली लवली धात्री फलान्यगुडमैक्षवम् । अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ।। **अथामिषाणि** लिख्यन्ते :– पाद्मे, प्राण्यङ्गचूर्णं चर्म्माम्बु जम्बीरं बीजपूरकम् । अयज्ञशिष्टं माषादि यद्विष्णोरनिवेदितम् ।। दग्धमन्नं मसूरञ्च मांसञ्चेत्यष्टधामिषम् । गोछागी-महिषी-दुग्धादन्यद्दुग्धादि चामिषम् ।। धान्ये मसूरिका प्रोक्ता अन्नं पर्य्युषितं तथा । द्विजक्रीता रसास्सर्वे लवणं भूमिजं तथा । ताम्रपात्रस्थितङ्गव्यं जलं पल्लवसंस्थितं आत्मार्थम्पाचितञ्चान्नमामिषन्तत्स्मृतं बुधैः ।। प्राण्यकादिचूर्णं शुक्तिकादिचूर्णम् ।

*।। इत्याषाढ़कृत्यम् ।।*

# अथ श्रावणकृत्यम्

## तत्र द्वितीयायामशून्यशयनव्रतम्

श्रावणकृष्णद्वितीयायां प्रातः कृतस्नानादिराचान्तः पूर्ववत्ताम्रपात्रमादाय ॐ भगवन् ! सूर्य्य ! भगवत्यो देवता अद्यादि मासचतुष्टयं कृष्णद्वितीयाधिकरणक-सलक्ष्मीकविष्णुपूजनरूपाशून्य-शयनव्रतमहमाचरिष्यामीतिनिवेद्य कुशत्रय-तिल-जलान्यादाय ॐ अद्येत्यादि यावच्चन्द्रार्कतारकनिजदम्पत्यो-र्वियोगरूपाशोकार्तनिज-दाम्पत्यभवनपुत्रपशुरत्नक्षयाभाव-सप्त-कल्पसहस्रावच्छिन्न सप्तकल्प-शतावच्छिन्नविष्णुलोकमहितत्वकामनयाऽद्यादिमास-चतुष्टयंकृष्णद्वितीयाधि-करणकसलक्ष्मीकविष्णु-पूजन रूपाशून्यशयनव्रतमहङ्करिष्ये इतिसंकल्पं कृत्वा कस्मिँश्चिदुत्तमगृहे उत्तमशय्या-दीपान्नभाजनादिपादुकोपानच्छत्रचामरपीठ-शय्योपकरणताम्बूलव्यजनादियुतां शुक्लपुष्प-शुक्लवस्त्राच्छादितां सुगेण्डुकां नानाफलयुतमाभरणैर्धान्यैश्च संयोजितां वितानयुतामुपकल्प्य तस्यां शय्यायां सौवर्णीं सलक्ष्मीकविष्णुप्रतिमामारोप्य, भगवन् ! सलक्ष्मीकविष्णो ! इहागच्छ इह तिष्ठे-त्यावाह्य, एतानि पाद्यादीनि नमः सलक्ष्मीकाय विष्णवे नमः ।। इदमनुलेपनं ॐ सलक्ष्मीकाय विष्णवे नमः । ततः पुष्पाण्यादाय ॐ श्रीवत्सधारिन् ! श्रीकान्त !

श्रीवास ! श्रीपतेऽव्यय ! गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम् ।। अग्नयो मा प्रणश्यन्तु देवताः पुरुषोत्तम ! । पितरो मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ।। लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा भवान् । तथा कलत्रसम्बन्धो देव ! मात्मा वियुज्यताम् ।। लक्ष्म्या न ! शून्यं वरद यथा ते शयनं सदा । शय्या ममाप्यशून्यन्तु तथैव मधुसूदन ! ।। इति पठित्वा ॐ सलक्ष्मीकाय विष्णवे नमः इतित्रिः संपूज्य, तत एतानि गन्ध पुष्पधूपदीपताम्बूलनैवेद्ययज्ञोपवीतवस्त्राणि ॐ सलक्ष्मीकाय विष्णवे नमः इति दद्यात् । ततो भगवन्तमुद्दिश्य गीतवादित्र निर्घोषं कारयेत् । अन्यवाद्यासंभवे घाण्टामपि वादयेत् ।। ततो रात्रावतैललवणमक्षारञ्च भुञ्जीत । क्षारं शुक्तिकाचूर्णम् ।। एवं भाद्रादिमासत्रितयेऽपि कृष्णद्वितीयायां पूजां कृत्वा तदग्रिमदिने प्रभाते पूर्वोपकल्पितां शय्यां विष्णुप्रतिमां वर्जयित्वा अशेषोपकरणयुतां अव्यङ्गाय वैष्णवाय कुटुम्बिने ब्राह्मणाय वेदज्ञाय दद्यात् । दानं च प्रतिपादनमात्रम् । ततोऽकोपनः शय्यायां द्विजंदम्पती उपवेश्य भक्ष्ययोज्यमयान्वितं भोजनं ब्राह्मणाय प्रतिपादयेत् । सौवर्णीं सलक्ष्मीकविष्णुप्रतिमां पूजोपकरणयुतां सजलहस्तेन ब्राह्मणाय प्रतिपादयेत् । इत्यशून्यशयनव्रतम् ।

## अथ कथा

**ब्रह्मोवाच**—भगवन् ! पुरुषस्येह स्त्रियाश्च विरहादिकम् । शोकव्याधिभयं दुःखं न भवेद्येन तद्वद ।।१।। **श्रीभगवानुवाच**—श्रावणस्य द्वितीयायां कृष्णायां मधुसूदन । क्षीरार्णवे सलक्ष्मीकः सदा वसति केशवः ।।२।। तस्यां संपूज्य गोविन्दं सर्वान् कामान् समश्नुते । गोभूहिरण्यदानानि सप्त कल्पशतानुगम् ।।३।। अशून्यशयनं नाम द्वितीया संप्रकीर्तिता । तस्यां संपूजयेद्विष्णुमेभिर्म्मन्त्रैर्विधानतः ।।४।। श्रीवत्सधारिन् ! श्रीकान्तः श्रीवासः श्रीपतेऽव्ययः । गार्हस्थ्यं मा प्रणाशं मे यातु धर्म्मार्थकामद ! ।।५।। अग्नयो मा प्रणश्यन्तु देवताः पुरुषोत्तम ! । पितरो मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ।।६।। लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा भवान् । तथा कलत्रसम्बन्धो देव मात्मा वियुज्यताम् ।।७।। लक्ष्म्या न शून्यं वरद ! यथा ते शयनं सदा । शय्या ममाप्यशून्यन्तु तथैव मधुसूदन ! ।।८।। गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् । घण्टाभवेदशक्तस्य सर्ववाद्यमयी यतः ।।९।। एवं सम्पूज्य गोविन्दमश्नीयात्तैलवर्ज्जितम् ।। नक्तमक्षारलवणं यावत्तत्स्याच्चतुष्टयम् ।।१०।। ततः प्रभाते संजाते लक्ष्मीपतिसमन्विता । दीपान्नभाजनैर्युक्तां शय्यां दद्याद्विलक्षणाम् ।।११।। पादुकोपानहच्छत्रचामरासनसंयुताम् । अभीष्टोपस्करैर्युक्तां शुक्लपुष्पाम्बरावृताम् ।।१२।। सोपधानक विश्रामां फलैर्नाना-विधैर्युताम् । तथाभरणधान्यैश्च यथाशक्त्या समन्विताम् ।।१३।। अव्यङ्गाय च विप्राय

वैष्णवाय कुटुम्बिने । दातव्या वेदविदुषे न कुप्येत कदाचन ॥१४॥ तत्रेपविश्य दाम्पत्यमलङ्कृत्य विधानतः । पत्न्यास्तु भोजनं दद्यात् भक्ष्यभोज्यसमन्वितम् ॥१५॥ ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्विताम् । प्रतिमां देवदेवस्य सोदकां विनिवेदयेत् ॥१६॥ एवं यस्तु पुमान् कुर्य्यादशून्यशयनं हरेः । वित्तशाठ्येन रहितो नारायणपरायणः ॥१७॥ न तस्य पत्न्या विरहः कदाचिदपि जायते । नारी वा विधवा राजन् ! यावच्चन्द्रार्कतारकम् ॥१८॥ न विरूपं न शोकार्त्तं दाम्पत्यं जायते क्वचित् । न पुत्रपशुरत्नानि क्षयं यान्ति पितामह ! ॥१९॥ सप्तकल्पसहस्राणि सप्तकल्पशतानि च ! कुर्व्वन्नशून्यशयनं विष्णुलोके महीयते ।

*॥ इति मत्स्यपुराणेऽशून्यशयनव्रतकथा समाप्ता ॥*

# अथ मनसादेवी पूजा

अथ श्रावणकृष्णपञ्चम्यां मनसादेवीं विषहाराख्यां पूजयेत् । दैवज्ञबान्धवे इयमेव मौनापञ्चमी । अत्रैव माण्डरब्राह्मणशूद्रतिरिक्ताः विषहराख्यां देवीं पूजयेयुः । तथाहि कृत्यमहार्णवे—सुप्ते जनार्द्दने कृष्णपञ्चम्यां भवनाङ्गणे । पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम् ॥ करवीरैः शातपत्रैः जातिपुष्पैः सचन्दनैः । स्नापयेद् गव्यपयसा तथा शीतोदकेन च ॥ सघृतं पायसं पूपं दद्याद् धूपं सगुग्गुलम् ॥ स्नुही **धाञि** इति प्रसिद्धो विटपः । पूजा च मौनेन कार्या । इयञ्च पञ्चमी शुद्धा अहोरात्रव्यापिनी, विद्धा तु षष्ठीयुता ग्राह्या । पूर्वाह्णे कृष्णपक्षे तु नागतोषकरी तिथिः । पञ्चमी तु प्रकर्तव्या षष्ठीयुक्ता तु नारद ! इति तिथितत्त्वचिन्तामणि-धृतब्रह्मवैवर्तवचनात् । तथा :– पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता । तस्यान्तु तुषिता नागा इतराः सचतुर्थिकेति स्मृतेरुभयपक्षसाधारणनागपञ्चमी परयुतैवेतिमैथिलस्मार्तसिद्धान्त इति महेशठक्कुराः ।

तत्र कृतनित्यक्रिय उदङ्मुख उपविश्य कुशत्रयतिलजलान्यादाय ॐ अद्येत्यादि अमुकगोत्रस्यामुकशर्मणः सपरिवारस्य सर्पभयाभावकामनया मनसादेवीपूजन-महङ्करिष्ये । इति संकल्प्य स्नुहीवृक्षे तदभावे घटस्थजले वा ध्यायेत् । यथा ॐ देवीमम्बामहीनां शशधरवदनां चारुकान्तीं वदान्यां, हंसारूढामुदारामरुणितवदनां सर्वदां सर्वदैव । स्मेरास्याम्मण्डिताङ्गीं कनकमणिगुणैर्नागरत्नैरनेकैर्वन्देऽहं साष्टनागामुरुकुचयुगलां भोगिनीं कामरूपाम् ॥ इतिध्यात्वाऽक्षतमादाय ॐ मनसादेवि ! इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यादीनि ॐ मनसादेव्यै नमः । इदं पयः स्नानीयम्, इदं शीतोदकस्नानीयम् । एवम् इदमनुलेपनम्, इदं सिन्दूरम्, इदमक्षतम्, एतानि पुष्पाणि, एतानि सचन्दनकरवीरकमलजातीपुष्पाणि, इदं

रक्तवस्त्रम, एष सगुग्गुलुधूपः, एष दीपः, इदं विल्वपत्रम्, एतानि नानाविध-नैवेद्यानि, एष सघृतपायसबलिः, इदमाचमनीयम्, इदं ताम्बूलम्, एष पुष्पाञ्जलिः, ॐ मनसादेव्यै नमः इति सम्पूज्य पुनः ॐ अनन्त ! वासुके ! पद्म ! महापद्म ! तक्षक ! कुलीर ! कर्कट ! शङ्ख इहागचछ इह तिष्ठेति प्रत्येकमावाह्य एतानि पाद्यादीनि ॐ अनन्ताय, वासुकये, पद्माय, महापद्माय, तक्षकाय, कुलीराय, कर्कटाय, शंखाय नमः इति वाक्येन प्रत्येकं । गन्धादिभिस्संपूज्य एतानि ससितक्षीरलाजादीनि नैवेद्यानि ॐ अनन्ताद्यष्टनागेभ्यो नमः इति दत्वा ॐ योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् । पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमोनमः ।। इत्यनेन त्रिः प्रणमेदिति । इति विषहरापूजाविधिः ।। सायं च मूषकमृत्तिका-लाजान् सर्पमन्त्रेणाभिमन्त्र्य गृहेषु विकिरेत्। दिने तु गौरमृत्तिकापिण्डं दूर्वाक्षतसिन्दूरैः सम्पूज्य प्रतिगृहं रक्षेत् ।

## अथ श्रावणशुक्लतृतीयायां मधुश्रावणीव्रतम् ।

तथाहि कृत्यसागरे, तृतीया नभसः शुक्ला मधुश्रावणिका स्मृता । मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ।। शुद्धाऽधिकायामप्येवं गणयोगप्रशंसनात् । चतुर्थीसहिता या तु सा तृतीया फलप्रदा ।। अवैधव्यकरी स्त्रीणां पुत्रपौत्रविवर्द्धिनी । आद्या मधुश्रावणिका कज्ज़ली हरितालिका ।। चतुर्थीमिश्रिता स्त्रीभिर्दिवा नक्तं विधीयते ।। इत्यादि नानानिबन्धधृतवचनस्वरसात् इयं मधुश्रवाख्या परयुतैव कर्तव्या । अस्यां अवैधव्यकामाः स्त्रियः व्रतं कुर्य्युः । यथासंभवोपचारैर्गौरीशङ्करपूजनं कथाश्रवणं निरामिषमेकवारभोजनरूपव्रतम् ।।

## अथ शुक्लपञ्चम्यां नागपूजा

तथाहि स्मृतिसागरे, तां परित्यज्य पञ्चम्यश्चतुर्थी संहिता मताः। पञ्चमीनाग-पूजायां कार्य्या षष्ठीसमन्विता । तस्यान्तु तुषिता नागा इतराः सचतुर्थिका ।। इत्यादिवचनात् इयं परयुतैव ग्राह्या । मुहूर्तमात्रसत्त्वे पूजायोग्यकाललाभे, न तु तन्न्यूने । भविष्ये :– श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ! द्वारस्योभयतोलेख्याः गोमयेन विषोल्वणाः ।। पूजयेद्विधिवद्वीर ! दधिदूर्वाङ्कुरैः कुशैः । गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्प्पणैः ।। ये तस्यां पूजयन्तीह नागान् भक्तिपुरस्सराः । न तेषां सर्प्पतो वीर ! भयं भवति कुत्रचित् ।। इयञ्च शुक्लापञ्चमी **माण्डर**ब्राह्मणैः क्वचित् पलिवाडब्राह्मणैरपि, शूद्रैश्चपूज्या । कृष्णा तु पञ्चमी सदसन्मान्यातिप्रशस्तेति स्मार्तमात्रसिद्धान्त इति महेशठक्कुराः ।

## अथ नाग पूजाविधिः

प्रातः कृतनित्यक्रियः कुशादिकमादाय ॐ अद्य श्रावणेमासि शुक्ले पक्षे पञ्चम्यां तिथावमुकगोत्रस्यामुकशर्म्मणः सपरिवारस्य मम सर्वदा सर्वतः

सर्प्यभयनिवृत्तिपूर्वकसर्प्यप्रसादसिद्धिकामो नागान् पूजयिष्ये इति संकल्प्य पूजासामग्रीं संपाद्य गोमयेन पश्चिमगृहाभ्यन्तरे द्वारदक्षिणभित्तौ अष्टौ नागाः विषहराच लेखनीयाः। प्रतिनागशिरसि दूर्वाङ्कुरं रोपयेत्। ततो निर्मितनागांनामुपरि गन्धपुष्पाक्षतैः प्राणप्रतिष्ठा **कार्या** ॐ वासुकिरसि, ॐ तक्षकोऽसि, ॐ कालियोऽसि, ॐ मणिभद्रोऽसि ॐ ऐरावतोऽसि, ॐ धृतराष्ट्रोऽसि, ॐ धनञ्जयोऽसि, ॐ विषहरासि ॥ ॐ मनोजूतिरित्यादि पठित्वा ॐ वासुक्याद्यष्ट नागा विषहरा च इह सुप्रतिष्ठिता भवन्तु। अधः[1] **मानपत्रे** ॐ भूर्भुवःस्वरनन्तइहागच्छ इह तिष्ठ। एतानि पाद्यादीनि ॐ **अनन्ताय** नमः, इदमनुलेपनादिभिः पूजयेत्। ॐ **वासुके** ! इहागच्छ। ॐ[2] वासुकये नमः इत्यनेन पाद्यादिभिः पूजयेत्। **तक्षक** ! इहागच्छ इह तिष्ठ ॥ ॐ तक्षकाय नमः इति पाद्यादिभिः पूजयेत् ॥ ॐ **कालीय** इहागच्छ इह तिष्ठ ॥ ॐ कालीयायनमः इतिपाद्यादिभिः पूजयेत्। ॐ **मणिभद्र** ! इहा० इहतिष्ठ। ॐ मणिभद्राय नमः इति पाद्यादिभिः पूजयेत्। ॐ **ऐरावत** ! इहा० इहतिष्ठ। ॐ ऐरावताय नमः इतिपूर्ववत्पूजयेत्। ॐ **धृतराष्ट्र** ! इहा० इहतिष्ठ, ॐ धृतराष्ट्राय नमः इत्यनेन पाद्यादिभिर्पूजयेत्। ॐ **कर्कोटक** ! इहागच्छ इह तिष्ठ। ॐ कर्कोटकाय नमः इतिपाद्यादिभिः पूजयेत्। ॐ **धनञ्जय** ! इहागच्छ इहतिष्ठ। एतानि पाद्यादीनि ॐ धनञ्जयाय नमः। इद मनुलेपनम्, इदंरक्तानुलेपनम्, इदमक्षतम्, एतानि पुष्पाणि, एतानि विल्वपत्राणि, इदंमाल्यम्, एषधूपः, एषदीपः, एतानि नैवेद्यानि, इदं ताम्बूलम्, इदमाचमनीयम्, ॐ नानाफलसमायुक्तं पुष्पाञ्जलिमिमं प्रभो !। समर्पयामि नागेन्द्र ! दीनं मां रक्ष सागरात् ॥ एष पुष्पाञ्जलिः ॐ अष्टनागेभ्यो नमः। ॐ विषहरे ! इहागच्छ इह तिष्ठ। एतानिपाद्यादीनि ॐ विषहरायै नमः ॥ मनसा देवीञ्च पञ्चोपचारैः पूजयेत्। अञ्जलिम्बध्वा ॐ **श्रावणे** शुक्लपञ्चम्यां यत्कृतं नागपूजनम्। तेन तृप्यन्तु मे नागा भवन्तु सुखदाः सदा ॥ अज्ञानाज्ज्ञानतो वापि यन्मया पूजनं कृतम्। न्यूनातिरिक्तं तत्सर्वं भो नागाः क्षन्तुमर्हथ ॥ युष्मत्प्रसादात्सकला मम सन्तु मनोरथाः। सर्वदा मत्कुले मास्तु भयं सर्प्यविषोद्भवम् ॥ इति प्रार्थ्य प्रणमेत्। सदुग्धलाजादि सदधितण्डुलादि पञ्चकषायान् निवेदयेत्। इमे सदुग्धलाजाः वासुक्याद्यष्टनागेभ्यो विषहरायैच नमः। ततः कुशैः पूजाजलमादाय ओ वासुक्याद्यष्टनागाः विषहरा च सुप्रीयन्ताम् इत्यात्मानम् अन्याँश्च अभिवञ्चेत्। ततो विसर्जयेत्।

---

१. मएन इतिख्यातस्य गुल्मस्य विशालपत्रे।

२. वासुक्याद्यष्ट नागाः प्रसिद्धाः नामो परिपूज्या।

ततो: बहिरागत्य प्रक्षालितपादुकारूढो द्वारदक्षिणभित्तौ गोमयरचित-वासुक्याद्यष्टनागान्, उत्तरभित्तौ च मद्वासभूम्यधिपनागान् च पूज्येत् विसर्जयेच्च। दक्षिणादानम्। ब्राह्मण भोजनम्। स्वयं चाम्लतिक्तादिनैवेद्यानि सपरिवारो भुञ्जीत। सायंकाले मूषकंमृत्तिका-लाजान् सर्पमन्त्रेण अभिमन्त्र्य गृहेषु विकिरेत्।

## अथ रक्षिकाबन्धनम्

अथ श्रावणीपूर्णिमायां भद्रारहितायां[1] रक्षिकाबन्धनं कारयेत्। तथाहि ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः। कर्तव्यो रक्षिकाबन्धो द्विजान् संपूज्य शक्तितः इतिस्मृतेः।। भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा। श्रावणी नृपतिं हन्ति ग्रामं हन्ति च फाल्गुनी।। श्रावणी दौर्गनवमीत्यादि वाक्यात् इयं पूर्वविद्धा कर्तव्या। रक्षिकाबन्धनमन्त्रो यथा ॐ येन बद्धो बली राजा दानवेन्द्रो महाबलः। तेन त्वां प्रतिबन्ध्नामि रक्षे ! मा चल मा चल।। इति।

*।। इति श्रावणकृत्यम् ।। ।। इति द्वादशमासकृत्यानि ।।*

# अथ संक्रान्तिकृत्यम्

संक्रान्तिं प्रकृत्य देवीपुराणे "एकधापि कृतं तस्मिन् कोटि कोटि गुणं भवेत्। धर्म्माद्विवर्द्धते ह्यायुः राज्यपुत्रसुखोदयः।। अधर्माद् व्याधिशोकादि विषुवायनसन्निधौ।। विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम्। एवं विष्णुपदे चैव षडशीतिमुखे तथा।।" संक्रान्ति नामानि यथाक्रमम् "अयनविष्णुपदी षडशीतयो विषुवविष्णुपदी षडशीतयः"।। तथा "रविसंक्रमणे पुण्ये न स्नायाद् यस्तु मानवः। सप्तजन्मान्यसौ रोगी दरिद्रश्चोपजायते"। अथात्र **पुण्यकालः** ।। अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश। कालः पुण्योऽर्कसंक्रान्तेः विद्वद्भिः परिकीर्तितः।। देवीपुराणे, षडशीतिमुखेऽतीते वृत्ते च विषुवद्द्वये। भविष्यत्ययने पुण्यमतीते चोत्तारायणे।। अयन इति दक्षिणायन इत्यर्थः उत्तरायणस्य विशिष्योपादानात्।। अत्र देवीपुराणवाक्येन संक्रान्तिविशेषे पुण्य- कालविशेषकथनात् शातातपवाक्यमश्रुतविशेषे विष्णुपदीमात्रे व्यवतिष्ठते। एषा च व्यवस्था दिनसंक्रातिषु। रात्रिसंक्रान्तिषु[2] देवीपुराणम्। मानार्धं भास्करे पुण्यमपूर्णे शर्व्वरीदले। संपूर्णे तूभयोर्द्देयमतिरेके परेऽहनि।। मानार्द्धं दिनार्द्धं, भास्करे निरंशके इतिशेषः, उभयोर्दिनार्धयोः, अतिरेके अर्धरात्रातिरेके। तदयमर्थः, अपूर्णे अर्द्धे यदि संक्रान्तिस्तदा पूर्वदिनस्योत्तरार्द्धं पुण्यं, यदि संपूर्णार्द्धरात्रे संक्रान्तिस्तदा पूर्वदिनस्योत्तरार्द्धम् उत्तरदिनस्य पूर्वार्द्धञ्च पुण्यम्, अर्द्धरात्रोपरि

---

१. पूर्णिमाया उत्तरार्धे (दिन एव)

२. सर्वासु संक्रान्तिषु समानैव व्यवस्था मैथिलमते।

संक्रान्तौ उत्तरदिनपूर्वार्द्धमेव पुण्यमिति । यदा पूर्वदिने संक्रान्तिकाले च एकैव तिथिर्भवति तदा पूर्वदिनोत्तरार्द्धमेव पुण्यम् । यदाह तत्रैव—आदौ पुण्यं विजानीयाद्यद्य-भिन्ना तिथिर्भवेत् ।। इति । एवमेव समयप्रदीपादयः । ज्योतिःशास्त्रे निरंशको यदा भानुः पूर्वापरद्विनद्वये । पूजयेद्वासरं पूर्वमपरं पुण्यवर्जितम् । भुजबलभीमे, अर्द्धरात्रे कलान्यूने यदा संक्रमते रविः । तदहः पुण्यमिच्छन्ति गार्ग्यगालवगौतमाः ।।

## अथ ग्रहणम्

स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने । राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।। गुणवत्सर्वकामीयं पितॄणामुपतिष्ठते ।। शातातपः ।। सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ।। देवलः—राहुदर्शन-संक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कुर्य्यान्निशि काम्यव्रतेषु च ।। अत्ययो बन्धुविनाशः, वृद्धिः पुत्रजन्म, निशा निषिद्धकालानां रात्र्यादीनामुपलक्षणमिति जाबालः । संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः । चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचरः ।। अत्र दर्शनं चाक्षुषज्ञानपरम्, गोचरपदं चाक्षुषज्ञान-विषयत्वयोग्यतावस्थावत्त्वपरम् । तेन सूर्योपरागो यावच्चाक्षुषज्ञानविषयत्व-योग्यतावस्थावान् भवति तावत् पुण्यकाल इत्यर्थः । एवं च स्वयमदृष्टोऽपि परैण दृश्यमान इन्दुः सूर्य्यश्च पुण्यक्रियाहेतुर्भवति । दर्शनानन्तरं मेघादिच्छन्नेऽपि पुण्यक्रियाहेतुर्भवति तादृशयोग्यतासत्त्वात् । अस्तंगतयोस्तथा दिनरात्र्योश्चन्द्र-सूर्य्ययोरुपरागो न पुण्यकालो भवति । तथाविधयोग्यताया अभावात् इति एवमेव समयप्रदीपतः ।

नाद्यात्सूर्य्यग्रहात् पूर्वमह्नि, सायं शशिग्रहात् । ग्रहकाले च नाश्नीयात्स्नात्वाश्नीयाच्च मुक्तयोः । मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा । स्नात्वा दृष्ट्वा तु यह्नद्याद् ग्रस्तास्तमितयोस्तयोः ।। महानिशा सार्द्धप्रहरोपरि रात्रौ सार्द्धप्रहरद्वयं यावत् । ज्योतिःशास्त्रे तु, अर्द्धरात्रे ह्यतीते तु यदा चन्द्रग्रहो भवेत् ।। अत्र चन्द्रसूर्य्यलोकगमनकामनायां यस्मिन्नहोरात्रे उपरागस्तस्मिन्नुपवासः कर्त्तव्यः। तथाच दक्षः, अहोरात्रन्तु नाश्नीयाच्चन्द्रसूर्य्यग्रहो यदा । मुक्तं दृष्ट्वा तु भुञ्जीत यदि न स्यान्महानिशा ।। सूर्य्याचन्द्रमसोर्लोकानक्षयान्याति मानवः । धौतपाप्मा विशुद्धात्मा मोदते तत्र देववत् । इति कामनाश्रवणात् ।। यदि कामना न भवति, तदा ग्रहणमोक्षानन्तरं स्नात्वा महानिशां विहाय भोक्तव्यम् यदा च गणितेन ग्रहणमोक्षनिश्चयो भवति, मेघादिना न चन्द्रसूर्य्यौ दृश्येते, तदापि कामनाविरहे भोजने न दोषः[१] । अर्द्धरात्रानन्तरं यावद् ग्रासे मोक्षेऽपि सकामस्य भोजने दोषोभवति, श्राद्धादिकरणे भोजनजन्यमशौचं भवति ।।

१. व्यवहारविरुद्धोऽयम् ।

**कृत्यविधिः**[१]। राहुभोग्यनक्षत्रपादावधिकचतुःपादाभ्यन्तरे चन्द्रस्थित्या रात्रौ पौर्णमास्यन्ते चन्द्रग्रहणम् । एवं राहुभोग्यनक्षत्रपादावधिकपादत्रयाभ्यन्तरे सूर्य्यस्थित्या दिवाऽमावास्यान्ते सूर्य्यग्रहणम् । तत्र ग्रहणं दृष्ट्वा सामान्यजलेऽपि स्नातव्यं राहूपरागे स्नायादितिश्रुतेः ।। ॐ अद्य राहुग्रस्ते दिवाकरे (अस्यांरात्रौ निशाकरे) वा अमुकगोत्रस्यामुकशर्मणो गङ्गास्नानजन्यफलसमफलप्राप्तिकामोऽस्मिञ्जलाशये स्नानमहङ्करिष्ये इति संकल्प्य स्नायात् अपराह्ने रात्रौ वा सन्ध्यावन्दनं विनापि मृतपितृकस्तर्पणं कुर्य्यात् । यथाशक्ति दानादिकं च कुर्य्यात् । सोमे चन्द्रग्रहणे, रवौ सूर्य्यग्रहणे चूडामणियोगः । तत्रानन्तगुणफलेति वाक्ये विशेषः ।। दानादावपि तत्फलमूहनीयम् । उक्तयोगेतरत्र चन्द्रग्रहे दानादौ अमुकद्रव्यदानजन्यफललक्ष-गुणफलप्राप्तिकाम इति । रविग्रहे दशलक्षगुणफलेति वाक्ये विशेषः । गङ्गायान्तु सर्वंभूमिसमं दानं सर्वे व्याससमा द्विजाः । सर्वङ्गङ्गा समं तोयं ग्रस्तयोश्चन्द्रसूर्य्ययोः, इन्दोर्लक्षगुणं प्रेक्तं रवेर्दशगुणञ्च तत् । गङ्गतीरे तु संप्राप्ते इन्दोः कोटी रवेर्दश ।। इति व्यासोक्तेः । चन्द्रग्रहणे गङ्गास्नानजन्यफलकोटिगुणफलेति, रविग्रहे तु दशकोटिगुणेति वाक्ये विशेषः । एवं तत्र दानादावपि । लक्षेत्यत्र कोटीति दशलक्षेत्यत्र दशकोटीतिविशेषः ।। ग्रहणे पार्वणाधिकारिणा आमान्नेन पार्वणं कर्त्तव्यम् । जननमरणाशौचिनाऽपि स्नानमात्रङ्कर्तव्यम् । क्षताशौचेऽपि सर्वं कुर्यात् । जन्मचतुःसप्ताष्टनवदशद्वादशचन्द्रेषु जन्मसप्तमनक्षत्रेषु दृष्टे सति तद्दोषशमनाय काञ्चनन्दद्यात् । अदर्शनेऽपि मुक्तौ स्नात्वा ऽऽचम्य ॐ उत्तिष्ठ गम्यतां राहो ! त्यज्यतां चन्द्रसङ्गमः । कर्म्मचाण्डालयोगोत्थं कुरु पापक्षयम्मम ।। इतिमन्त्रम्पठेत् ।। दर्शनानधिकारिणापि स्नानमात्रमवश्यं कर्तव्यम् । सूर्य्यग्रहणात्पूर्वं प्रहरचतुष्टयं, चन्द्रग्रहात्तु पूर्वं प्रहरत्रयं न भोक्तव्यम् । सूर्य्यग्रहे तु नाश्नीयात् पूर्वय्याँमचतुष्टयम् । चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विनेति कालमाधवधृतवृद्धगौतमोक्तेः । अत्यन्ता-समर्थैस्तु ग्रहणात् पूर्वं मुहुर्तत्रयं तत्काले च सर्वथा न भोक्तव्यम् । ग्रस्तोदये तु तत्प्राक् प्रहरचतुष्टयं चन्द्रग्रहेऽपि भुञ्जीत इति बहुनिबन्धानालोक्य सिद्ध-वल्लिखितमितिजगद्धरः।

## अथ पञ्चपर्वकृत्यम्

चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा । पार्वाण्येतानि राजेन्द्र रविङ्संक्रान्तिरेव च ।। तैलस्त्रीमांससंभोगी पर्वस्वेतेषु वै पुमान् । विणमूत्रभोजनन्नाम प्रयाति नरकं प्रति ।। अत्र तैलपदेन तिलप्रभवस्नेह एवाभिधीयते मुख्यतया तत्रैव तस्य वृत्तेरिति **न्यायवार्त्तिकटीकायां वाचस्पतिमिश्रा** अवोचन् ।। एवमेव **कल्पतरु-वाक्य-**

१. जगद्धरशर्मणा योजितः ।

**पारिजात-रत्नाकराः** । तेन सर्षपादिस्नेहे दोषाभावः । पक्वेऽपि तिलतैले दोषाभावो वैद्यकात् । पैठीनसिः, न पर्वसु तैलं क्षुरं मैथुनं मांसमित्युपेयात्" । उपभुञ्जीतेत्यर्थः । बौधायनः, पर्वसु नाधीयीत न स्त्रीमुपेयात्, नामावास्यायां हरितानि छिन्द्यात्, मांसमश्नीयात्" विष्णुपुराणे-छिनत्ति वीरुधं यस्तु वीरुत्संस्थे निशाकरे । पत्रं वा पातयत्येकं ब्रह्महत्यां स विदन्ति । वीरुत्संस्थे वनस्पतिगत इत्यर्थः । अमावास्यायां चन्द्रोवनस्पतिगतो भवति ।। अत्र दोषाभावमाह, कुशाः काशं च पुष्पं च गवामर्थे तृणानि च । इन्दुक्षये न दुष्यन्ति होमार्थं समिधस्तथा ।। कुशाः संध्यावन्दनाद्युचिताः, काशमपि तादृशम् ।। पुष्पमित्युपलक्षणं पूजार्थपत्रं पुष्पं च इन्दुक्षय अमावास्यायां न दुष्यन्ति छिन्नेषु दूषणं न भवीत्यर्थः । तथा अमावास्यायां न वाहयेद्वलीवर्दान् इत्यादि ।

## अथ तिथिवारनक्षत्रनियतकृत्यानि

वामनपुराणे, नन्दासु नाभ्यङ्गमुपाचरेत क्षुरं च रिक्तासु जयासु मांसम् । पूर्णासु योषित् परिवर्ज्जनीया भद्रासु सर्वाणि समाचरेच्च ।। नाभ्यङ्गमर्के न च भूमिपुत्रे क्षौरं च शुक्रे रविजे च मांसम् । बुधेषु योषां न समाचरेच्च शेषेषु सर्वाणि सदैव कुर्य्यात् ।। चित्रासु हस्ते श्रवणे च तैलं क्षौरं विशाखाप्रतिपत्सु वर्ज्ज्यम् । मूले मृगे भाद्रपदे च मांसं योषिन्मघाकृत्तिकयोत्तरासु ।। अत्र प्रकरणे अभ्यङ्गस्तैलकरणको निषिद्धः, भाद्रपदं च पूर्वभाद्रमितिप्रामाणिकाः ।। प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सत्तमाः । दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ।। मन्दे भौमिदिने श्राद्धे कुहूषष्ठी निरंशके । वस्त्राणां क्षार संयोगो दहत्यासप्तमं कुलम् ।। आदित्यसौरिधरणीसुतवासरेषु प्रक्षालनाय रजकस्य न वस्त्रदानम्। शंसन्ति कीरभृगुगर्गपराशराद्याः पुंसां भवन्ति विपदः सहपुत्रदारैः ।।

## अथ मासोपवासव्रतविधिः

व्रतपद्धतौ स्मृतिः, यस्तु मासं क्षपेद्धीरो जितक्रोधो जितेन्द्रियः । विमानेन स दिव्येन चाप्सरोभिः समन्वितः ।। सर्वलोकेषु वसतो बहून्यब्दशतानि च । ततो ब्रह्मासनं प्राप्य ब्रह्मणा चानुपूजितः ।। ब्रह्मलोके निवसते यथा देवो नरोत्तमः ।।

अथ कस्मिँश्चित्पुण्यमासीयपुण्यदिनात्पूर्वदिने नखकेशादि वापयित्वा स्नानादिकृतसय्यँमः हविष्यान्नमेकवारभोजनं कृत्वा तद्दिने प्रातःकृतस्नानादिराचान्तः पूर्ववत्ताम्रपात्रार्घमादाय ॐ अद्य भगवन् ! सूर्य्य ! भगवत्यो देवता अद्यादिमासं व्याप्य प्रत्यहमुपवासव्रतमहमाचरिष्यामीतिनिवेद्य कुशत्रयतिलजलान्यादाय ॐ अमुक-गोत्रस्यामुकशर्मणः दिव्यविमानकरणकाप्सरस्साहित्यबह्वब्दशतावच्छिन्न-

स्वर्गलोकवासानन्तरब्रह्मासनप्राप्तिपूर्वक-ब्रह्मानुपूजितत्वदेववद्ब्रह्मलोक-निवास-कामोऽद्यादिमासमेकं यावत्प्रत्यहमुपवासव्रतमहं करिष्ये इति संकल्प्य व्रतं कुर्य्यात् ।। पारणादिने धेनुं ब्राह्मणाय दत्त्वा ब्राह्मणान् भोजयित्वा पारणां कुर्य्यात् ।। पुनः मत्स्यपुराणे, पक्षोपवासी यो दद्याद्विप्राय कपिलाद्वयम् । स ब्रह्मलोकमाप्नोति देवासुरसुपूजितः ।। कल्पान्ते राजराजःस्यात् 'प्रभा' व्रतमिदं स्मृतम् ।। मासोपवासी यो दद्याद्धेनुं विप्राय शोभनाम् । स वैष्णवपदं याति 'ब्राह्मं व्रतमिदं स्मृतम् ।। अत्र द्वयोरपि व्रतयोर्यद्यपि दानं प्रधानं भासते तथापि उपवासरूपमेव व्रतं, दानं तु तस्योत्तराङ्गमिति सम्प्रदायो, निबन्धकर्तृभिरुपवासप्रकरणे लिखिततत्वात् । तत्र पक्षोपवासे कस्याञ्चितिथौ पूर्ववन्निवेद्य ॐ अमुकगोत्रेत्यादि ब्रह्मलोकप्राप्ति-देवासुरपूजितत्व-कल्पान्तराधिकरणकराजराजत्व-प्राप्ति कामनयाऽद्यादिपक्षोपवासरूप 'प्रभा' व्रतमहङ्करिष्ये इति संकल्प्य व्रतं कृत्वा अन्ते कपिलाद्वयं दद्यात्तत्र वाक्यम् ॐ अद्य कृतोपवासोहमिदं कपिलाद्वयं रुद्रदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । ॐ स्वस्तीति प्रतिवचनम् । ततोदक्षिणा दानान्तरवत् । एवं मासोपवासे पूर्ववन्निवेद्य ॐ वैष्णवपदगमनकामनया ब्रह्मव्रतरूप मासोपवास-व्रतमहङ्करिष्ये । अत्र व्रतान्ते धेनुदानम् । तद्वाक्यम् ॐ अद्य कृतमासोपवासोहमिमां धेनुं रुद्रदैवतामित्यादि । दक्षिणा च । पक्षोपवासे "अर्द्धमासं क्षिपेद्यस्तु नित्यमेव-मतन्द्रितः । देवराजेन तुल्योऽसौ दत्वा स्वर्गे च तिष्ठति"।। पूर्ववन्निवेद्य देवराजेन तुल्यत्वभवनपूर्वकस्वर्गावस्थानकामोऽद्यादिपक्षमेकं व्याप्योपवासव्रतमहङ्करिष्ये ।। एवं षष्ठान्तरकाले, "षष्ठे काले तु कौन्तेय ! नरः सव्वँत्सरन्तु यः ! अश्वमेघस्य यज्ञस्य फलं प्राप्नोति मानवः ।। चक्रवाकप्रयुक्तेन विमानेन स गच्छति ।। चत्वारिंशत्सहस्राणि वर्षाणि दिवि मोदते"।। कस्मिँश्चिद्दिने प्रातः व्रतं निवेद्य अश्वमेघ-यज्ञजन्यफलसमफल-प्राप्तिचक्रवाकप्रयुक्तविमानकरणकगमन-चत्वारिंशत्सहस्रवर्षावच्छिन्नस्वर्गाधिकरणकमोदनप्राप्तिकामोऽद्यादि वर्षं व्याप्य प्रतिषष्ठान्तरकालेतरकालभोजनवृत्तिव्रतमहं करिष्ये ।। एवम् एकान्तरव्रते "यस्तु सव्वँत्सरं पूर्णं चतुर्थं भक्तमश्नुते ।। अहिंसानिरतो नित्यं सत्यवाङ्नियतेन्द्रियः ।। वाजपेयस्य यज्ञस्य फलं प्राप्नोति मानवः । त्रिंशद्वर्ष सहस्राणि स्वर्गलोके महीयते"।। प्रातः निवेद्य ॐवाजपेयज्ञजन्यफलसमफलप्राप्तित्रिंशद्वर्षसहस्रावच्छिन्न-स्वर्गलोकमहितत्वकामोऽद्यादि सव्वँत्सरं व्याप्य प्रतिचतुर्थान्तरकालेतरकाले भोजननिवृत्ति-व्रतमहङ्करिष्ये। अहिंसासत्यनियतेन्द्रियत्वमत्राङ्गम् । एषु सावनो मासः ।

## अथ व्रतमात्रस्य पूर्वनियमाः

तत्र देवलः ।। अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः । सूर्य्याय देवताभ्यश्च

निवेद्य व्रतमाचरेत् । आहारमभुक्त्वा अर्थात् पूर्वदिने एकमाहारं भुक्त्वा, तेषामयमर्थः, वारद्वयप्राप्ते भोजने पूर्वदिने एकमाहारं भुक्त्वा अग्रिमदिने प्रातःकाले कृतस्नानादिराचान्तः सूर्य्याय देवताभ्यश्च निवेद्य भगवन् ! सूर्य्य ! भगवत्यो देवता अद्य एतद्व्रतमहमा-चरिष्यामीतिप्रकारेण निवेद्य व्रतसंकल्पं कुर्य्यात् ॥ एकभुक्तकालः पाद्मे, मध्याह्नव्यापिनी ग्राह्या एकभुक्ते सदा तिथिः ॥ मध्याह्नश्च पञ्चधाविभक्त-दिनतृतीयोंऽशः । तेन यद्यपि द्वादशदण्डोत्तरं प्राप्यते, तथापि दिनार्धसमयेऽतीते भुज्यते नियमेन यत् । एकभुक्तमितिप्रोक्तमतस्तत्स्याद्दिवैव हि ॥ इति स्कान्दोक्तेः । अथ संकल्पप्रकारमाह महाभारते, गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासन्तु गृह्णीयाद्यद्वा संकल्पयेद्बुधः ॥ औदुम्बरपात्रं ताम्रमयं पात्रमित्यर्थः। यद्वेति नक्तादिव्रतमितिकल्पतरुः । यद्वा सङ्कल्पयेत्ताम्रपात्राद्यभावे संकल्पमात्रमपि कुर्य्यादिति समयप्रदीपतः ॥

अथ व्रतमात्रस्य दिने कर्तव्यमाह भविष्ये क्षमा सत्यं दया दानं शौचिमिन्द्रियनिग्रहः । देवपूजाग्निहवनं सन्तोषस्तेयवर्जनम् । सर्वव्रतेष्वयं धर्म्मस्सामान्यो दशधा स्मृतः ॥ **देवपूजा**, यस्य देवस्य व्रतं तस्य पूजा ॥ **अग्निहवनं**, यत्र विशिष्य विहितं तत्रैव ज्ञेयम् । एकादश्यादिषु शिष्टानां होमानाचरणात् । उपवासस्य व्युत्पत्तिमुखेन तद्धर्ममाह भविष्ये :–उपावृत्तस्य दोषेभ्यो यस्तु वासो गुणैस्सह । उपवासस्स विज्ञेयस्सर्वभोगविवर्जितः ॥ उपावृतस्य निवृत्तस्य, दोषेभ्यो रागद्वेषादिभिः । गुणैः क्षमासत्यादिभिस्सह यो वासः अवस्थानं स पुरुषस्य उपवास इत्यर्थः । सर्वभोगविवर्जितः तैलाभ्यङ्गादिभोगशून्यः । भोगविशेषे निषेधाभावमाह शातातपः– गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम् । उपवासे न दुष्यन्ति दन्तधावनमञ्जने ॥ दन्तधावनमत्र तृणादिना । काष्ठेन च व्रते निषेधात्, तथाहि–उपवासे तथा श्राद्धे न खादेद्दनतधावनम् । दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलमिति स्मृतेः ॥ विष्णु-धर्म्मे–तज्जप्यं जपनं ध्यानं तत्कथाश्रवणादिकम् । तदर्चनञ्च तन्नामकीर्तनश्रवणादयः ॥ उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः । देवलः–उपवासः प्रणश्येत्तु दिवास्वप्नाक्षमैथुनैः । अत्यये चाम्बुपाने च नोपवासः प्रणश्यति ॥ अक्षैः पाशकैः द्यूतेनेति यावत् । अत्यये विनाशे सम्भानव्यमाने इत्यर्थः इत्यादिव्रतपद्धतौ प्रपञ्चितम् । उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम् । कारयेत्तेन सगुणं उपवासो हि जायते ॥ इति वृद्धशातातपः ॥ सगुणः प्रकृष्टफल इत्यर्थः । द्विज इति व्रतमात्रोपलक्षणम् । व्रते च सर्ववर्णानाञ्चाधिकारः ॥ पूर्वगृहीतव्रतपरित्यागे दोषमाह छागलेयः–पूर्वव्रतं गृहीतं यो नाचरेत्काममोहितः । जीवन्भवति चण्डालो मृतः श्वा चैव जायते ॥ अत्र

कामकृते परित्यागे दोषमाह, यदा तु प्रमादादिना परित्यागस्तदा न दोषः। तथाच देवलः, सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम्। अव्रतघ्नानि कीर्त्यन्ते सकृदेतानि शास्त्रतः। सर्वभूतभयम् व्याधादिजन्तुभ्यो भयम्। व्याधिः व्रतप्रतिबन्धकक्षमः, प्रमादो विस्मरणम्। गुरुशासनं गुरोराज्ञा ।। सकृदित्यभिधानादेतैरपि एकवारपरित्यागे न दोषः, पुनः परित्यागे दोष एव। आरब्धे व्रते सूतकाद्यशौचदोषो न स्यात्। न व्रतिनां व्रते इति विष्णुवाक्यात्। व्रतिनामारब्धव्रतानां व्रते सूतकमृतकदोषो नास्तीत्यर्थः। विष्णुपुराणे च :-व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सूतकमिति ।। स्त्री तु आरब्धे व्रते सति मध्ये रजोयोगेऽन्येन पूजाङ्कारयेत्। अन्तरा तु रजोयोगे पूजामन्येन कारयेदिति मत्स्यपुराणात्। पूजेत्युक्त्वा कायिकमुपवासादिकं स्वयमेव कुर्य्यादिति **योगीश्वरः**। समारब्धे व्रते पश्चाद्व्रतभङ्गो भवेद्यदि। गोदानञ्च ततः कृत्वा पुनर्व्रतमतश्चरेदिति कृत्यमहार्णवे बौधायनः ।। होमदेवार्चनाद्यासु क्रियास्वाचमने तथा। नैकवस्त्रः प्रवर्तेत द्विजवाचनिके जपे ।। द्विजवाचनिके अभिवादने। इयञ्च द्विवस्त्रता स्त्रीणामपि विज्ञेया, अत्र विशेषाश्रवणात् वाक्यान्तराच्च। तथाहि हरिवंशे स्त्रीपुण्यक-विधाने उमाऽरुन्धतीसंवादे, शुक्लमेव सदा वासः प्रशस्तं चन्द्रसंभवे। अन्तर्वासोऽपरं चैव उपवासे व्रते तथा ।। अत्र चन्द्रसंभवे अरुन्धत्याः सम्बोधनम् ।। व्यास :-आर्द्रवासास्तु यः कुर्य्यात् जपहोमप्रतिग्रहान्। सर्वन्तदासुरं ज्ञेयं बहिर्जानु च यत्कृतम् ।। वायुपुराणे क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः। भवन्ति तु वृथा तस्य क्रियाः सर्वा न संशयः ।। वशिष्ठः-जपहोमोपवासेषु धौतवस्त्रधरो भवेत्। अलंकृतः शुचिर्मौनी श्रद्धावान् विजितेन्द्रियः ।। शातातपः-सव्यादंशात्परिभ्रष्टं कटिदेशस्थिताम्बरम्। एक-वस्त्रन्तु तद्विद्याद्दैवे पित्र्ये च वर्जयेत् ।। याज्ञवल्क्यः :-परिधानाद्वहिःकक्षानिबद्धा ह्यासुरी भवेत्। धर्म्मकर्म्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ।। याज्ञवल्क्यः-विधि युक्तन्तु यत्कर्म्म करोत्यविधिना नरः। फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत् ।। इत्याद्यनेकानि वचनानि विधिनिषेधकानि निबन्धेषु लिखितानीत्यनुसन्धेयम् ।। इति व्रतसामान्यकृत्यम् ।।

**व्रताधिकारः प्रतिपाद्यते,** तथाहि देवलः-व्रतोपवासनियमैः शरीरोत्तापनैः तथा। वर्णाः सर्वे विमुच्यन्ते पातकेभ्यो न संशयः ।। तदेवमुक्तनियमवतां चतुर्णामपि वर्णानां स्त्रीपुरुषसाधारण्येन व्रतेष्वधिकारः इति ।। महाभारते, मामुपाश्रित्य कौन्तेय ! येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्च शूद्राश्च तेऽपि यान्ति पराङ्गतिम् ।। तत्रायं विशेषो यत् स्त्रीणां भर्तुराज्ञां विना न स्वातन्त्र्येण व्रतादिष्वधिकार इति ।।

## अथ व्रतकर्तुर्म्महिमा

तत्र भविष्ये–अनग्नयस्तु ये विप्रास्तेषामेव विधीयते। व्रतोपवासनियमैर्नानादानैस्तथा नृपः ! देवादयो भवन्त्वेवं तेषां प्रीता न संशयः ।। महाभारते "नास्ति वेदात्परं शास्त्रं नास्ति मातृसमो गुरुः । न धर्म्मात्परमस्तीह तपो न पोषणात्परम् ।।" पद्मपुराणेऽपि, ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च । उपवासैस्तथा तुल्यं तपः कर्म्म न विद्यते ।। तथा, नाग्निचिन्नरकं याति सत्पुत्री न च सद्व्रती । नास्ति मेधादियाजी च गोसहस्रप्रदो नच ।। ये कुर्वन्त्युपवासाँश्च विधानेन शुभान्विताः । न यान्ति ते मुनिश्रेष्ठ ! नरकान् भीमदारुणान् ।। विष्णुधर्म्मोत्तरे–व्रतोपवासैर्ये विष्णुर्नान्यजन्मनि तोषितः ।। ते नरा मुनिशार्दूल ! ग्रहरोगादिबाधिनः ।। स्कन्दपुराणे, न पूजितो भूतपतिः पुरा वै, व्रतं न चीर्णं न च सस्यमुक्तम् । दारिद्र्यशोकामयदुःखदग्धाः प्रायोऽनुशोचन्ति त एवमर्याः ।।१।। स्ववर्णधर्म्माभिरतश्च भीतः शिवव्रती त्र्यम्बकपूजनकश्च । प्राप्नोत्यवश्यं परमं पदन्तन्निरामयं यत् प्रवदन्ति सन्तः ।।२।। राज्यं श्रियं जगति साधु जनोपभोग्यमाप्नोति चापि शिवलोकमथामृतत्वम् । नावाप्यमस्ति भुवनेषु दृढव्रतानां तस्मात्सदा व्रतपरेण नरेण भाव्यम् ।।३।। ये सर्वदा व्रतपराश्च शिवं स्मरन्ति तेषान्न दृष्टिपथमप्युपयान्ति दूताः ।। याम्या महाभयकृतोऽपि च पाशहस्ताः दंष्ट्राकराल वदना विकटोग्रवेषाः ।।४।। इति व्रतकर्तृमहत्वबोधकानि वाक्यानि कृत्यमहार्णवे हेमाद्रि लिखिता–नीति शिवम् ।।

## अथ मिथिला-देशीय श्रीसत्यनारायण पूजा

तत्र कृतोपवासः सायंकाले गणपत्यादि पञ्चदेवतां विष्णुं च सम्पूज्यं कुशत्रय तिलजलान्यादाय ॐ अस्यां रात्रौ अमुकेमास्यमुकेपक्षेऽमुकतिथौ अमुक गोत्रस्यामुकशर्म्मणो (मम) सकलदुरितोपसर्गापच्छान्तिपूर्व्वक–सकलमनोरथ–सिद्ध्यर्थं यथाशक्ति गन्धपुष्प–धूपदीपताम्बूल यज्ञोपवीत वस्त्रापुङ्ग नैवेद्यादिभि–रङ्गदेवतापूजापूर्व्वक (पूर्व्वाङ्गीकृत) श्रीसत्यनारायण पूजनं तत्कथाश्रवणञ्चाहङ्करिष्ये । इति सङ्कल्पं कुर्य्यात् परकृते करिष्यामीत्यूहः ।। ततः ॐ भूर्भुवः **स्वःलक्ष्मि** इहागच्छ इहतिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीय पुनराचमनीयानि ॐ लक्ष्म्यै नमः । इदमनुलेपनम्, इदंसिन्दूरम् । इदमक्षतम् । एतानिपुष्पाणि ॐ लक्ष्म्यै नमः । एतानि गन्धपुष्पधूपदीपताम्बूल यथाभागनानाविधनैवेद्यानि ॐ लक्ष्म्यै नमः । इदमाचमनीयम्, एषपुष्पाञ्जलिः ॐ लक्ष्म्यै नमः । ॐभूर्भुवः स्वः **सरस्वति** इहागच्छ इहतिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीय पुनराचमनीयानि ॐ सरस्वत्यै नमः । सिन्दूरादिभिः पूजयेत् । ॐ भूर्भुवः स्वरादिपुरुष इहागच्छ, इहतिष्ठ । एतानि पाद्यादीनि ॐ आदिपुरुषाय नमः इत्यादि । ॐ भूर्भुवः **स्वरनादिपुरुष** इहागच्छ

इहतिष्ठ। एतानि पाद्यार्घाचमनीय स्नानीय पुनराचमनीयानि ॐ अनादिपुरुषाय नमः इत्यादि । ॐ भूर्भुवः **स्वरिन्द्रादिदशदिक्पाला** इहागच्छत इहतिष्ठत । एतानि पाद्यार्घाचमनीय स्नानीय पुनराचमनीयानि ॐ इन्द्रादिदशदिक्पालेभ्योनमः । ततश्चन्दनादिकं सर्वंदद्यात् । साधिदैवतसप्रत्यधिदैवतबिनायकादिपञ्चकसहित **नवग्रहपूजनं** रामलक्ष्मणपूजनात्प्रागेवपुस्तकान्तरेऽभिहितम्। ॐ भूर्भुवःस्व**र्नवग्रहा** इहागच्छत इहतिष्ठत। एतानि पद्यार्घाचमनीय स्नानीय पुनराचमनीयानि ॐ नवग्रहेभ्योनमः। इत्यादि।। ॐ भूर्भुवः स्वः **श्रीससीतरामलक्ष्मणा**विहागच्छतमिह तिष्ठतम् इत्यावाह्य, एतानि पाद्यार्घाचमनीय स्नानीयपुनराचमनीयानि ॐ श्रीससीतरामलमणाभ्यांनमः । इदमनुलेपनम् ३ । एतेयवतिलाः ३ । एतानि पुष्पाणि ३ । एतानितुलसीदलानि ३ । एतानि दूर्व्वादलानि ३, एतानि गन्धपुष्पधूपदीप-ताम्बूल यथाभागनानाविधनैवेद्यानि ॐ श्रीससीतरामलक्ष्मणाभ्यान्नमः। इदमाचमनीयम् । एष पुष्पाञ्जलिः ॐ श्रीससीतरामलक्ष्मणाभ्यान्नमः ।। ततः **सत्यनारायणपूजा** । तिलान्गृहीत्वा शालग्रामशिलायां ॐ भूर्भुवःस्वर्भगवन् श्रीसत्यनारायण इहागच्छ इहतिष्ठ इत्यावाह्य, पुष्पमेकं गृहीत्वा ध्यायेत् यथा ॐ ध्यायेत्सत्यं गुणातीतं गुणत्रयसमन्वितं, लोकनाथं त्रिलोकेशं पीताम्बरधरं हरिम् ।। इन्दीवरदलश्यामं शंखचक्रगदाधरं, नारायणं चतुर्व्वाहुं श्रीवत्सपदभूषितम् । गोविन्दं गोकुलानन्दं जगतः पितरं गुरुम् ।। इदं ध्यानपुष्पं ॐ भगवते श्रीसत्यनारायणाय नमः । ततोऽर्घं गृहीत्वा ॐ व्यक्ताव्यक्तस्वरूपाय हृषीकपतये नमः । मया निवेदितो भक्त्या अर्घोयं प्रतिगृह्यताम् ।। एतानि पद्यार्घाचमनीय स्नानीय पुनराचमनीयानि ॐ भूर्भुवःस्वर्भगवते श्रीसत्यनारायणाय नमः। इदमनुलेपनम् ३ । एते यवतिलाः ३ । पुष्पंगृहीत्वा, नमस्ते विश्वरूपाय शङ्खचक्रधराय च । पद्मनाभाय देवाय हृषीकपतये नमः । नमोऽनन्तस्वरूपाय त्रिगुणात्मविभाजिने ।। एतानि पुष्पाणि ॐ भूर्भुवःस्वर्भगवते श्रीसत्यनारायणाय नमः ३ । इमे यज्ञोपवीते वृहस्पतिदैवते ॐ भूर्भुवःस्वर्भगवते श्रीसत्यनारायणाय नमः। इदम्पीतवस्त्रं वृहस्पतिदैवतं ॐ भूर्भुवःस्वर्भगवते श्रीसत्यनारायणाय नमः। एतानितुलसीदलानि ३ । एतानि दूर्व्वादलानि ३ । ततोऽपुङ्गनैवेद्यं गृहीत्वा ॐ त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पितं, गृहाण सुमुखो भूत्वा प्रसीद पुरुषोत्तम ।। इदमपुङ्गनैवेद्यम् ॐ भूर्भुवःस्वर्भगवते श्रीसत्यनारायणाय नमः। एतानि गन्धपुष्पधूपदीपताम्बूलयथाभागनानाविधनैवेद्यानि ॐभूर्भुवःस्वर्भगवते श्रीसत्यनारायणाय नमः ।। ततः पुष्पमेकं गृहीत्वा ॐ अमोघं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् । हृषीकेशं जगन्नाथं बागीशं बरदायकम् । गुणत्रयं गुणातीतं गोविन्दं गरुड़ध्वजम् । जनार्द्दनं जनानन्दं जानकी-बल्लभं जयम् ।। प्रणमामि सदा सत्यनारायण मतः परम् । दुर्ग्गमे विषमे घोरे शत्रुभिः परिपीड़िते ।। विविधापत्सु

दुष्टेषु तथान्येष्वपि यद्भयम् । नामान्येतानि संकीर्त्य ईप्सितं फलमाप्नुयात् ।। सत्यनारायणं देवं वन्देहं कामदं प्रभुम् । लीलया च ततं विश्वं येन तस्मै नमोनमः ।। एष पुष्पाञ्जलिः ॐ भूर्भुवःस्वर्भगवते श्रीसत्यनारायाणाय नमः एवं त्रिः। ॐ भूर्भुवःस्वर्गौरीशङ्करा विहागच्छतमिहतिष्ठतमित्यावाह्य। एतानि पाद्यार्घाचमनीय स्नानीय पुनराचमनीयानि ॐ गौरीशङ्कराभ्यान्नमः। ततश्चन्दनम् । ततोऽक्षतम् । ततः पुष्पम्, ततो विल्वपत्रम्। ततो नैवेद्यम्। ततः आचमनीयम्। ततः पुष्पाञ्जलिः ।। ॐ ब्रह्मन्निहागच्छ इहतिष्ठेत्यावाह्य। चन्दनादिभिः ॐ ब्रह्मणेनमः । इति सर्वमेकदैव दत्त्वा पूजयेत्। ततः कथां श्रुत्वा कर्प्पूरदीपेनारार्तिकम्[1], प्रदक्षिणाञ्च कुर्य्यात्। रूपन्देहीत्यादि पठित्वा वरञ्च प्रार्थयेत् ।। इति पूजाविधः ।।

# अथ कथा

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ।। एकदा मुनयः सर्वे सर्वलोकहिते रताः। सुरम्ये नैमिषारण्ये गोष्ठीं चक्रुर्म्मनोरमाम्। तत्रान्तरे महातेजा व्यासशिष्यो महायशाः । सूतः शिष्यगणैर्युक्तः समायातो हरिं स्मरन् ।।२।। तमायान्तं समालोक्य सूतं शास्त्रार्थपारगम् । नेमुःसर्वे समुत्थाय शौनकाद्यास्तपोधनाः ।।३।। सोपि तान् सहसा भक्त्या मुनीन् परम वैष्णवान्। नानाम दण्डवद्भूमौ सर्व्वधर्म्मविदाम्बरः ।।४।। वरासने महाबुद्धिस्तैर्दत्ते मुनिपुङ्गवैः। उवास सदसोमध्ये सर्वैः शिष्यगणैर्बृतः ।।५।। तत्रोपविष्टं तं सूतं शौनको मुनिसत्तमः। बद्धाञ्जलिरिमाम्वाचमुवाच विनयान्वितः ।।६।। शौनक उवाच ।। महर्षे सूत सर्वज्ञ कलिकाले समागते। केनोपायेन भगवन् हरिभक्तिर्भ्भवेन्नृणाम् ।।७।। कलौ सर्वे भविष्यन्ति पापकर्म्मपरायणाः । वेदविद्याविहीनाश्च तेषां श्रेयः कथं भवेत् ।।८।। कलावन्नगतप्राणा लोकाः स्वल्पायुषस्तथा । निर्धनाश्च भविष्यन्ति नानापीड़ा प्रपीड़िताः ।।९।। प्रयास-साध्यं सुकृतं शास्त्रेषु श्रूयते द्विज। तस्मात्केऽपि करिष्यन्ति कलौ न सुकृतं जनाः ।।१०।। सुकृतेषु विनष्टेषु प्रवृत्ते पापकर्म्मणि । सवंशाः प्रलयं सर्वे गमिष्यन्ति दुराशयाः ।।११।। स्वल्पश्रमैरल्पवित्तैरल्पकालैश्च सत्तम । यथा भवेन्महापुण्यं तथा कथय सूत नः ।।१२।। यस्योपदेशतः पुण्यं पापं वा कुरुते जनः । स तद्भागी भवेन्मर्त्य इति शास्त्रेषु निश्चितम् ।।१३।। पुण्योपदेशी सदयः कैतवैश्च विवर्जितः । पापायनविरोधी च चत्वारः केशवोपमाः ।।१४।। ज्ञानं संप्राप्य संसारे यः परेभ्यो न यच्छति। ज्ञानरूपी हरिस्तम्मै प्रसन्न इव नेक्षते ।।१५।। ज्ञानरत्नैश्च रत्नैश्च परसन्तोषकृन्नरः। स ज्ञेयः सुमते नूनं नररूपधरो

१. ओं यानि कानि च पापानि ब्रह्महत्यासमानि च । तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ।। इति मन्त्रेण चतुः प्रदक्षिणीकृत्य प्रतिवारमर्घ्यं दद्यात् ।

हरिः ॥१६॥ व्रतेन तपसा किंवा प्राप्स्यते वांछितं फलम्। तत्सर्वंश्रोतुमिच्छामि कथयस्व महामुने ॥१७॥ त्वमेव मुनिशार्दूल वेदवेदाङ्ग पारगः। त्वदृते नहि वक्तान्यो यतस्त्वं व्यासशासितः ॥१८॥ सूतउवाच॥ धन्योऽसि त्वं मुनिश्रेष्ठ त्वमेव वैष्णवाग्रणीः। यतः समस्तलोकानां हितं वांछसि सर्व्वदा ॥१९॥ शृणु शौनक वक्ष्यामि यत्त्वया श्रोतुमिष्यते। नारदेनैव मुक्तस्सन् भगवान् कमलापतिः ॥२०॥ सुरर्षये यथैवाह तच्छृणुष्व समाहितः ॥२१॥ एकदा नारदो योगी नरानुग्रहकाङ्क्षया। पर्य्यटन् विविधान् लोकान् मर्त्यलोकमुपागतः ॥२२॥ तत्र दृष्ट्वा जनाः सर्वे नानादुःखसमन्विताः। नानायोनिसमुत्पन्नाः क्लिश्यते पापकर्मभिः ॥२३॥ केनोपायेन चैतैषां दुःखनाशो भवेद्ध्रुवम्। इति संचिन्त्य मनसा विष्णुलोकं गतस्तदां ॥२४॥ तत्र नारायणं देवं शुक्लवर्णं चतुर्भुजम्। शंखचक्रधरं देवं वनमालाविभूषितम्॥ दृष्ट्वा तं देवदेवेशं स्तोतुं समुपचक्रमे ॥२५॥ नारद उवाच॥ नमस्ते वाङ्-मनोतीत-रूपायानन्तशक्तये। आदि-मध्यान्तहीनाय निर्गुणाय गुणात्मने ॥२६॥ सर्वेषामादिभूताय भक्तानामार्त्तिनाशिने। श्रुत्वा स्त्रोत्रं ततो विष्णुर्न्नारदम्प्रत्यभाषत॥२७॥ श्रीभगवानुवाच॥ किमर्थमागतोऽसि त्वं किन्ते मनसि वर्त्तते। कथयस्व महाभाग तत्सर्वंकथयामि ते॥ नारद उवाच ॥२८॥ मर्त्यलोके जनास्सर्वे नानाशोक-समन्विताः। नानायोनिसमुत्पन्नाः क्लिश्यन्ते पापकर्म्मभिः ॥२९॥ तत्कथं शमयेन्नाथ लघूपायेन तद्वद। तत्सर्वं श्रोतुमिच्छामि कृपाऽस्ति यदि ते मयि ॥३०॥ श्रीभगवानुवाच॥ साधु पृष्टं त्वया वत्स लोकानुग्रहकाम्यया। यत्कृत्वा मुच्यते मोहात्तच्छृणुष्व वदामि ते ॥३१॥ व्रतमस्ति महापुण्यं स्वर्गे भुवि च दुर्ल्लभम्। तव स्नेहान्मया विप्र प्रकाशीक्रियतेऽधुना ॥३२॥ सत्यनारायणस्यैवं व्रतं सम्यग्विधानतः। कृत्वा सद्यः सुखं भुक्त्वा परत्र मोक्षमालभेत् ॥३३॥ तच्छ्रुत्वा भगवद्वाक्यं नारदः पुनरब्रवीत्॥ नारद उवाच ॥ किम्फलं किं विधानं च कृतं केन व्रतोत्तमम् ॥३४॥ तत्सर्वं विस्तराद्ब्रूहि कदा कार्यं हि तद्व्रतम् ॥३५॥ श्रीभगवानुवाच॥ दुःखशोकादिशमनं धनधान्य-प्रवर्धनम्। सौभाग्यसंततिकरं सर्वत्र विजयप्रदम् ॥३६॥ यस्मिन्कस्मिन्दिने मर्त्यो भक्तिश्रद्धासमन्वितः। सत्यनारायणं देवं यजेत्तुष्टो निशामुखे ॥३७॥ ब्राह्मणैर्व्वान्धवैश्चैव सहितो धर्म्मतत्परः। नैवेद्यं भक्तितो दद्यात्सपादं भक्ष्यमुत्तमम् ॥३८॥ रम्भाफलं धृतं क्षीरं गोधूमस्यच चूर्णकम्। अभावे शालिचूर्णं वा शर्क्करा च गुड़ं तथा। सपादं सर्व्वभक्ष्याणि एकीकृत्य निवेदयेत् ॥३९॥ विप्राय दक्षिणां दद्यात्कथां श्रुत्वा जनैः सह। ततश्च बन्धुभिः सार्धं विप्रेभ्यः प्रतिपादयन् ॥४०॥ प्रसादं भक्षयेद्भक्त्या नृत्यगीतादिकञ्चरेत्॥ ततस्तु स्वगृहं गच्छेत् सत्यनारायणं स्मरन् ॥४१॥ एवं कृते मनुष्याणां वाञ्छासिद्धिर्भवेद् ध्रुवम्॥ विशेषतः कलियुगे नान्योपायोस्ति भूतले। अथ चान्यप्रवक्ष्यामि कृतं येन पुराद्विज ॥४२॥ कश्चित्काशीपुरीवासी विप्र आसीच्च निर्धनः। क्षुधातृष्णाकुलो भूत्वा सततं भ्रमते

महीम् ।।४३।। दुःखितं ब्राह्मणं दृष्ट्वा भगवान् ब्राह्मणप्रियः। वृद्धब्राह्मणरूपः सन्पप्रच्छ द्विजमादरात् ।।४४।। **किमर्थं** भ्रमसे विप्र महीं कृत्स्नां सुदुःखितः। तत्सर्वं श्रोतुमिच्छामि कथ्यतांर्य्यदि गम्यते ।।४५।। विप्र उवाच।। ब्राह्मणोऽतिदरिद्रोहं भिक्षार्थं विभ्रमे महीम्। उपायं यदि जानासि कृपया कथय प्रभो ।।४६।। वृद्धब्राह्मण उवाच।। सत्यनारायणो विष्णुर्व्वाञ्छितार्थफलप्रदः। तस्य त्वं द्विजशार्द्दूल कुरुष्व व्रतमुत्तमम्। यत्कृत्वा सर्व्वदुःखेभ्यो मुक्तोभवति मानवः ।।४७।। विधानञ्च व्रतस्यास्य विप्रायाभाष्य संगतम्। सत्यनारायणो देवस्तत्रैवान्तरधीयत ।।४८।। ततस्तु संकरिष्यामि व्रतं मनसिचिंतितम्। इति संचित्य विप्रोऽसौ रात्रौ निद्रां न चालभत् ।।४९।। ततः प्रातः समुत्थाय सत्यनारायणव्रतम्। करिष्येऽहं च सङ्कल्प्य भिक्षार्थमगमद्द्विज ।।५०।। तस्मिन्नेव दिने विप्रः प्रचुरम्प्राप्तवान् धनम्। तेनैव बन्धुभि सार्द्धंसत्यस्य ब्रतमाचरत् ।।५१।। सर्वदुःखविनिर्मुक्तः सर्व्वसम्पत्समन्वितः। बभूव स द्विजश्रेष्ठो व्रतस्यास्य प्रभावतः। ततः प्रभृति कालञ्च मासि मासि व्रतं कृतम् ।।५२।। सूत उवाच।। एवं नारायणाद्देवाद् ब्रतं ज्ञात्वा द्विजोत्तमः । सर्वपापविनिर्मुक्तो दुर्लभं मोक्ष-माप्नुयात् ।।५३।। व्रतं च तद्यथा विप्र ! पृथिव्यां सञ्चरिष्यति । तदैव सर्वदुःखं हि नराणाञ्च विनश्यति ।।५४।। एवं नारायणेनोक्तं नारदाय महात्मने मयाऽपि कथितं विप्र ! किमन्यत् कथयामि ते ।।५५।।

शौनक उवाच।। तस्माद्विप्र ! व्रतं केन पृथिव्यां चरितम्मुने ।। तत्सर्वं श्रोतुमिच्छामि श्रद्धास्माकं प्रजायते ।।५६।। सूत उवाच ।। श्रृणुध्वं मुनयः सर्वे तस्माद्येन कृतम्भुवि । एकदा स द्विजवरो यथाविभवविस्तरैः ।।५७।। बन्धुभिः स्वजनैः सार्द्धं व्रतङ्कर्तुं समुद्यतः । एतस्मिन्नन्तरे काले काष्ठकेतुः समागतः ।।५८।। बहिः काष्ठं च संस्थाप्य विप्रस्य मन्दिरय्यँयौ । तृष्णया पीड़ितात्मा स विप्रं दृष्ट्वा तथाविधम् ।।५९।। प्रणिपत्य द्विजम्प्राह किमिदं क्रियते त्वया । कृते किम्फलमाप्नोति विस्तराद्वद मे प्रभो ।।६०।। विप्र उवाच ।। सत्यनारायणस्येदं व्रतं सर्वेप्सितप्रदम् । दुःखशोकादिशमनं सर्वत्र विजयप्रदम् ।।६१।। धनधान्यसंततिकरं सर्वेषामीप्सितप्रदम् । यस्य प्रसादान्मे सर्वं धनधान्यादिकं महत् ।।६२।। ततस्तु तद्व्रतं ज्ञात्वा काष्ठकर्त्ताऽति हर्षितः । पपौ जलं प्रसादञ्च भुक्त्वा तन्नगरं ययौ ।।६३।। सत्यनारायणं देवं चिंतयन् स्थिरमानसः । काष्ठं विक्रीय नगरे प्राप्स्यते चाद्य यद्धनम् । तेनैव सत्यदेवस्य व्रतं सम्यक् करोम्यहम् ।।६४।। इति संचिन्त्य मनसा काष्ठं कृत्वा तु मस्तके। जगाम नगरे रम्ये धनिनां यत्र संस्थितिः ।।६५।। तद्दिने काष्ठमूल्यं च द्विगुणं प्राप्तवानसौ। ततः प्रसन्न-हृदयः सुपक्वं कदलीफलम् ।।६६।। शर्कराधृतदुग्धं च गोधूमस्य च चूर्णकम्। प्रत्येकं तु सपादं च गृहीत्वा स्वगृहं ययौ ।।६७।। ततो बन्धून् समाहूय चकार विधिवद् ब्रतम्। तद्व्रतस्य प्रसादेन धनपुत्रान्वितोभवत्। इह लोके सुखं भुक्त्वा चान्ते सत्यपुरं ययौ ।।६८।। पुनरन्यत्प्रवक्ष्यामि श्रृणुध्वं मुनिसत्तमाः ।।६९।।

आसीदुल्कामुखो नाम नृपतिर्ब्बलिनांबर:। जितेन्द्रिय: सत्यवादी ययौ देवालयम्प्रति। दिने दिने धनन्दत्वा द्विजान् सन्तोषयन्सुधी: ।।७०।। भार्य्या तस्य प्रमुग्धा च सरोजवदना सती। सत्यव्रतं भद्रशीला सिन्धुतीरेऽकरोन्मुने ।।७१।। एतस्मिन्नन्तरे तत्र साधुरेक: समागत:। वाणिज्यार्थं बहुधनैरत्नाद्यै: परिपूरिताम् ।।७२।। नावं संस्थप्य तत्तीरे जगाम तत्तटं प्रति। दृष्ट्वा तत्र व्रतं सस्म्यक् पप्रच्छ विनयान्वित: ।।७३।। साधुरुवाच।। किमिदं कुरुषे राजन् भक्तियुक्तेन चेतसा प्रकाशं कुरु तत्सर्वं श्रोतुमिच्छामि साम्प्रतम् ।।७४।। राजोवाच।। पूजनं क्रियते साधो! विष्णोरतुलतेजस:। व्रतं च स्वजनै: सार्द्धं पुत्रादि प्राप्स्यते मया ।।७५।। प्रत्युवाच ततो नत्वा राजानं मधुरं वच:। सांगं कथय मे राजन्! व्रतमेतत्करोम्यहम् ।।७६।। ममापि सन्ततिर्नास्ति सत्यमेतद् ब्रवीम्यहम्। ततो निवृत्य बाणिज्यात्सानंदं गृहमागत: ।।७७।। भार्य्यायै कथितं सर्वं व्रतं च सन्ततिप्रदम्। तदा व्रतं करिष्यामि यदा मे सन्ततिर्भवेत् ।।७८।। कस्मिँश्चिद्दिवसे तस्य भार्य्या लीलावती सती। गर्भयुक्ताऽऽनन्दचित्ताऽभवद्धर्म्मपरायणा ।।७९।। पूर्णे गर्भे ततो जाता बालिका चातिनिर्म्मला। दिने दिने वर्द्धमाना शुक्लपक्षे यथा शशी ।।८०।। ततो वणिक्सुतायाश्च जातकर्म्मादिकञ्चरन्। नाम्ना कलावती चेति तन्नामकरणं कृतम् ।।८१।। ततो लीलावती प्राह स्वामिनं मधुरं वच:। न करोषि किमर्थं वै पुरा यच्च प्रतिश्रुतम् ।।८२।। विवाहसमयेऽप्यस्या: करिष्यामि व्रतम्प्रिये। इति भार्यां समाश्वास्य जगाम नगरम्प्रति ।।८३।। तत: कलावतीकन्या वर्द्धिता पितृवेश्मनि। दृष्ट्वा कन्यां तत: साधुर्न्नगरे बन्धुभि: सह ।।८४।। मन्त्रयित्वा द्रुतं दूतं प्रेषयामास धर्म्मवित्। विवाहार्थं च कन्याया वरं श्रेष्ठं विचारयन् ।।८५।। तेनाज्ञप्तश्च दूतोऽसौ काञ्चनं नगरं ययौ।। तस्मादेकं वणिक्पुत्रं समादायागतो हि स: ।।८६।। दृष्ट्वा तु सुन्दरम्बालं वणिक्पुत्रं गुणान्वितम्। ज्ञातिभिर्बन्धुभि: सार्द्धं परितुष्टेन चेतसा ।।८७।। दत्तवान् साधुपुत्राय कन्यां विधिविधानत:। ततोऽभाग्यवशात्तेन विस्मृतं व्रतमुत्तमम् ।।८८।। विवाहसमयेऽप्यस्यास्तेन रुष्टोऽभवद्विभु:। तत: कालेन कियता निजकर्म-विशारद: ।।८९।। बाणिज्यार्थं गत: शीघ्रं जामात्रा सहितो वणिक्। रत्नसारपुरे रम्ये गत्वा सिंधु-समीपत: ।।९०।। बाणिज्यं कुरुते साधुर्ज्जामात्रा श्रीमत: सह। पुरीन्निर्माय नगरे चन्द्रकेतोर्नृपस्य च ।।९१।। एतस्मिन्नेव काले तु सत्यनारायण: प्रभु:। भ्रष्टप्रतिज्ञमालोक्य शापन्तस्मै प्रदत्तवान्। श्व:प्रभृति कियत्कालम्महद्दु:खम्भ-विष्यति ।।९२।। तस्मिन्नेव दिने राज्ञो धनमादाय तस्कर: तेनैव वर्त्मना यात: पृष्ठदेशं विलोकयन् ।।९३।। तेन दूतान् समाहूय निजामाज्ञां च दत्तवान्। तत्पश्चाद्धावकान्दू-तान्दृष्ट्वा भीतेन चेतसा। धनं संस्थाप्य तत्रैव गत: शीघ्रमलक्षित: ।।९४।। ततो दूता: समायाता: यत्रास्ते सज्जनो वणिक्। दृष्ट्वा नृपधनन्तत्र बद्ध्वा दूता बणिक्सुतौ ।।९५।। हर्षयुक्ता धावमाना ऊचु र्नृपसमीपत:। तस्करौद्वौ समानीतौ विलोक्याज्ञापय प्रभो ।।९६।। तेनाज्ञप्तस्तत: 'शीघ्रं दृढम्बद्ध्वा तु तावुभौ। स्थापितव्यौ महादुर्गे कारागारेऽविचारितम् ।।९७।। मायया सत्यदेवस्य न श्रुतं च तयोर्व्वच: । ततस्तयोर्द्धनं

यच्च गृहीतं चन्द्रकेतुना ॥९८॥ तच्छापाच्च तयोर्गेहे भार्य्या च दुःखिताऽभवत्।
चौरेणापहृतं सर्वं गृहे यच्च स्थितं धनम्। आधिव्याधिसमायुक्ता क्षुत्पिपासाऽतिपीड़िता।
अन्नचिन्तापरा भूत्वा भ्रमते च गृहे गृहे ॥१००॥ तथा कलावती कन्या भ्रमते
प्रतिवासरम्। एकस्मिन्दिवसे रात्रौ क्षुधाऽर्त्ता द्विजमन्दिरम् ॥१०१॥ गत्वापश्यद्व्रतं
तत्र सस्त्यनारायणस्य च। उपविश्य कथां श्रुत्वा वरं सम्प्रार्थ्य वांछितम् ॥१०२॥
प्रसादभक्षणं कृत्वा ययौ रात्रौ गृहम्प्रति। ततो लीलावती कन्यां भर्त्सयामास तां
भृशम् ॥१०३॥ पुत्रि रात्रौ स्थिता कुत्र किन्ते मनसि वर्त्तते। द्विजालये व्रतं मातर्दृष्टं
वांछित-सिद्धिदम्। तच्छ्रुत्वा कन्यकावाक्यं व्रतं कर्त्तुं समुद्यता ॥१०४॥ ससुता सा
वणिक्भार्य्या सत्यनाराणस्य च। व्रतं हि कुरुते साध्वी बन्धुभिः स्वजनैः सह ॥१०५॥
भर्तृजामातरौ क्षिप्रमागच्छेतान्निजाश्रमम्। इति देवं वरं याचे सत्यदेवं पुनः पुनः।
अपराधश्च भर्त्तुर्म्मे जामातुः क्षन्तुमर्हसि ॥१०६॥ व्रतेन तस्यास्तुष्टोऽसौ सत्यनारायणः
प्रभुः ॥१०७॥ दर्शयामास स्वप्नं हि चन्द्रकेतुं नृपोत्तमम्। वन्दिनौ मोचय प्रातर्व्वणिजौ
नृपसत्तम ॥१०८॥ देयन्धनं च तत्सर्वं विधियुक्तं हृतञ्च यत्। नोचेत्त्वान्नाशयिष्यामि
सराज्यधनपुत्रकम् ॥१०९॥ एवमाभाष्य राजानं ध्यानगम्योऽभवत्प्रभुः। ततः
प्रभातसमये राजा च स्वजनैः सह ॥११०॥ उपविश्य सभामध्ये प्राह पौरजनान्प्रति।
बद्धौ महाजनौ शीघ्रम्मोचयध्वं बणिक्सुतौ ॥१११॥ इतिराज्ञो वचः श्रुत्वा मोचयित्वा
महाजनौ। समानीय नृपस्याग्रे प्रोचुस्ते विनयान्विताः ॥११२॥ आनीतौ द्वौ वणिक्पुत्रौ
मुक्तौ निगड़बन्धनात्। ततो महाजनौ नत्वा चन्द्रकेतुं नृपोत्तमम् ॥११३॥ स्मृत्वा च
पूर्ववृत्तांतं विस्मयाद्भयविह्वलौ। राजा बणिक्सुतौ वीक्ष्य प्रोवाच सादरं वचः ॥११४॥
दैवात्प्राप्तं महद्दुःखमिदानीन्नास्ति ते भयम्। इदानीं कर्तुमुचितं क्षौरकर्म्मादिकं च
यत् ॥११५॥ ततो नृपाज्ञया सर्व्वं नित्यकृत्यं समाप्य च। शुक्लाम्बरधरौ शीघ्रं
सभामध्ये समागतौ ॥११६॥ ततो नृपवरःश्रीमान् स्वर्णरत्नविभूषणैः। पुरस्कृत्य
वणिक्पुत्रौ वचसा प्रीणयद्भृशम् ॥११७॥ पुरानीतं च यद्द्रव्यं द्विगुणीकृत्य दत्तवान्।
प्रोवाच तौ ततो राजा गच्छ साधो निजाश्रमम् ॥११८॥ राजानं प्रणिपत्याऽऽह गन्तव्यं
त्वत्प्रसादतः ॥११९॥ यात्रां कृत्वा ततः साधुर्मङ्गलाचारपूर्व्विकाम्। ब्राह्मणाय धनं
दत्वा सहर्षन्नगरं ययौ ॥१२०॥ कियद्दूरे गते साधौ सत्यनारायणः प्रभुः। जिज्ञासां
कृतवान्साधो! किमस्ति तरणौ तव ॥१२१॥ ततो महाजनो मत्तो हेलया च प्रहस्य
च। कथं पृच्छसि भो दण्डिन्मुद्रां किं लब्धुमिच्छसि ॥१२२॥ लतापत्रादिकं चैव
वर्त्तते तरणौ मम। निष्ठुरं च वचः श्रुत्वा सत्यम्भवतु त्वद्वचः ॥१२३॥ एवमुक्त्वा
गतः शीघ्रं दंडी तस्य समीपतः गते दण्डिनि साधुश्च कृतनित्यक्रियस्तदा ॥१२४॥
उत्थितान्तरणिं दृष्ट्वा विस्मयं परमं ययौ। लतापत्रादिकं दृष्ट्वा मूर्च्छितो न्यपतद्भुवि ॥१२५॥
लब्धसंज्ञो वणिक्पुत्रस्ततश्चिन्तान्वितोऽभवत् सान्त्वयन् श्वशुरं तत्र वचनं
चेदमब्रवीत् ॥१२६॥ किमर्थं कुरुषे शोकं शापो दत्तश्च दण्डिना। शक्यते तेन सर्वं

हि कर्त्तुं धर्तुंन संशयः ।।१२७।। अतस्तच्छरणं यामो वांछितार्थो भविष्यति । जामातुश्च वचः श्रुत्वा तत्सकाशं गतस्दा ।।१२८।। दृष्ट्वा तु दण्डिनम्भक्त्या नत्वा प्रोवाच सादरम् । मया दुरात्मना देव मुग्धेन तव मायया ।।१२९।। यदुक्तं तद्वचो नाथ! दोषं मे क्षन्तुमर्हसि । यतः परहिताः सर्व्वे क्षमासारा हि साधवः ।।१३०।। पुनः पुनः स्ततो नत्बा रुरोद शोक-बिह्वलः । तमुवाच ततो दंडी विलपन्तं विलोक्य च ।।१३१।। मा रोदीः शृणु मे वाक्यं मम पूजापराङ्मुखः । मामवज्ञाय दुर्ब्बुद्धे लब्धं दुःखं मुहुर्मुहुः ।।१३२।। तच्छ्रुत्वा भगवद्वाक्यं स्तुतिं कर्तु समुद्यतः ।।१३३।। साधुरुवाच ।। त्वन्माया मोहिताः सर्वे ब्रह्माद्यास्त्रिदिवौकसः । न जानन्ति गुणं रूपं तवाश्चर्यमिदं विभो ।।१३४।। मूढ़ोऽहं प्राक्कथं जाने मोहितस्तव मायया। प्रसीद पूजयिष्यामि यथाविभवविस्तरैः ।।१३५।। दुःखितं मद्विधं पुत्रं पाहि मां शरणागतम् । श्रुत्वा स्तुत्यादिकं वाक्यं परितुष्टो जनार्द्दनः ।।१३६।। वरं च वांछितं दत्त्वा तत्रैवान्तरधीयत ।।१३७।। ततोऽसौ नावमारुह्य दृष्ट्वा रत्नादिपूरिताम् । कृपया सत्यदेवस्य सफलं बांछितम्मम। इत्युक्त्वा स्वजनैः सार्द्धम्पूजां कृत्वा यथाविधि ।।१३८।। हर्षेण महता साधुः प्रयाणं चाकरोद् द्विज। नावं संवाह्य वेगेन स्वदेशमगमत्तदा ।।१३९।। ततो जामातरं प्राह पश्य वत्स पुरीं मम। दूतं च प्रेषयामास निजवित्तस्य रक्षकम् ।।१४०।। ततोऽसौ नगरं गत्वा साधोर्भार्य्यां विलोक्य च । प्रोवाच वांछितं वाक्यं नत्वा बद्धांजलिस्तदा ।।१४१।। निकटे नगरस्यैव जामात्रा सहितो बणिक्। आगतो बन्धुवर्गैश्च धनैर्वहुविधैस्तथा ।।१४२।। श्रुत्वा दूतस्य तद्वाक्यं महाहर्षयुता सती । सत्यपूजां ततः कृत्वा प्रोवाच तनुजाम्प्रति। ब्रजामि शीघ्रमागच्छ साधुसंदर्शनायञ्च ।।१४३।। इति मातृवचःश्रुत्वा व्रतं कृत्वा समाप्य च। प्रसादञ्च रित्यज्य गता सा हि पतिम्प्रति ।।१४४।। तेन रुष्टः सत्यदेवो भर्त्तारं तरणिं तथा । संजहार धनैः सार्द्धं जले तस्मिन्न्यमज्जयत् ।।१४५।। ततः कलावती कन्या नावलोक्य निजं पतिम् । शोकेन महता तत्र रुदंती चापतद्भुवि ।।१४६।। दृष्ट्वा तथाविधां कन्यां न दृष्ट्वा तत्पतिं तरिम् । भीतेन मनसा साधुः किमाश्चर्य्यमिदं त्विति । विचिन्त्यमानास्ते सर्व्वे विस्मयाद्भयविह्वला। विललापातिदुःखेन भर्त्तारञ्चेदमब्रवीत् ।।१४८।। इदानीं नौकया सार्द्धमदृश्योऽभूदलक्षितः। न जाने केन देवेन हेलया चापहारितः ।।१४९।। सत्यदेवस्य माहात्म्यं किंवा ज्ञातुन्न शक्यते। इत्युक्त्वा विललापाथ तत्तटे स्वजनैः सह । ततो लीलावती कन्यां क्रोड़े कृत्वा रुरोद च ।।१५०।। ततः कलावतीकन्या नष्टे स्वामिनि दुःखिता । गृहीत्वा पादुकां तस्य अनुगन्तुम्मनो दधे ।।१५१।। कन्यायाश्चरितं दृष्ट्वा सभार्यः सज्जनो वणिक् । अतिशोकेन सन्तप्तश्चिन्तयामास धर्म्मवित् ।।१५२।। हृतं हि सत्यदेवेन भ्रान्तोऽहं सत्यमायया । सत्यपूजां करिष्यामि यथाविभव विस्तरैः ।।१५३।। इति सर्वान् समाहूय । कथयँश्च मनोरथम् । नत्वा च दण्डवद् भूमौ सत्य देवं पुनः पुनः ।।१५४।। ततस्तुष्टः सत्यदेवो गगनाद्वणिजम्प्रति । जगाद वचनञ्चेदं नैवेद्यमवमन्य च । आगता

स्वामिनन्द्रष्टुमतोऽदृश्योऽभवत्पतिः ।।१५५।। गृहं गत्वा प्रसादञ्च भुक्त्वा चाऽयति सा पुनः । लब्धभर्त्रीसुता साधो ! भविष्यति न संशयः ।।१५६।। ततश्च प्राणदं वाक्यं श्रुत्वा गगनमण्डलात् क्षिप्रन्तदा गृहं गत्वा प्रसादम्प्रतिगृह्य च। अपश्यत्पुनरागत्य पतिं नाविजनैः सह ।।१५७।। ततः कलावती तुष्टा जगाद पितरं प्रति । एहि तात गृहंयाहि बिलम्बं कुरुषे कथम् । तच्छ्रुत्वा कन्यका वाक्यं सन्तुष्टोऽभूद्वणिक्सुतः ।।१५८।। पूजनं सत्यदेवस्य कृत्वा विधिविधानतः। धनैर्बन्धुगणैः सार्द्धं जगाम निजमन्दिरम् ।।१५९।। मासि मासि च संक्रान्त्यां पूजां कृत्वा तथाविधाम् । इह लोके सुखं भुक्त्वा चान्ते सत्यपुरंययौ ।।१६०।। अथ चान्यत्प्रवक्ष्यामि शृणुध्वम्मुनिसत्तमाः ।।१६१।।

आशीद्वंशध्वजो राजा प्रजापालनतत्परः । प्रसादं सत्यदेवस्य त्यक्त्वा दुःखमवाप सः ।।१६२।। एकदा स वनं गत्वा हत्वा बहुविधान्मृगान् । आगत्य वटमूले च दृष्ट्वा सत्यस्य पूजनम् ।।१६३।। गोपाः कुर्वन्ति सन्तुष्टा नृत्यगीतपरायणाः । राजा दृष्ट्वा तु दर्पेण नागतो न ननाम सः ।। १६४।। ततो गोपगणाः सर्वे प्रसादं नृपसन्निधौ । संस्थाप्य पुनरागत्य भुक्त्वा सर्व्वैर्य्यथेप्सितम् ।।१६५।। तत्प्रसादं परित्यज्य राजा दुःखमवाप्तवान् । तस्य पुत्रशतं नष्टं धनधान्यादिकञ्च यत् ।।१६६।। ततोऽसौ सत्देवस्य पूजां गोपगणैःसह । भक्तिश्रद्धाऽन्वितो भूत्वा चकार विधना नृपः ।।१६७।। तद्व्रतस्य प्रभावेण धनपुत्रान्वितोऽभवत्। इह लोके सुखं भुक्त्वा पश्चात्सत्यपुरंययौ ।।१६८।।

*।। इति श्री स्कन्दपुराणे रेवाखण्डेश्रीसत्यनारायणकथा समाप्ता ।।*

ततः पार्थिवशिवलिंङ्ग सम्पूज्य एष कर्प्पूरदीपः ॐ भगवते श्रीसत्यनारायणाय नमः । ततः प्रदक्षिणम् । ततो विसर्ज्जनम् तद्यथा–ॐ गणपत्यादि पञ्चदेवताः पूजिताःस्थ क्षमध्वम् स्वस्थानं गच्छत। श्रीर्म्मयि रमस्व । ॐ सरस्वति पूजिताऽसि प्रसीद क्षमस्व । आदिपुरुष पूजितोऽसि प्रसीद क्षमस्व स्वस्थानं गच्छ । ॐ अनादिपुरुष पूजितोऽसि प्रसीद क्षमस्व स्वस्थानं गच्छ । ॐ इन्द्रादि दशदिक्पालाः पूजिताःस्थ क्षमध्वं स्वस्थानं गच्छत । ॐ नवग्रहाः पूजिताःस्थ क्षमध्वं स्वस्थानं गच्छत । ॐ ससीतरामलक्ष्मणौ पूजितौ स्थः क्षमेयाथाम् स्वस्थानं गच्छतम् । ॐ भगवन् श्री सत्यनारायण पूजितोऽसि प्रसीद क्षमस्व स्वस्थानं गच्छ । ॐ गौरीशङ्करौ पूजितौ स्थः क्षमेयाथां स्वस्थानं गच्छतम् । ॐ ब्रह्मन् पूजितोऽसि प्रसीद क्षमस्व स्वस्थानं गच्छ। ॐ महादेव पूजितोसि प्रसीद क्षमस्व स्वस्थानं गच्छ । इति सम्प्रार्थ्य विसर्ज्जयेत्। ततो दक्षिणाः कुशत्रयतिलजलान्यादाय ॐ अस्यां रात्रौ कृतैतत् सांगसायुध सवाहन सपरिवार भगवच्छ्री सत्यनारायण पूजन तत्कथाश्रवण कर्म्म प्रतिष्ठार्थमेतावद्द्रव्यमूल्यक हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे. इति दत्वा ॐ प्रतिपन्न–इतिवदेत्। ओं स्वाच्छन्द्यम् इति प्रतिवचनम्। ततो ब्राह्मणाय चरणामृतं दत्त्वा स्वयमपि पिबेत्। ब्राह्मणभोजनं च कारयेत् ।

## अथ कलशस्थापन विधिः

तत्र कुशोदकेन भूमिमभ्युक्ष्य अक्षतान्यादाय ॐ कलशाधारशक्ते इहागच्छ इह तिष्ठ इत्यावाह्य, ओं कलशाधारशक्तये नमः इति पञ्चोपचारैः सम्पूज्य भूमिं स्पृशेत्।

**भूमिस्पर्शनमन्त्रः**–ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं माहिꣳसीः ।।

**ततो गोमयलेपनमन्त्रः**–ॐमानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः। मानो वीरान् रुद्र भामिनोऽवधीर्हष्मन्तः सदमित्वा हवामहे ।।

**ततो धान्यपुञ्जकरणम्**–ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानायत्वा। दीर्घामनु प्रसितिमायुषेधान्देवो वः सविता हिरण्य-पाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ।।

**ततः कलशस्थापनमन्त्रः**–ॐ ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तꣳ राजन् पारयामसि ।

**ततः कलशस्पर्शनमन्त्रः**–ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः पुनरूर्ज्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरु धारा पयस्वती पुनर्मा विशताद्रयिः ।।

**ततः कलशे जलदानमन्त्रः**–ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्य ऋतसदन्यसि। वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ।।

**कलशे कुशदानम्**–ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ।।

**कलशे सप्तमृत्तिकादानम्**[1]–ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी। यच्छानः शर्म स प्रथाः ।

**ततो दूर्वादानम्**–ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवानो दूर्व्वे प्रतनु सहस्रेण शतेन च ।।

**कलशे हरिद्रादानम्**–ॐया ओषधीः पूर्व्वाजाता देवेभ्यस्त्रियुगं पुरा। मनैनु बभ्रूणामहं शतं धामानि सप्त च ।।

**कलशे पूगीफलदानमन्त्रः**–ॐ याः फलिनीर्य्या अफला अपुष्पा याश्च पुष्पिणीः। वृहस्पतिः प्रसूतास्तानो मुञ्चन्त्वꣳ हसः ।।

**कलशे स्वर्णादिदानमन्त्रः**–ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।

(**पञ्चरत्नानि**–कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्च रत्नानि कलशस्यान्तरे क्षिपेत् ।।)

---

१. अश्वास्थानाद् गजस्थानाद् वल्मीकात् संगमाद् ह्रदात् । राजद्वाराद् गोकुलाच्च मृदमानीय निःक्षिपेत् ।।

**कलशे पञ्चरत्नं दद्यात्**—ॐपरिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे।

(**पञ्चपल्लवम्**—अश्वत्थोदुम्बर प्लक्ष चूत न्यग्रोध सम्भवान् । कलशस्यान्तरे पञ्च स्थापयेत्पल्लवान्बुधः ।।)

**कलशे पञ्चपल्लवदानम्**—ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता। गोभाज इत्किलासथ यत्सनवथ पूरुषम् ।। ॐ अम्बे अम्बिकेम्बालिके न मानयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पील-वासिनीम् ।।

(**सर्वौषधी**—कुष्टं मांसीहरिद्रे द्वे मुरा शैलेय-चन्दनम् । वचा चम्पक-मुस्ताश्च सर्वौषध्य इमाःस्मृताः ।।)

**सर्वौषधीदानम्**—ॐ या ओषधीः पूर्व्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनु वभ्रूणामहꣳ शतं धामानि सप्त च ।।

**ततो गन्धादिदानमन्त्रः**—ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।।

**कलशे वस्त्रदानम्**—ॐ युवासुवासाः परिवीत आगात्स उ श्रेयान्भवति आयमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ।।

**ततः कलशोपरि तण्डुलपूर्णपात्रस्थापनम्**—ॐपूर्णादर्विपरापत सुपूर्णा पुनरापत । वस्नेव विक्रोणा वहा इषमूर्ज्जꣳशतक्रतोः ।।

**ततः तण्डुलोपरि दीपं दद्यात्**—ॐ अग्निर्ज्योतिज्र्ज्योतिरग्निः स्वाहा । सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा । अग्निर्वर्च्चः स्वाहा सूर्य्योः वर्च्चो ज्योतिर्वर्च्चः स्वाहा ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा ।।

**वाजसनेयिनां प्राणप्रतिष्ठा मन्त्रः**—ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्य-ज्ञमिमं तनोत्वरिष्टम् । यज्ञꣳसमिमं दधातु विश्वेदेवास इह मादयन्तामों प्रतिष्ठ ।।

**छन्दोगानां प्राणाप्रतिष्ठा मन्त्रः**—"ॐ वाङ्मनः प्राणोऽपानो व्यानश्चक्षुः श्रोत्रं शर्म वर्म्म भूतिः प्रतिष्ठा" ।। एवं प्रतिष्ठां विधाय तत्र वरुणाधिष्ठित-शान्ति कलश-गणेशं पूजयेत् ।

**दूर्वाक्षतमन्त्रः**—ॐ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्च्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योतिव्याधी महारथो जायतां दोग्ध्री धेनु र्वोढ़ाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्ज्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।। ॐ मन्त्रार्थाः सिद्धयः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ।। ॐशान्तिः शान्तिः शान्तिः ॐ दीर्घायुर्भव ।। इति कलशस्थापन विधिः।

**अथ शान्तिकलशाभिषेकविधि:**–ततः शान्तिकलशमुत्थापयेदनेन–ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तेस्ते महे । उपप्रयन्तु मरुतः सुदानव इन्द्रप्राशुर्भवासवाः ॥ इत्युत्थाय आम्रपल्लवेन कलशजलमादाय यजमानमभिषिञ्चेदनेन–ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः! वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिः तुष्टिः कान्तिश्च मातरः ॥ एतास्त्वामभिषिचन्तु देवपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिचन्तु राहुः केतुश्च तर्पिताः । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चप्सरसां गणाः॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ॐ अमृताऽभिषेकोऽस्तु ॥ ॐ शान्तिः शान्तिः शान्तिः। इति शान्तिकलशाभिषेकविधिः।

## अथ कुलदेवतास्थापनविधिः

तत्र गृहमुख्यजनः कृतपूर्वदिनैकभुक्तादिसंयमः प्रातः स्नात्वा नित्यकर्म समाप्य शुद्धनवीनवस्त्रमुत्तरीयवस्त्रं च परिधाय, पूजोपकरणाँश्च सङ्गृह्य स्वासने उपविश्य सप्तमृत्तिकाभिः देवतासंख्यकाः पिण्डिका विधेयाः । तासु पञ्चरत्नानि यथाविभवद्रव्याणि वा सम्मिश्रयेत्। यदि पूर्वस्थापितदेवीपिण्डिकाऽवशिष्टमृत्तिका रक्षिता भवेयुस्तदा ता अपि तासु क्रमेण प्रक्षिप्य पुनर्वर्तुला विधेयाः ततो गृहाग्निकोणे समचतुरस्रां सपादहस्तसम्मितां यथास्थानानुसारिणीं वा वेदीं चतुरङ्गुलोच्छ्रितां विधाय तां गौरमृत्तिकायुतगोमयेनोपलिप्य गायत्रीं पठन् पञ्चगव्येन संशोध्य 'ॐ सद्योजातं प्रपद्यामिं सद्योजाताय वै नमः' । इति मन्त्रं पठन् गङ्गाजलेन वेदीं सिञ्चेत् । तत आमतण्डुलपिष्टकेन सिन्दूरहरिद्रायुक्तेन संस्थाप्य देवतासंख्यकं स्वस्तिकादिचित्रं निर्माय कुशत्रयतिलजलान्यादाय सङ्कल्पं कुर्यात्–ॐ अद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्रस्य सपरिवारस्य मम श्री अमुकशर्मण उपस्थितशरीरा-विरोधेन सकलसञ्चितदुरितसमूलक्षयपूर्वकधनजनपूर्णत्वनित्याभ्युदयकल्याण-चतुर्वर्गसुखप्राप्तिकामनया साङ्गश्री-अमुककुलदेवतास्थापनमहं करिष्ये । ततो गणेशं पञ्चदेवतां विष्णुं च सम्पूज्य, तद्वेदीलिखितेषु चित्रेषु यथाचारं पिण्डकां संरक्ष्य–ॐ मनोनूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञथंसमिमं दधातु। विश्वेदेवास इह मादायन्तामोम्प्रतिष्ठ । इति मन्त्रेण पिण्डिकां स्पृशन् प्राणप्रतिष्ठां कुर्यात् । **सामवेदिनः स्थापकस्य कृते**–'ॐ वाङ्मनः प्राणोव्यान श्चक्षुः श्रोत्रं शर्म वर्म भूतिः प्रतिष्ठा' इति प्राणप्रतिष्ठामन्त्रो विज्ञेयः । ततः 'ऑं ह्रीं

क्रीं यँ रँ लँ वँ शँ ष सँ हँ हौं हँ सः सोऽहम्' श्री अमुकदेवतायाः प्राणा इह प्राणाः। इति पिण्डिकां स्पृशेत्। पुनस्तेनैव मन्त्रेण 'अमुकदेवताया जीव इह स्थितः।' पुनस्तेनैव मन्त्रेण अमुकदेवतायाः सर्वेन्द्रियाणि इह स्थितानि। पुनस्तेनैव मन्त्रेण 'अमुकदेवताया वाङ्मनस्त्वक्चक्षुः श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा।' इति पठन् स्पृशन् लेलिहानमुद्रया प्रतिष्ठां कृत्वा ध्यात्वा यथोपचारेण पूजयेत्। ततः—ॐ एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ॐ अमुककुलदेवतायै नमः। इदं रक्तचन्दनम्, इदं सिन्दूरम्, इदं रक्तवस्त्रम्, एतानि पुष्पाणि, एष धूपः, एष दीपः, ॐ अमुककुलदेवतायै नमः। एतानि नानाविध-मोदकयुक्तपायसपोलिकादिनैवेद्यानि, ॐ कुलदेवतायै नमः। एष पुष्पाञ्जलिः, ॐ कुलदेवतायै नमः। एवं सकलाः देवताः पृथक् पृथक् सम्पूज्य तत्र वामभागे शीतला विषहरा च संस्थाप्या पूज्या च। ततः पीठासन्नवर्त्तिकुड्ये नवीनाञ्चलबन्धनम्, अञ्चलाधः कुलदेवतापिण्डिकाया उपरि तत्संख्यकाः सिन्दूरेण रेखा अङ्क्याः। ततश्चामरवीजनम्। तन्मन्त्रस्तु ॐ यन्मया भक्तियोगेन पत्रं पुष्पं फलं जलम्। निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि। यत् पूजितं मया देवि परिपूर्णा तदस्तु मे॥ ततो दक्षिणा। कुशत्रयतिलजलान्यादाय—ॐ अद्य कृतैतत्साङ्गसायुधकुलदेवतास्थापनकर्मप्रतिष्ठार्थमेतद्द्रव्यमूल्यकहिरण्य-मग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे। ततः कुमारिकाः सधवास्त्रियः बालकाः ब्राह्मणाश्च भोजनीयाः। ततः प्रतिदिनं पूजनं विधेयम्। पुरुषजनानुपस्थितौ, उपस्थितेऽपि अन्यकार्यासक्ते स्त्री अपि तां पूजयेत्। अशौचे परगोत्रीयजनेन तां पूजयेत्। तदभावेऽपूजितदिनसंख्यकां विशेषपूजां तदन्ते कुर्यात्।

*॥ इतिकुलदेवतास्थापनविधिः ॥*

# सूर्य-सप्ततिनामार्घदान विधिः

तथाहि, आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनादित्यादिस्मृतेः। स्कन्द-पुराणोक्तकाशीखण्डे च, ॐ हंसो भानुः सहस्त्रांशुस्तपनस्तापनो रविः। विकर्तनो विवस्वांश्च विश्वकर्म्मा विभावसुः॥१॥ विश्वरूपो विश्वकर्ता मार्त्तण्डो मिहिरोंशुमान्। आदित्यश्चोष्णगुः सूर्य्योऽर्य्यमा ब्रघ्नो दिवाकरः॥२॥ द्वादशात्मा सप्तहयो भास्करोऽहस्करः खगः। सूरः प्रभाकरः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः॥३॥ त्रिलोकेशो लोकसाक्षी तमोऽरिः शाश्वतः शुचिः। गर्भस्तिहस्तस्तीव्रांशुस्तरणिः सुमहोरणिः॥४॥ द्युमणिर्हरिदश्वोऽर्को भानुमान् भयनाशनः। छन्दोऽश्वो वेदवेद्यश्च भास्वान् पूषार्मवृषाकपिः॥५॥ एकचक्ररथो मित्रो मन्देहारिस्तमिस्रहा। दैत्यहा पापहर्ताच धर्म्मो धर्म्मप्रकाशकः॥६॥ हेलिकश्चित्रभानुश्च कलिघ्नस्तार्क्ष्यवाहनः। दिक्पतिः पद्मिनीनाथः कुशेशयकरो हरिः॥७॥ धर्म्मरश्मि दुर्न्निरीक्ष्यश्चण्डांशुः कश्यपात्मजः।

एभिः सप्तति-संख्याकैः पुण्यैः सूर्य्यस्य नामभिः ।।८।। प्रणवादि चतुर्थ्यन्तै र्नमस्कारसमन्वितैः प्रत्येकमुच्चरन्नाम दृष्ट्वा दृष्ट्वा दिवाकरम् ।।९।। विगृह्य पाणि-युग्मेन ताम्रपात्रं सुनिर्म्मलम्। जानुभ्यामवनिङ्गत्वा परिपूर्य्य जलेनच ।।१०।। करवीरादिकुसुमै रक्तचन्दनमिश्रितैः । दूर्वाङ्कुरैरक्षतैश्च निक्षिप्तैः पात्रमध्यः ।।११।। दद्यादर्घ्यमनर्घ्याय सवित्रे ध्यानपूर्वकम् । उपमौलि समानीय तत्पात्रं नारन्यदिङ्मनाः ।।१२।। प्रतिमन्त्रन्नमस्कुर्य्यादुदयास्तमये रविम्। अनया नामसप्तत्या महामन्त्ररहस्यया ।।१३।। एवं कुर्वन्नरो जातु न दरिद्रो न दुःखभाक्। व्याधिभिर्मुच्यते घोरैरपि जन्मान्तरार्जितैः ।।१४।। विनौषधै र्विना वैद्यैर्विना पथ्यपरिग्रहैः । कालेन निधनं प्राप्तः सूर्य्यलोके महीयते ।।१५।। इति स्कन्दपुराणे काशीखण्डे सूर्य्यसप्ततिनामार्घदानविधिः ।।

**अथार्घदानम्**—प्रातः स्नानादि कृत्वा बहिरेव शुचिस्थले गोमयेनोपलिप्य रक्तचन्दनमिश्रिताक्षत दूर्वांकुर करवीरादि कुसुमान्यादाय कुशत्रयतिलजलान्यादाय ओं अद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्रस्य मम श्रीअमुकशर्म्मणः (अस्य श्रीअमुकशर्मणो वा, स्त्रीचेत् अस्या अमुकगोत्राया श्रीअमुकीदेव्या, इत्यूहः) उपस्थितशरीराविरोधेन ऐहिकजन्मान्तरार्जित-पथ्यपरिग्रहाद्यौषधरहित-सकल-रुग्झटिति-प्रशमनपूर्वक-दारिद्र्यानुत्पत्तिसकलदुःखाभावान्तकालिक-सूर्य्यलोक-महितत्वकामो हंसादिसप्ततिनाम्ना सूर्य्याय सप्ततिसंख्यकार्घदानमहं करिष्ये (परार्थे करिष्यामीत्यूहः) इति संकल्प्य जानुभ्यामवनिंगत्वा ताम्रपात्रं जलेन प्रपूर्य्य रक्तचन्दनाक्ताक्षत-दूर्वाकरवीरादिपुष्पं दत्वा नम्रीभूय सूर्यस्य ध्यानम् ॐ भास्वद्रत्नाढ्यमौलिः, स्फुरदधररुचा रञ्जितश्चारुकेशो, भास्वान् यो दिव्यतेजाः, करकमलयुतः स्वर्णवर्णः प्रभाभिः । विश्वाकाशावकाश-ग्रहपतिशिखरे भाति यश्चोदयाद्रौ, सर्वानन्दप्रदाता, हरिहरनमितः पातु मां विश्वचक्षुः ।। इति ध्यानपूर्वकं पाणिभ्यां ताम्रपात्रं गृहीत्वा सूर्य्याभिमुखं पश्यन् शिरसा स्पृशन् नमस्कुर्व्वन् हंसेत्यादिनाम्ना सूर्यायार्घन्दद्यात् । तद्यथा :—एषोर्घः ॐ एहि सूर्य्यसहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां भक्त्या गृहाणार्घन्दिवाकर ।। एषोर्घः ॐ सूर्याय नमः। एषोर्घः ॐ हंसाय नमः ।।१।। एषोर्घः ॐ भानवे नमः ।।२।। एषोर्घः ॐ सहस्रांशवे नमः ।।३।। एषोर्घः ॐ तपनाय नमः ।।४।। एषोर्घः ॐ तापनाय नमः ।।५।। एषोर्घः ॐ रवये नमः ।।६।। ए० ॐ विकर्तनाय नमः ।।७।। ए० ॐ विवस्वते नमः ।।८।। ए० ॐ विश्वकर्म्मणे नमः ।।९।। ए० ॐ विभावसवे नमः ।।१०।। ए० ॐ विश्वरूपाय नमः ।।११।। ए० ॐ विश्वकर्त्रे नमः ।।१२।। ए० ॐ मार्तण्डाय नमः ।।१३।। ए० ॐ मिहिराय नमः ।।१४।। ए० ॐ अंशुमते नमः ।।१५।। ए० ॐ आदित्याय नमः ।।१६।। ए० ॐ उष्णगवे नमः ।।१७।। ए० ॐ सूर्य्याय नमः ।।१८।। ए० ॐ अर्य्यम्णे नमः ।।१९।। ए० ॐ ब्रघ्नाय नमः ।।२०।। ए० ॐ दिवाकराय नमः ।।२१।। ए० ॐ द्वादशात्मने नमः ।।२२।। ए० ॐ सप्तहयाय

नमः ।।२३।। ए० ॐ भास्कराय नमः ।।२४।। ए० ॐ अहस्कराय नमः ।।२५।। ए० ॐ खगाय नमः ।।२६।। ए० ॐ सूराय नमः ।।२७।। ए० ॐ प्रभाकराय नमः ।।२८।। ए० ॐ श्रीमते नमः ।।२९।। ए० ॐ लोकचक्षुषे नमः ।।३०।। ए० ॐ ग्रहेश्वराय नमः ।।३१।। ए० ॐ त्रिलोकेशाय नमः ।।३२।। ए० ॐ लोकसाक्षिणे नमः ।।३३।। ए० ॐ तमोरये नमः ।।३४।। ए० ॐ शाश्वताय नमः ।।३५।। ए० ॐ शुचये नमः ।।३६।। ए० ॐ गभस्तिहस्ताय नमः ।।३७।। ए० ॐ तरण्ये नमः ।।३८।। ए० ॐ सुमहोरण्ये नमः ।।३९।। ए० ॐ तीव्रांशवे नमः ।।४०।। ए० ॐ द्युमणये नमः ।।४१।। ए० ॐ हरिदश्वाय नमः ।।४२।। ए० ॐ अर्काय नमः ।।४३।। ए० ॐ भानुमते नमः ।।४४।। ए० ॐ भयनाशनाय नमः ।।४५।। ए० ॐ छन्दोश्वाय नमः ।।४६।। ए० ॐ वेदवेद्याय नमः ।।४७।। ए० ॐ भास्वते नमः ।।४८।। ए० ॐ पूष्णे नमः ।।४९।। ए० ॐ वृषाकपये नमः ।।५०।। ए० ॐ एकचक्ररथाय नमः ।।५१।। ए० ॐ मित्राय नमः ।।५२।। ए० ॐ मन्देहारये नमः ।।५३।। ए० ॐ तमिस्रघ्ने नमः ।।५४।। ए० ॐ दैत्यघ्ने नमः ।।५५।। ए० ॐ पापहर्त्रे नमः ।।५६।। ए० ॐ धर्म्माय नमः ।।५७।। ए० ॐ धर्मप्रकाशकाय नमः ।।५८।। ए० ॐ हेलिकाय नमः ।।५९।। ए० ॐ चित्रभावने नमः ।।६०।। ए० ॐ कलिघ्नाय नमः ।।६१।। ए० ॐ तार्क्ष्यवाहनाय नमः ।।६२।। ए० ॐ दिक्पतये नमः ।।६३।। ए० ॐ पद्मिनीनाथाय नमः ।।६४।। ए० ॐ कुशेशयकराय नमः ।।६५।। ए० ॐ हरये नमः ।।६६।। ए० ॐ धर्मरश्मये नमः ।।६७।। ए० ॐ दुर्निरीक्ष्याय नमः ।।६८।। ए० ॐ चण्डांशवे नमः ।।६९।। ए० ॐ कश्यपात्मजाय नमः ।।७०।। ए० ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।। जगत्सवित्रे शुचये सवित्रे कर्म्मदायिने । एषोर्घः ॐ भगवते श्रीसूर्य्यायनमः ।। ॐ जपाकुसुम संकाशं काश्यपेयं महाद्युतिम् ।।१।। ध्वान्तारिं सर्व्वपापघ्नं प्रणतोस्मि दिवाकरम् ।।२।।

*।। इति ।।*

# होलिकादाहनिर्णय

प्रदोषव्यापिनी ग्राह्या फाल्गुनी पूर्णिमा सदा ।। इति नारदः । परंतु "भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा" इति वचनात् पूर्णिमायाः पूर्वार्द्धस्वरूपायां भद्रायां होलिकाग्निं न दीपयेदिति भद्रासमाप्तौ निशायां सूर्योदयात् पूर्वं होलिकां दहेत् "रात्रौ भद्रावसाने तु होलिका दीप्यते तदा" इतिवचनात् । यदि पूर्वरात्रौ सर्वदा भद्रा स्यात् परदिने सूर्यास्तात् पूर्वमेव पूर्णिमा समाप्यते तदा प्रतिद्येव प्रदोषे होलिकां दहेत् । तथाहि भविष्ये–साधयामत्रयं वा स्याद् द्वितीयदिवसे यदा । प्रति ः वर्धमाना तु तदा सा होलिका मता ।। इति । यत्तु प्रतिपदि होलिकादाह-निषेधवचं तत्तु पूर्वरात्रे भद्राशून्यपूर्णायां वृद्धत्वे होलिकार्चनम् । क्रियमाणं च नन्दायां शान्ति र्भवति, नो क्षयः ।। इति स्मृतिवचनमेवेति मैथिलस्मार्त्तानां सिद्धांतः।

तेन भद्रामुखं परित्यज्येति, विष्टि-(भद्रा-) पुच्छे दहेदिति च मतं दाक्षिणात्यं नैवादर्त्तव्यम्, तथा च राजमार्त्तण्डे-भद्रस्य पुच्छं शुभहेतुरन्ये वदन्ति केचित्र तु युक्तमेतत् । शुष्केन्धनैर्दीप्त-हुताशनस्य किमग्रभागेऽप्यति-शीतता स्यात् ।। इति ।

"मलमासे न कर्त्तव्यं कदाचिद् होलिकार्चनम्" इति वचनेन शुद्ध फाल्गुन-पूर्णिमायां होलिकां दहेत् । ग्रहणे समुपस्थिते ग्रहणात् पूर्वत्र परत्र वा होलिकां दहेत्, ग्रहणकाल एव पूर्णिमालाभे स्नात्वा तां दहेत्-सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत शितमन्नं विवर्जयेत् ।।

**मेषार्के ( मेष संक्रान्तौ )-गलन्तिका देया**-तुलस्याः शिवलिङ्गस्य चोपरि शनैः शनैः शश्वज्जलपतनार्थं सकुशसूक्ष्माच्छिद्रयुक्तो घटः स्तम्भाधारद्वारा यत् स्थाप्यते सा गलन्तिकेत्युच्यते । प्रपा=पानीयशाला ।

## गुरु पूर्णिमा

आषाढ़ी पूर्णिमा सूर्योदयगामिनी पूजनकर्मयोग्यकालव्यापिनी गुरुपूजायां ग्राह्या। अत्र गुरुव्यासयोः पूजा। गुरुरत्र दीक्षागुरु र्विद्यागुरु र्वा। ओं गुरुर्ब्रह्मा गुरुर्विष्णु र्गुरुर्देवो महेश्वरः । गुरुः साक्षात् परब्रह्म तस्मै श्री गुरवे नमः ।।

## श्रावण-भाद्रयोः नद्या रजोयोगः

**राजमर्त्तण्डे**-सिंहकर्कटयोर्मध्ये सर्वानद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ।। तपनस्य सुता, गङ्गा गोमती च सरिद्वरा । रजसा च न दुष्यन्ति ये चान्ये नदसंज्ञकाः ।। उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ।। सिंहो = भाद्रः । कर्कटः = श्रावणः । तपनस्य सुता = यमुना। नदसंज्ञकाः = ब्रह्मपुत्र-शोणादायः ।

## कर्मारम्भ-नियमाः

पूर्वदिने कृतैकभुक्तादिसंयमः कर्मदिनेऽभुक्तः कृतस्नानः स्वकीयं धौतम् अहतम् (अखण्डम् अस्यूतं च) वस्त्रद्वयम् (अधरीयमुत्तरीयञ्च), नूतनं वा, तद् अकृष्णवर्णम् अनीलवर्णं च (पितृकार्ये अरक्तमपि) परिधानं प्राङ्मुख उदङ्मुखो वा (रात्रौ तूदङ्मुख एव) कुश-कम्बलादि-यथोचितासने उपविश्याचम्य गङ्गाजलेन आत्मानमुपकरणञ्च सिक्त्वा सन्ध्या-तर्पण-पञ्चदेवता-विष्णुपूजनं स्वाधिकारार्हं कर्म सम्पाद्य कर्त्तव्य-कर्मणः सङ्कल्पं कुर्यात् ।

**तथा च स्मृतिः**-परिधायाहतं वस्त्रद्वयं च द्विपटीं स्त्र्यपि ।। एकवस्त्रो न भुञ्जीत श्रौते स्मार्ते च कर्मणि । न कुर्याद् देवकार्याणि दानं होमं जपं तथा ।। एकवस्त्रा तु या नारी मुक्तकेशाव्यवस्थिता । न साधिकारिणी ज्ञेया श्रौते स्मार्ते च कर्मणि ।। सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत् कृतम् ।। अनुजानु शुचौ देशे उपविष्ट उदङ्मुखः । (जानुतो

बहिर्बाहुं न कुर्यात्) । ततः कृत्वाङ्गुलिस्पर्शं दृग्-घ्राण-श्रोत्र-नाभिषु । मूर्धानं चरणौ चाद्भिः संप्रोक्ष्याथ शुचिर्भवेत् ।। बहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः । सोपानत्कस्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात् ।। दानमाचमनं होमं भोजनं देवतार्चनम्। प्रौढ़पादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ।। आसनारूढ़पादः = प्रौढ़पादः । "संस्कार्यः पुरुषोवापि स्त्री वा दक्षिणातः सदा"। "व्रते दाने मखे चैव पत्नी तिष्ठति दक्षिणे"।। आशीर्वादेऽभिषेके च पादप्रक्षालने तथा। शयने भोजने चैव पत्नी उत्तरतो भवेत् ।। सर्वत्र प्राङ्मुखो दाता प्रतिग्राही ह्युदङ्मुखः । एष दान-विधिः प्रोक्तो, विवाहे तु विपर्ययः ।। कनिष्ठा-देशिन्यङ्गुष्ठमूलान्यग्रं करस्य तु। प्रजापति-पितृ-ब्रह्म-देवतीर्थान्यनुक्रमात् ।। "न रात्रौ स्थापनं कार्यं न च कुम्भाभिषेचनम्" ।। नैवेद्यंदक्षिणे वामे पुरतो न च पृष्ठतः। दीपं दक्षिणतो दद्यात्, पुरतो न च वामतः। वामतस्तु तथा धूपमग्रे वा न च दक्षिणे । निवेदयेत् पुरोभागे गन्धं पुष्पञ्च भूषणम् ।। एकं चण्ड्यां रवौ सप्त, त्रीणि कुर्याद् विनायके । चत्वारि केशवे कुर्यात्, शिवे चार्धं प्रदक्षिणम् ।। "सर्वपत्रमयी दूर्वा, सर्वमप्सु प्रतिष्ठितम्" । "नवग्रहमखं कृत्वा ततः कर्म समारभेत्" । "होमश्च पिण्डदानं च, तथा ब्राह्मणभोजनम् । श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिके" ।।

## स्वस्तिशान्तिवाचन मन्त्राः

ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः, स्वास्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः, स्वस्ति नो बृहस्पति र्दधातु ।।१।। ओम् पयः पृथिव्यां पय ओषधीषु, पयोदिव्यन्तरिक्षे पयोधाः। पयस्वतीः प्रदिशः सन्तु मह्यम् ।।२।। ओम् अग्निर्देवता वातो देवता, सूर्यो देवता चन्द्रमा देवता। वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता। विश्वेदेवा देवता बृहस्पति देवतेन्द्रो देवता वरुणो देवता ।।३।। ओम् द्यौः शान्तिरन्तरिक्ष ॐ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्ति र्ब्रह्म शान्तिः, सर्व ॐ शान्तिः, शान्तिरेव शान्तिः, सा मा शान्तिरेधि ।।४।। ओम् गणनान्त्वा गणपति ॐ हवामहे, प्रियाणान्त्वा प्रियपति ॐ हवामहे, निधीनान्त्वा निधिपति ॐ हवामहे, वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम् ।।५।। ओम् अम्बे अम्बिकेऽम्बालिके न मानयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ।।६।। ओम् श्रीश्चते लक्ष्मीश्च पन्त्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्म इषाण, सर्वलोकम्म इषाण ।।७।। ओम् यतो यतः समीहसे, ततो नो अभयं कुरु। शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः ।।८।। ओम् विश्वानि देव सवित र्दुरितानि परासुव यद् भद्र तन्न आसुव ।।९।। ओम् शान्तिः शान्तिः शान्तिः ।।

ओम् सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो

विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहेच प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थ-सिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ओम् सच्चिदानन्दाय परब्रह्मणे नमः। ओम् परमऋषिभ्यो नमः । ओम् लक्ष्मीनारायणाभ्यां नमः। ओम् उमामहेश्वराभ्यां नमः। ओम् वाणी-हिरण्यगर्भाभ्यां नमः। ओम् शची-पुरन्दराभ्यां नमः। ओम् गुरुचरणमकलेभ्यो नमः। ओम् मातृचरणमकलेभ्यो नमः। ओम् पितृचरणकमलेभ्यो नमः। ओम् कुलदेवतायै नमः। ओम् इष्टदेवतायै नमः। ओम् ग्रामदेवताभ्यो नमः। ओम् स्थानदेवताभ्यो नमः। ओम् वास्तुदेवताभ्यो नमः। ओम् सर्वेभ्यो देवेभ्यो नमः। ओम् पितृभ्यो नमः। ओम् सर्वेभ्यो ब्राह्मणेभ्यो नमः। ओम् शान्तिः शान्तिः शान्तिः। ओम् सुशान्ति र्भवतु ॥

## हवनविधिः

कुशैः हस्तमात्र-परिमितां चतुरस्रां भूमिं परिसमुह्य, तान् कुशान् ऐशान्यां परित्यज्य, गोमयोदकेन उपलिप्य, स्रुवमूलेन प्रादेशप्रमाण प्रागग्राः तिस्रो रेखा उत्तरोत्तर क्रमेणोल्लिख्य, ताभ्यो रेखाभ्यः अनामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य, जलेनाभ्युक्ष्य, कांस्यपात्रेणाग्निमादाय, पश्चिमाभिमुखम् अग्निमुपसमाधाय पञ्चोपचारैः स्थण्डिलं कुण्डं वा सम्पूज्य मुख्यदेवतां च पूजयेत् ॥ ततो ब्रह्माणं वृणुयात् पुष्पचन्दनवस्त्राण्यादाय ओम् अद्य कर्त्तव्य अमुक होमकर्मणि कृताकृता-वेक्षणरूप-ब्रह्मकर्मकर्त्तुं ( त्वं मे ब्रह्मा भव।) अमुकगोत्रम् अमुकशर्माणं ब्राह्मणम् एभिः पुष्पचन्दनताम्बूलकटिसूत्राङ्गुरीयक-वासोभिस्त्वामहं वृणे। "ओम् वृतोऽस्मि" । ॐ यथाविहितं कर्म कुरु' ॥ "ॐ करवाणि" । ततोऽग्नेः प्रदक्षिणक्रमेण दक्षिणदिशि कुशोपरि उदङ्मुखं ब्रह्माणमुपवेशयेत्। ततः परिस्तरणम्-बर्हिषश्चतुर्थ-भागमादाय आग्नेयादीशानान्तं, ब्रह्मणोऽग्निपर्यन्तं, नैर्ऋताद् वायव्यान्तम्, आग्नितः प्रणीतापर्यन्तम् अग्नेः परिस्तरणं कुर्यात्। ततः पवित्रच्छेदनकुशैः स्वप्रादेश-मिते पवित्रे छित्वा, प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय, सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय द्वाभ्यामनामिकाङ्गुष्ठाभ्याम् उत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् । ततः प्रोक्षणीपात्रं वामहस्ते कृत्वा सपवित्र-दक्षिणानामिकाङ्गुष्ठाभ्यां प्रोक्षणीजलं त्रिरुत्क्षिप्य, प्रणीतोदकेन प्रोक्षणीमभिषिच्य, प्रोक्षणीजलेन आसादितवस्तूनि अभिषच्य अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ।

तत आज्यस्थाल्यामाज्यं कृत्वा अधिश्रित्य, ज्वलत्तृणमादाय आज्योपरि प्रदक्षिणं भ्रामयित्वा वह्नौक्षिपेत् । ततः स्रुवं त्रिः प्रतप्य, सम्मार्जनकुशानम् अग्रैः अन्तरतो, मूलै र्बाह्यतः स्रुवं समृज्य, प्रणीतोदकेनाभ्युक्ष्य, पुनः त्रिः प्रतप्य स्वदक्षिणतः

कुशोपरि निध्यात्। ततोऽग्नितः प्रदक्षिणक्रमेण आज्यमवतार्य अग्रे निदध्यात्। ततः त्रिरुत्पवनम्, अवेक्ष्य सत्यपद्रव्ये तन्निरसनम्। ततः प्रोक्षणीजलस्योत्पवनम्।

ततः उपयमनकुशान् वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा उत्तिष्ठन् तूष्णीमग्नौ घृताक्तास्तिस्रः समिधः क्षिपेत्। ततः उपविश्य सपवित्र-प्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य, प्रणीतापात्रे पवित्रे निधाय, ब्रह्मणाऽन्वारब्धः पातितदक्षिणजानुः समिद्धतमेऽग्नौ जुहुयात्। तत्र प्रत्याहुत्यनन्तरं स्रुवावस्थितहुतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः।—"ॐ प्रजापतये स्वाहा, इदं प्रजापतये"—इति मनसा ॥१॥ "ॐ इन्द्राय स्वाहा, इदमिन्द्राय" ॥२॥ 'ॐ अग्नये स्वाहा, इदमग्नये' ॥३॥ 'ॐ सोमाय स्वाहा, इदं सोमाय' ॥४॥ ततो व्याहृतिहोमः—ॐ भूः स्वाहा, इदं भूः ॥१॥ ॐ भुवः स्वाहा, इदं भुवः ॥२॥ ॐ स्वः स्वाहा, इदं स्वः ॥३॥ ॐ भूर्भुवः स्वः स्वाहा, इदं भूर्भुवः स्वः ॥४॥

ततः प्रायश्चित्तहोमः—ॐ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषा ꣳसि प्रमुमुग्ध्यस्मत् स्वाहा, इमदग्नीवरुणाभ्याम्'॥ इत्यादि पञ्चाहुतय :—

ॐ सत्वन्नो०। ॐ अयाश्चाग्ने०। ॐ येते शतम्०। ॐ उदुत्तमं०। इत्यादि।

ततो यथेष्ट देवतामन्त्रै र्यथासंख्यकैः साकल्यादिभि र्हवनं विधाय प्राजापत्य-होमं मनसा कुर्यात्—'ओम् प्रजापतये स्वाहा, इदं प्रजापतये'। 'ओम् अग्नये स्विष्टकृते स्वाहा, इदमग्ये स्विष्टकृते'। ततः संस्रव-(प्रोक्षणीजल-) प्राशनं कृत्वाचम्य ब्रह्मणे दक्षिणां दद्यात्—ओम् अद्य कृतैतद्धोमकर्मणि ब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं (ब्रह्मणे दक्षिणा नमः) अमुक गोत्राय अमुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणामहं ददे'। 'ओम् स्वस्ति'। ततोऽग्निप्रदक्षिणक्रमेण हस्तं गृहीत्वा ब्रह्मोत्त्थापनं, ग्रन्थिविमोको वा।

**अथ प्रणीताविमोकः**—'ॐ सुमित्रिया न आप ओषधयः सन्तु'—इति मन्त्रेण प्रणीताजलैः शिरः समृज्य—'ॐ दुर्भित्रियास्तस्मै सन्तु यो अस्मान् द्वेष्टि, यं च वयं द्विष्मः'—इत्यैशान्यं प्रणीता—न्युब्जीकारणम्। ततः स्तरणक्रमेण बर्हिरुत्त्थाप्य जूटिकां कृत्वा घृतेनाभिघार्य हस्तेनैव जुहुयात्—"ओम् देवायातुविदो गातुं वित्त्वा गातुमित। मनसस्पत इमं देव यज्ञꣳ स्वाहा, वातेधाः स्वाहा" ।

**ततः पूर्णाहुतिः**—उत्त्थाय फलपुष्पताम्बूल-समन्वित घृतपूर्ण स्रुवेण-ओम् मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्। कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः स्वाहा—इत्यविच्छिन्नां घृतधारां वह्नौ क्षिपेत्। ततः स्रवेण भस्मानीय—'ॐ त्र्यायुषं जमदग्नेः'—इति ललाटे, 'ॐ कश्यपस्य त्र्यायुषम्'—इति ग्रीवायां, 'ॐ यद्देवेषु त्र्यायुषम्'—इति दक्षिणबाहुमूले, ॐ तन्नो

अस्तु त्र्यायुषम्' । इति हृदि भस्म धारयेत्। अन्यानपि कुर्यात्, तत्र 'तन्नो' इत्यस्य स्थाने 'तत्ते' इति पठेत्। सधवा तु सिन्दूर-मिश्रितं भस्म गृह्णीयात् ।

॥ इति ॥

# अथ मातृकापूजाविधिः

कृतनित्यक्रियो व्रती पञ्चदेवतां विष्णुं च सम्पूज्य कुड्ये फलके वा स्थापितरक्षिकासु गणपति दुर्गासहितषोडशमातॄर्मृन्मयीं श्रियं च पूजयेत्। तत्र संकल्पः' कुशात्रयतिलजलान्यादाय ॐ अद्यामुकमासीयअमुकपक्षीय-अमुकतिथौ, अमुकर्मनिमित्तकं गणपपिदुर्गाश्रीसहिताः षोंडशमातरहं पूजयिष्ये । ततः प्रथम-रक्षिकामारभ्य क्रमेण-ॐ गणपतिरसि । ॐ दुर्गाऽसि। १. ओं गौर्यसि। २. ॐ पद्मासि । ३. ॐ शर्च्यसि । ४. ॐ मेधासि । ५. ॐ सावित्र्यसि । ६. विजयासि । ७. ॐ जयासि । ८. ॐ देवसेनासि । ९. ॐ स्वधासि । १०. ॐ स्वाहासि । ११. ॐ मातरःस्थ । १२. ॐ लोकमातरःस्थ । १३. ॐ हृष्टिरसि । १४. ॐ पुष्टिरसि । १५. ॐ तुष्टिरसि । १६. ओमात्मकुलदेवतासि । ॐ श्रीरसि । इति प्रत्येकं स्पृष्ट्वा अक्षतान्यादाय-ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञग्वं समिमं दधातु । विश्वेदेवास इह मादयन्तामों प्रतिष्ठ । ॐ गणपतिदुर्गाश्रीसहिताः षोडशमातर इह सुप्रतिष्ठिता भवन्तु । इति सर्वासामेकदैव प्राणप्रतिष्ठां कुर्यात् ( छन्दोगानां प्राणप्रतिष्ठामन्त्रस्तु-ॐ वाङ्मनः प्राणोऽपानो व्यानश्चक्षुः श्रोत्रं शर्म वर्म भूतिः प्रतिष्ठा । इति ) ततोऽक्षतान्यादाय प्रथमरक्षिकाक्रमेण-ॐ भूर्भूवःस्वः गणपते इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यादीनि ॐ गणपतये नमः । इदमनुलेपनम्०। इदमक्षतम्०। इदं पुष्पम्०। एतानि गन्धपुष्पधूपदीपताम्बूलयथाभागवासोनैवेद्यानि ॐ गणपतये नमः । ततः ॐ भूर्भूवस्वः दुर्गे इहागच्छ इह तिष्ठेत्यावाह्य, ॐ दुर्गायै नमः इति पञ्चोपचारैः पूजयेत् । ततः ॐ भूर्भूवःस्वः गौरि इहागच्छ इह तिष्ठेत्यावाह्य । ॐ गौर्यै नमः इति पञ्चौपचारैः पूजयेत् । एवं ॐ भू० पद्मे इहागच्छ० । ॐ पद्मायै नमः । ॐ भू० शचि इहागच्छ । ॐ शच्यै नमः । ॐ भू० मेधे इहागच्छ० । ॐ मेधायै नमः । ॐ भू० सावित्रि इहागच्छ० । ॐ सावित्र्यै नमः । ॐ भू० विजये इहागच्छ० । ॐ विजयायै नमः । ॐ भू० जये इहागच्छ० । ॐ जयायै नमः । ॐ भू० देवसेने इहागच्छ० । ॐ देवसेनायै नमः । ॐ भू० स्वधे इहा-गच्छ० । ॐ स्वधायै नमः । ॐ भू० स्वाहे इहागच्छ०। ॐ स्वाहायै नमः । ॐ भू० मातर इहागच्छत० । ॐ लोकमातृभ्यो नमः । ॐ भू० हृष्टे इहागच्छ० । ॐ हृष्ट्यै नमः । ॐ भू० पुष्टे इहागच्छ० । ॐ पुष्ट्यै नमः । ॐ भू० तुष्टे इहा-

गच्छ० । ॐ तुष्ट्यै नमः । ॐ भू० आत्मकुलदेवते इहागच्छ० । ॐ आत्मकुलदेवतायै नमः। ततः ॐ भूर्भुवः स्वः श्रीरिहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यादीनि ॐ श्रियै नमः । एवं चन्दनसिन्दूरादिभिः पूजयेत् । ततो घृतेन उत्तरोत्तरक्रमेण भित्तौ तिस्रः पञ्च सप्त वा धारा देयास्ताश्च सवृन्तकदलीफलेन पूगीफलेन वा प्रयच्छेदनेन प्रतिवारमुच्चारितेन–ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्त्वा कामधुक्षः ।।

इति प्रतिमन्त्रान्ते धारा देया । **छन्दोगानां वसोर्धारामन्त्रस्तु**–ॐ एतमुत्यं मदच्युतं शतधारं वृषभं दिवो दुहं विश्वावसूनि बिभ्रतम् । सहस्रधारं वृषभम्पयोदुहं प्रियं देवाय जन्मने । ऋतेन ऋतजातो विवावृधे राजा देव ऋतं बृहत् । (अन्यत् सर्व समानम्) ततः ॐ गणपतिदुर्गासहिताः षोडशमातरः पूजिताः स्थ क्षमध्वमित्येकदैव विसर्जयेत् । ॐ श्रीर्मयि रमस्वेति श्रियमपि विसर्जयेत् । ततो दक्षिणा । कुशत्रयतिलजलान्यादाय–ओमद्य कृतैतद्–गणपतिदुर्गाश्रीसहितषोडशमातृपूजनकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । ॐ स्वस्तीति प्रतिवचनम् । इति मातृकापूजाविधिः ।

## वाजसनेयि पिण्डरहित अभ्युदयिक श्राद्ध

उपनयन-विवाहादिसंस्कारे आभ्युदयिक-श्राद्धमावश्यकम् । तथाहि स्मृतिः–नानिष्ट्वा तु पितॄन् श्राद्धे कर्म्म वैदिकमाचरेत् । इति । तच्च पित्रा, भात्रा, अन्येन वा कर्त्तव्यम् । तथाहि–पिता कुर्य्यात्तदन्यो वा तस्याभावो तु तत्क्रमात् । "तत्क्रमात्" अर्थात्–स्व पितृभ्य पिता दद्यात् सुत संस्कार कर्म्मणि । पिण्डानोद्वाहना-तेषान्तस्याभावे तु तत्क्रमात । कात्यायनः। अयम्भावः–सुतश्च सुता च सुतौ तयोः संस्कार कर्म्मणि पिता–स्वपित्रादिभ्यो, मातामहादिभ्यश्च पिण्डान्दद्यात् । यदा तु पितृ भिन्नः संस्कर्त्ता भवति तदा जीवतो माणवक पितुः पित्रादीनां मातामहादीनाञ्च दद्यात् । यदि च पिता न जीवति तदा माणवकस्य कन्यायाश्चैव पित्रादिभ्यो मातामहादिभ्यश्च दद्यात् ।

उत्सवनन्द सन्तान यज्ञोद्वाहादि मङ्गले । मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् । ततो मातामहा राजन विश्वेदेवास्तथैव च–मत्सयपुराणे । तेन पित्रादि श्राद्धात्पूर्व्वमेव मातृश्राद्धम्, अत्र विश्वेदेवा इति न क्रमपरं तेषामभ्यर्हितत्त्वेन सर्व्वतः प्राथम्यात् । देवतीर्थेनैव पिण्डं दद्यात् कायेन वा नृप, विष्णु पुराणे । कायेन प्राजापत्येनेत्यर्थः । पिण्डमिति कर्म्ममात्रस्योपलक्षणं ज्ञेयमत्र। पूर्व्वाह्णादि मुहूर्त्ते कर्त्तव्य माङ्गल्य कर्म्मकालातिक्रमादि–दोषभयात्संक्षिप्तमपि फल-मूलादिभिर्य्यथालाभं पिण्डरहितमपि श्राद्धमाचार्य्या मन्वते। तथा च, पिण्डनिर्वापणं कुर्यान्नवा कुर्य्याद्विचक्षणः । वृद्धिश्राद्धं कुलाचार देश कालाद्यवेक्ष्य हि। भविष्यपुराणे।

अग्नौ करणमर्घञ्च आवाहनावनेजनम् । पिण्डश्राद्धे प्रकुर्व्वीत पिण्डहीने विवर्ज्जयेत् ।।इति।। तत्र क्रमः—पश्चिमाभिमुखः प्राङ्मुख उदङ्मुखो वा उपविश्याचान्तो यो यो जीवति तं तं परित्यज्य परं परं पुरुषमन्तर्द्धार्य्य सर्व्वं सव्येन कार्य्यम्, आसनादौ ऋजवो दर्भाः सर्व्वत्र तिलस्थाने यवाः नापसव्यकरणम्, न वामजानु-पातनम् न पितृमन्त्र जपः। कुशत्रयजला यादाय ॐ अपवित्रः पवित्रो वा सर्व्वावस्थाङ्गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः। ॐ पुडरीकाक्षः पुनातु। इति श्राद्धीय द्रव्याण्यात्मनञ्चसिञ्चेत् ।

ततः कुशत्रय यवजलान्यादाय—"ॐ अद्यामुकमासीयामुकपक्षीयामुक तिथाव-मुक गोत्राया अस्याः (तस्या वा) श्री अमुक कुमारिकायाः कर्त्तव्य विवाहकर्म्म वा चूड़कर्णोपयन निमित्तक आभ्युदयिक श्राद्धमहङ्करिष्ये" (अन्य पक्षे करिष्यामीत्यूह्यम्) इति सङ्कल्प्य, गायत्रीं त्रिर्ज्जपित्वा, "ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः' इति त्रिर्ज्जपेत् । ततः कुशत्रय यव जलान्यादाय—"ॐ अद्य विश्वेदेवा इदमासनं वो नमः" इति त्रिर्देवतीर्थेनासनानि दद्यात् ।

पुनरपि कुशत्रय-यव-जलान्यादायदैवतीर्थेन प्राजापत्यतीर्थेन वा—"ॐ अद्यामुक गोत्रे मातरमुकदेवि नान्दीमुखि इदमासनन्तुभ्यं वृद्धिः । एवं पितामही, प्रपितामहीभ्यामपि आसनन्दद्यात् । ततः—"ॐ अद्यामुक गोत्र पितरमुक शर्म्मन्नान्दीमुख इदमासनन्तुभ्यं वृद्धि" एवं पितामह प्रपितामहाभ्यामपि। ततः—"ॐ अद्यामुक गोत्र मातामहअमुक शर्म्मन्नान्दीमुख इदमासनन्तुभ्यं वृद्धिः"। एवं प्रमातामह, वृद्ध प्रमातामहाभ्यामपि । (अत्र पितुरभावे माणवकस्य कन्यायाश्चैव मातृ-पितृ- मातामहादीनां श्राद्धम् तत्पक्षे वाक्यम्—ॐ अद्येत्यादि "माणवकस्य"—कन्याया वा मातः, पितः, मातामहः," इति प्रत्येकं पृथक् पृथक् योजयित्वोह्यमुपर्य्युक्तमूलक्रमेण ।)

ततो गन्धादिदानम्—कुशत्रय-यव-जलान्यादाय—"ॐ अद्य विश्वेदेवा एतानि गन्ध-पुष्प-धूप-दीप ताम्बूल-यज्ञोपवीत (यथाभाग) वासांसि वो नमः' एवं त्रिर्दद्यात्। पुनरपि कुशादिकमादाय—"ॐ अद्यामुकगोत्रे मातरमुक देवि नान्दीमुखि एतानि गन्ध-पुष्प-धूप-दीप-ताम्बूल-सिन्दूर यथाभागवासांसि तुभ्यं-वृद्धिः" एवं पितामही, प्रपितामहीभ्यामपि दद्यात् । ततः कुशादिकङ्गृहीत्वा—"ॐ अद्यामुक गोत्र पितरमुक शर्म्मन्नान्दीमुख एतानि गंध-पुष्प-धूप-दीप-ताम्बूल यज्ञोपवीत (यथाभाग) वासांसि तुभ्यं वृद्धिः" एवं पितामह-प्रपितामहाभ्यामपि। ततः "ॐ अद्यामुक गोत्र मता-महाऽमुक शर्म्मन्नान्दीमुख एतानि-गंध-पुष्प-धूप-दीप-ताम्बूल (यज्ञोपवीत) यथाभाग वासांसि तुभ्यं वृद्धिः एवं प्रमातामह, वृद्धप्रमातामहाभ्यामपि दद्यात् ।।

ततो जलेन सर्व्वासनान्यन्नसहितानि चतुष्कोणमण्डलेन वेष्टयेत्। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातित वामजानुम्मोटकतिल-जलान्यादाय ॐ इदमन्नमेतद्भूस्वामि

पितृभ्योनमः'' इति भूस्वामिने किञ्चिदन्नं दद्यात् । ततः सव्यं कृत्वा देव पूर्वं सर्व्वपात्रेष्वन्नं परिविष्य तदुपरि घृत-यवान् दत्त्वा द्वादशसु पुटकेषु घृतं जलञ्च दत्त्वा, उत्तान-पाणिभ्यां देवपात्रमालभेत-''ॐ पृथ्वी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा । ॐ इदव्विँष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढ़मस्य पाꣳसुरे । ॐ कृष्णहव्यमिदं रक्षमदीयम् ।''ॐ इदमन्नमित्यन्ने, ॐ इमा आपः इति जले, ॐ इदमाज्यमितिघृते ॐ इदं हविरिति पुनरप्यन्ने दक्षिणाङ्गुष्ठमारोपयेत् ॥

ततो यवान् गृहीत्वा–ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः' इत्यन्नोपरि विकीर्य्य, वामेन पाणिना कुशत्रय-यव जलान्यादाय ''ॐ अद्य विश्वेदेवा इदमन्नं सोपकरणं वो नमः'' एवं त्रिर्दद्यात् ॥ ततो मातृ-पात्रमुक्तरीत्याऽऽलभ्य ॐ पृथ्वीते पात्रमित्यारभ्य-''कृष्ण हव्यमिदं रक्षमदीयम्'' इत्यन्तं पठित्वा-''ॐ इदमन्नम्, ''ॐ इमा आपः, ''ॐ इदमाज्यम् 'ॐ इदं हविरित्यन्नादिषु दक्षिणाङ्गुष्ठं निवेश्य, ''ॐ अपहता असुरा रक्षाꣳसि वेदिषदः'' इत्यादिना, अन्नोपरि यवान् विकीर्य्य, कुशत्रय यव जलान्यादाय–''अद्यामुक गोत्रे मातरमुक देवि नान्दीमुखि इदमन्नं सोपकरणं तुभ्यं वृद्धिः'' । एवं पितामही, प्रतिमहीभ्यामपि दद्यात् ॥

तत उक्त विधिना पित्रादि पात्रेष्वालभ्य–''ॐ पृथ्वी ते पात्रमित्यारभ्य'' ''कृष्ण हव्यमिदंरक्ष०'' पर्य्यन्तमुच्चार्य्य, ''ॐ इदन्नमित्यादि पूर्वोक्तक्रमेण, ''ॐ अपहता असुरे'' ति यवान् विकीर्य्य, कुशत्रय-यव जलान्यादाय–''ॐ अद्यामुक गोत्र पितरमुक शर्म्मन्नान्दीमुख इदमन्नं सोपकरणं तुभ्यं वृद्धिः'' एवं पिता-मह, प्रपितामहाभ्यामपि दद्यात् ॥ ततो मातामहदीनामपि सर्व्वं पूर्व्ववदेव कार्य्यम् ॥ ततः प्राञ्जलिः ॥ ''ॐ अन्नहीनं क्रियाहीनं विधिहीनञ्च यद्भवेत् ॥ तत्सर्व्वम-च्छिद्रमस्तु'' इति पठित्वा, गायत्रीं त्रिर्ज्जपित्वा कुशेषूपविश्य मधुमधु मध्विति जपेत् ॥

ततो दक्षिणा-कुशादिकमादाय–''ॐ अद्य विश्वेषान्देवानां कृतैतदाभ्युदयिक श्राद्ध प्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते यथानाम गोत्राय ब्राह्मणाय दक्षिणामहन्ददे'' एवं त्रिर्दद्यात् । ततः पुनरपि कुशादिकमादाय–''ॐ अद्यामुक गोत्राय मातुरमुक देव्या नान्दी मुख्याः कृतैतदाभ्युदयिक श्राद्ध प्रतिष्ठार्थमिमे फलमूले वनस्पति दैवते यथानाम गोत्राय ब्राह्मणाय दक्षिणामहन्ददे''। ''एवं अमुक गोत्रायाः पितामह्या अमुकदेव्या नान्दीमुख्याः प्रपितामह्याश्चोह्यम् । ॐ अद्यामुकगोत्रस्य पितुरमुक शर्म्मणो नान्दीमुखस्य कृतैतदादि पूर्व्ववत्। एवं पितामह प्रपितामहाभ्यां दद्यात् । उक्त क्रमेणैव मातामहेभ्योऽपि दद्यात् । ततः–''ॐ देवताभ्यः०'' इति त्रिर्ज्जपित्वा. दीपनिर्व्वापणम् । हस्तौ पादौ प्रक्षाल्याऽऽचम्य। ॐ प्रमादात्कुर्व्वतां कर्म्म प्रच्यवेताऽध्वरेषु यत्स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः । ॐ विष्णुर्विष्णुर्हरिर्हरिः । इति पठित्वा श्राद्धीय द्रव्याणि ब्राह्मणाय प्रतिपादयेत् । इति वाजसनेयिनां पिण्डरहिताऽऽभ्युयिदक श्राद्धम् ।

## अथ छन्दोगानां पिण्डरहिताभ्युदयिकश्राद्धविधिः[1]

पश्चिमाभिमुखः द्विराचम्योपविश्य ओं अपवित्रः पवित्रो वा इत्यादि पठित्वा श्राद्धद्रव्याणि सिञ्चेत् । ततः कुशत्रययवजलान्यादाय[2]–ओं अद्यामुकनिमित्त-कर्माभ्युदयिकश्राद्धमहं करिष्ये । इति संकल्प्य गायत्रीं त्रिर्जपित्वा ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति ।। इति त्रिर्जपेत् । ततः कुशत्रययव-जलान्यादाय–ओं अद्य विश्वेदेवा इदमासनं वो नमः । इति त्रिभ्यः । ततः ओं अद्यामुकगोत्रे मातरमुकि देवि नान्दीमुखि इदमासनं तुभ्यं वृद्धिः । एवं पितामहीप्रपितामह्योः । ततः–ओं अद्यामुकगोत्र पितरमुक-शर्मन्नान्दीमुख इदमासनं तुभ्यं वृद्धिः । एवं पितामहप्रपितामहयोः। ततः–ओं अद्यामुकगोत्र मातामहामुकशर्मन्नान्दीमुख इदमासनं तुभ्यं वृद्धिः । एवं प्रमातामहवृद्धप्रमातामहयोः । ततो गन्धादिदानम् । कुशत्रययवजलान्यादाय–ओं अद्य विश्वेदेवा एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीताच्छादनानि वो नमः। इति त्रिभ्यः । ततः ओं अद्यामुकगोत्रे मातरमुकि देवि नान्दीमुखि एतानि गन्धपुष्पधूप दीपताम्बूलसिन्दूराच्छादनानि तुभ्यं वृद्धिः । एवं पितामही–प्रपितामह्योः । ततः ओं अद्यामुकगोत्रः पितुरमुकशर्मन्नान्दीमुख एतानि गन्धपुष्पधूपदीपताम्बूल-यज्ञोपवीताच्छादनानि तुभ्यं वृद्धि । एवं पितामहादिभ्यः पञ्चभ्यः । ततो वारिणा वरिवेषणपात्रे गायत्र्या चतुरस्रमण्डलकरणम् । ततोऽपसव्येन एकस्मिन् पुटके तिलघृतमधुयुतमन्नं कृत्वा मोटकतिलजलान्यादाय–ओं इदमन्नमेतद्भूस्वामिपितृभ्यो नमः । इति भूस्वामिने अन्नं दद्यात् । ततः सव्येनान्नं परिविष्य तदुपरि घृतयवादिकं दत्वा १२ पुटकेषु जलञ्च तत्र-तत्रोपनीयोत्तानपाणिभ्यां देवपात्रमालभ्य–ओं पृथ्वी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि स्वाहा । ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे । ओं कृष्णहव्यमिदं रक्ष मदीयम् । ओं इदमन्नमित्यन्ने, ओं इमा आपः इति जले, ओं इदं हविरिति पुनरन्नेऽङ्गुष्ठं निवेश्य, ओं यवोऽसि यवयास्मद्द्वेषो यवयारातीः । इत्यन्ने यवान् प्रक्षिप्य कुशत्रययवजलान्यादाय–ओं अद्य विश्वदेवा इदमन्नं सोपकरणं वो नमः । ततस्तथैव मातृपात्रमालभ्य–ओं पृथ्वी ते

---

१. अत्र श्राद्धे यो यो जीवति तं तं परित्यज्य सर्वं सव्येन कार्यम् । आसनादौ ऋजवः (तेकुशादिरूपाः) दर्भाः ग्राह्याः । सर्वत्र (भूस्वामिनं विहाय) तिलस्थाने यवाः, नापसव्यकरणं न वामजानुपातनं न पितृमन्त्रजपः। शातातपः–'प्रातर्वृद्धिनिमित्तकम्' गर्गः–ललाटसम्मिते भानौ प्रथमः प्रहरः स्मृतः । स एव सार्धसंयुक्तः प्रातरित्यभिधीयते ।।

२. नामकरणे–ओमद्येत्यादि–अस्यशिशोः कारयितव्यनामकरणनिमित्तकाभ्युदयिकश्राद्धमहं करिष्ये । उपनयने–ओमद्येत्यादि अमुकगोत्रस्याऽस्य श्री अमुककुमारस्य कर्त्तव्यचूडाकरणोपनयनससावित्र-समावर्तनचरुहोमकर्मनिमित्तकाभ्युदयिकश्राद्धमहं करिष्ये ।
विवाहे–ओमद्येत्यादि अस्याः श्री अमुककुमारिकायाः कारयितव्यविवाहकर्मनिमित्तकाभ्युदयिक-श्राद्धमहं करिष्ये ।

पात्रमित्यादि, ओं इदं विष्णुरित्यादि च पठित्वा ओं कृष्ण कव्यमिदं रक्ष मदीयम् । ओं इदमन्नं, ओं इमा आपः, ओं इदं हविरित्यन्नादिष्वङ्गुष्ठमारोप्य—ओं अपहता असुरा रक्षांसि वेदिषदः। इत्यन्नोपरि यवान् विकीर्य कुशादिकमादाय—ओं अद्यामुकगोत्रे मातरमुकि देवि नान्दीमुखि इदमन्नं सोपकरणं तुभ्यं वृद्धिः । एवं पितामहीप्रपितामहीभ्याम् । ततस्तथैव पितृपात्रमालभ्य—ओं पृथ्वी ते इत्यादि, ओं इदं विष्णुरित्यादि च पठित्वा ओं कृष्ण कव्यमिदं रक्ष मदीयम् । ओं इदमन्नं, ओं इमा आपः, ओं इदं हविः, इत्यन्नादिष्वङ्गुष्ठमारोप्य—ओं अपहता असुरा रक्षांसि वेदिषदः । इत्येन्ने यवान्विकीर्य कुशदिकं गृहीत्वा—ओं अद्यामुकगोत्र पितरमुकशर्मन्नान्दीमुख इदमन्नं सोपकरणं तुभ्यं वृद्धिः । एवं पितामहादिभ्यः पञ्चभ्यो दद्यात् । ततः प्राञ्जलिः—ओं अन्नहीनं क्रियाहीनं विधिहीनश्च यद्भवेत् । तत्सर्वमच्छिद्रमस्तु । इति जपेत् ततः कुशेषूपविश्य गायत्रीं त्रिर्जपित्वा—ओं मधु मधु मध्विति जपेत् । ततो दक्षिणा—ओं अद्य विश्वेषां देवानां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । ओं अद्यामुकगोत्रायाः मातुरमुकीदेव्या नान्दीमुख्याः कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे । एवं पितामहीप्रपितामह्योः। ततः ओं अद्यामुकगोत्रस्य पितुरमुकशर्मणो नान्दीमुखस्य कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे । एवं पितामहादिपञ्चनाम् । ततो देवताभ्यः०' इति त्रिर्जपित्वा दीपनिर्वापणम् । ततो हस्तौ पादौ प्रक्षाल्याचम्य—ओं प्रामादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्ण स्यादिति श्रुतिः ॥ ओं विष्णु—र्विष्णुर्हरिर्हरिः । इति पठित्वा श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत् ।

*॥ इति छन्दोगानामाभ्युदयिकश्राद्धविधिः समाप्तः ॥*

# अथ वाजसनेयिनां स्त्री-कुमारकर्तृक-एकोद्दिष्टविधिः

तत्र कृत्यनित्यक्रियो भूत्वा हस्तौ पादौ प्रक्षाल्य आचम्य पूर्वाभिमुखः-उपविश्य रक्षादीपं प्रज्वाल्य परकर्तृकपाकपक्षे सिद्धम् इति पाचिकां पृष्ट्वा पूर्वाभिमुखः—नमः अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा । यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः । इति कुशत्रयजलैः श्राद्धीयद्रव्याण्यात्मानञ्चाभिषिच्यकुशत्रयं पूर्वतस्त्यक्त्वाऽन्यकुशत्रयतिलजलान्यादाय—नमः अद्यामुके मास्यमुके पक्षे अमुकतिथौ अमुकगोत्रस्य पितुः[1] अमुकशर्मणः सांवत्सरिकै-

१. पत्युः श्राद्धे 'पितुः' स्थाने 'पत्युः' 'पितः' स्थाने 'पते' इत्यनेन सर्वत्र ऊह्यम् ।

कोद्दिष्टश्राद्धमहं करिष्ये, इति संकल्पं कुर्यात् । ततो कुशहस्तः, नमः देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव भवन्त्विति । इति त्रिर्जपेत् । ततो दक्षिणाभिमुखः पादितवामजानुर्मोटकादीन्यादाय–नमः अद्यामुकगोत्र पितरमुकशर्मन्निदमासनन्ते नमः इति पूर्वोपकल्पितमोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रं पितृतीर्थेनोत्सृजेत् । ततः भोजनपात्रे तिलान् विकीर्य्य अर्घकरणपुटके दक्षिणाग्रं पवित्रं धृत्वा पितृतीर्थेन जलतिलान् क्षिप्त्वा गन्धपुष्पे तूष्णीं क्षिपेत् । ततोऽर्घपात्रं वामहस्ते कृत्वा भोजनपात्रे उत्तराग्रं पवित्रं धृत्वा उदकान्तरेण सिक्त्वा मोटकतिलजलान्यादाय–ओमद्यामुकगोत्र पितः अमुकशर्मन्निदमर्घ्यं ते नमः इति पवित्रोपरि किञ्चिज्जलं दत्त्वा पवित्रमर्घपात्रे निधाय पित्रासनवामभागे नमः पित्रे स्थानमसि इति न्युब्जीकुर्यात् । तच्च दक्षिणादानपर्यन्तं न चालयेत् ।

ततो गन्धादिदानम् । मोटकतिलजलान्यादाय नमः अद्यामुकगोत्र पितर-मुकशर्मन्नेतानि गन्ध-पुष्प-धूप-दीप-ताम्बूल-यज्ञोपवीत-वासांसि ते नमः । इति गन्धादीनि दद्यात् । ततो जलेन भोजनपात्रासनयोश्चतुर्दिशं मण्डलं कृत्वा एकस्मिन् पुटके सव्यञ्जनतिलजलघृतमन्नं कृत्वा किञ्चिदग्रभागमुद्धृत्य मोटकादिना नमः इदमन्नमेतद्भूस्वामिपितृभ्यो नमः इति स्ववामभागे भूस्वामिनेऽन्नं दद्यात् । सिद्धमुष्णमन्नं रजतादिपात्रस्थं कराभ्यामादाय पितरं ध्यायन् भोजनपात्रे पुरुषाहारक्षमं परिविष्य व्यस्तपाणिभ्यामधोमुखं पात्रमालभ्य–नमः कृष्णकव्यमिदं रक्ष मदीयम् इति पठित्वा वामेन पाणिना पात्रमत्यजन्नेव नमः इदमन्नम्, इमा आपः, इदमाज्यम्, इदं हविः, इत्यन्ने जले घृते पुनरन्ने च दक्षिणहस्ताङ्गुष्ठन्निवेश्य अन्नोपरि तिलान् विकीर्य्य मोटकायीन्यादाय, नमः अद्यामुकगोत्र पितरमुकशर्मन्निदमन्नं सोपकरणं ते नमः इत्युत्सृजेत् । ततो वामहस्तमप्युद्धृत्य । नमः अन्नहीनं क्रियाहीनं विधिहीनञ्च यद्भवेत् । तत्सर्वमच्छिद्रमस्तु । इति पठित्वा भूमौ तिलान् विकीर्य्य 'नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्काराय च। नमः शिवाय च शिवतराय च। नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ।। सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ। चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ।। तेऽपि जाताः कुरु क्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ ।। इतिपठित्वा पिण्डिकापश्चिमदिशि कुशत्रयं धृत्वा जलेन सिक्त्वा एकस्मिन् पुटके तिलघृतमन्नं जलं मधु च कृत्वा मोटकेन कुशोपर्यन्नं विकिरेत्–'नमः अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परांगतिम् ।।'

ततः हस्तमात्रचतुरंगुलोच्छ्रितदक्षिणप्लवनिर्मितपिण्डिकां सिक्त्वा दर्भपिञ्जलीं

गृहीत्वा तन्मूलेन पिण्डस्थाने प्रादेशमात्रां दक्षिणाग्रां रेखामुल्लिख्य दर्भपिञ्जलीमैशान्यां त्यजेत्। ततः रेखोपरि अङ्गारं भ्रामयित्वा दक्षिणस्यां क्षिपेत्। ततस्तत्रच्छिन्न-मूलकुशानास्तीर्य पूर्वाभिमुखः 'नमः देवताभ्यः' इति त्रिर्जपेत् । ततः एकस्मिन् पुटके तिलजलगन्धपुष्पाणि कृत्वा पुटके वामहस्ते कृत्वा मोटकतिलजलान्यादाय—'नमः अद्यामुकगोत्र पितः अमुकशर्मन्नत्रावनेनिक्ष्व ते नमः' इति च्छिन्नमूलोपर्यवनेजनं दद्यात्। किञ्चिज्जलं पुटकेऽवशेषयेत् । ततस्तिलजलघृतव्यञ्जनसहितान्नेन बिल्वमात्रं पिण्डं कृत्वा पुनर्मधुघृताभ्यामभिघार्य्य मोटकतिलजलान्यादाय 'नमः अद्यामुकगोत्र पितरमुकर्शन्नेष पिण्डस्ते नमः' इति च्छिन्नमूलकुशोपरि पिण्डं दद्यात्। ततः पिण्डाधारकुशमूले करं प्रोञ्छ्य पूर्वाभिमुखः द्विराचम्य हरिं स्मृत्वा उत्तराभिमुखः श्वासं धृत्वा पश्चिमाभिमुखो वामावर्तेन श्वासं त्यजेत्। ततोऽवनेजनावशिष्टजलसहितं पुटकमादाय मोटकादीनि चादाय 'नमः अद्यामुकगोत्र पितरमुकशर्मन्नत्र प्रत्यवने निक्ष्व ते नमः इति पिण्डोपरि प्रत्यवनेजनं दद्यात्। ततो नीवीं विसंस्य पूर्वाभिमुख आचम्य दक्षिणाभिमुखः वामेन पाणिना सूत्रमादाय दक्षिणेन धृत्वा 'नमः एतत्ते पितर्वासः' इति मन्त्रेण पिण्डोपरि सूत्रं दद्यात्। ततो मोटकतिलजलान्यादाय—नमः अद्यामुकगोत्र पितरमुकशर्मन्नेतद्वासस्ते नमः इति सूत्रमुत्सृजेत्। ततः पितरमुद्दिश्य पिण्डे गन्धपुष्पताम्बूलादीनि तूष्णीं दद्यात्। पिण्डशेषन्नं पिण्डसमीपे विकिरेत्। ततो भोजनपात्रे, नमः शिवा आपः सन्तु इति जलम्, नमः सौमनस्यमस्तु इति पुष्पम् नमः अक्षतञ्चारिष्टमस्तु इत्यक्षतञ्च दद्यात्। ततो पुटके जलं कृत्वा मोटकादीन्यादाय—नमः अद्यामुकगोत्रस्य पितुरमुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमु-पतिष्ठताम् इति पिण्डोपरि दद्यात्। ततः पूर्वाभिमुखः दक्षिणां दिशं पश्यन् नमः अघोरः पिताऽस्तु ( पतिरस्तु ) इति पूर्वाग्रां वारिधारां पिण्डोपरि दद्यात्। ततः पूर्वाभिमुखः कृताञ्जलिः—

नमः गोत्रन्नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद्। बहुदेयञ्च नोअस्तु। अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु। मा च याचिष्म कञ्चन। एताः सत्याशिषः सन्तु। इति पठेत्।

ततो दक्षिणाभिमुखः सपवित्रकरेण पिण्डस्थसूत्रादिकपनीय दक्षिणाग्रं सपवित्रं पिण्डोपरि निधाय तदुपरि तूष्णीं दक्षिणाग्रां वारिधारां दद्यात्। ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत्। छिन्नमूलाङ्गारौ च वह्नौ क्षिपेत् । ततोऽर्धपात्रमुत्तानीकृत्य दक्षिणाभिमुखः दक्षिाणां दद्यात्। नमः अद्यामुकगोत्रस्य पितुः अमुकशर्मणः कृतैतत् सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थम् एतावद् द्रव्यमूल्यक-रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । ततः पूर्वाभिमुखः—नमः देवताभ्यः० इति त्रिर्जपेत्। ततः हस्ताभ्यां दीपं निर्वाप्य (आच्छाद्य) पूर्वाभिमुखः हस्तौ पादौ

प्रक्षाल्य, त्रिः आचम्य विष्णुं ध्यायेत्–नमः प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।। नमः विष्णु–र्विष्णु–र्हरि–र्हरिः। ततः श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत्। पिण्डकां छित्वा सूर्यं प्रणमेत्।

*।। इति वाजसनेयिनां स्त्री–कुमारकर्तृक–एकोद्दिष्टविधिः ।।*

# अथ छन्दोगानां स्त्री–कुमारकर्तृक–एकोद्दिष्टविधिः

तत्र कृतनित्यक्रियो भूत्वा परकृतपाकपक्षे सिद्धम् इति पृच्छेत्। ततः पूर्वाभिमुखः नमः अपवित्रः पवित्रो वा सर्व्वावसस्थाङ्गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः, पुण्डरीकाक्षः पुनातु इति श्राद्धीय–द्रव्याण्यात्मानञ्चाभिषिञ्चेत्। ततः कुशत्रयं पूर्वतस्त्यक्त्वा अन्यकुशत्रयतिलजलान्यादाय नमः अद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्रस्य पितुः[1] अमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये । इति सङ्कल्प्य कुशहस्तः नमः देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वधायै स्वाहायै नित्यमेव भवन्त्विति। इति त्रिर्जपेत्। ततो दक्षिणाभिमुखो भूत्वा मोटकतिलजलान्यादाय पातितवामजानुः–नमः अद्यामुकगोत्र–पितः अमुकशर्मन्निदमासनं[2] ते नमः। इत्यासनमुत्सृजेत्। ततः पितृभोजनपात्रे तिलान् विकीर्य पुटके दक्षिणाग्रं पवित्रं धृत्वा पितृतीर्थेन जलं तिलान् गन्धपुष्पे च दत्त्वा अर्घपात्रं वामहस्ते कृत्वा पवित्रमुत्तराग्रं भोजनपात्रे धृत्वा जलान्तरेण सिक्त्वा मोटकतिलजलान्यादाय नमः पित्रे स्थानमसि इति पित्रासनवामभागे न्युब्जीकुर्यात्। तच्च दक्षिणादानपर्यन्तं न चालयेत्। ततो गन्धादिदानम्। मोटकतिलजलान्यादाय नमः अद्यामुकगोत्र पितरमुकशर्मन्नेतानि गन्धपुष्प–धूपदीपताम्बूलयज्ञोपवीतवासांसि ते नमः। इति गन्धादि दत्त्वा पितृपात्रे जलेन मण्डलं कृत्वा एकस्मिन् पुटके सव्यञ्जनमन्नं कृत्वा घृततिलमधूनि दत्त्वा मोटकतिलजलान्यादाय नमः इति भूस्वामिने अन्नं दद्यात्। ततः सिद्धमुष्णमन्नं रजतादिपात्रस्थं कराभ्यामादाय भास्वरमूर्त्तिं पितरं ध्यायन् पितृपात्रं पितृतीर्थेन पुरुषतृप्तिक्षमं परिविष्य तत्पार्श्वे घृतं पानीयं व्यञ्जनानि च पृथक्–पृथक् पात्रस्थानि स्थापयेत्। ततोऽन्नसंमार्जनं कृत्वा तदुपरि घृत–तिलमधूनि कृत्वा एकस्मिन् पुटके जलं कृत्वा पिण्डिकोपरि धृत्वा कुशत्रयहस्त एव व्यस्तानुत्तानपाणिभ्यां

---

१. पत्युः श्राद्धे पितुः स्थाने 'पत्युः' पितः स्थाने 'पते' पिता स्थाने पतिः इत्यूहमः ।

२. छन्दोगपरिशिष्टे–प्रेतश्राद्धे स्त्रियाः श्राद्धे श्राद्धे स्त्रीकर्तृके तथा । सपिण्डानां तथा श्राद्धे 'ये चात्र त्वा' न योजयेत् ।। इति न विस्मर्तव्यम् । (स्त्रीकर्तृके इत्यत्र कुमारकर्तृकेऽपि ज्ञेयमिति तत्त्वविदः।)

पात्रमालभ्य नमः कृष्णकव्यमिदं रक्ष मदीयम् इति पठित्वा वामेन पाणिना पात्रमत्यजन्नेव दक्षिणेन नमः इदमन्नम् इत्यन्ने, इमा आपः, इति जले, इदं हविः इति पुनरन्ने अंगुष्ठं संयोज्य मोटकतिलजलान्यादाय वामेन पाणिना पात्रमत्यजन्नेव नमः अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे इदमन्नं सोपकरणं ते नमः इत्यन्नमुत्सृज्य वामहस्तमप्युद्धृत्य नमः अन्नहीनं क्रियाहीनं विधिहीनञ्च यद् भवेत् तत्सर्वमच्छिद्रमस्तु इति पठेत्। ततो भूमौ तिलान् विकीर्य नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च, मयस्कराय च नमः शिवाय च शिवतराय च नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः। नमः सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ। चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे। तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ। नमस्येऽहं पितृन् स्वर्गे ये वसन्त्यधिदेवताः। देवैरपि हि तृप्यन्तु ये च श्राद्धैः स्वधोत्तरैः । ततः पिण्डिकापश्चिमदिशि कुशत्रयं त्वा सिक्त्वा पुटके तिलघृतमधुसहितमन्नं जलेनाप्लावितं कृत्वा नमः अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम् इति मोटकेन कुशोपरि दद्यात्। ततः आचम्य हरिं स्मृत्वा पिण्डपातनार्थनिमित्तपिण्डिकां सिक्त्वा मोटकेन तदुपरि प्रादेशमितां दक्षिणाग्रां रेखामुल्लिख्य नवच्छिन्नमूलकुशास्तरणं, तत्सेकश्च। ततः पूर्वाभिमुखः देवताभ्यः त्रिर्जपेत्।

ततः पुटके जलतिलगन्धपुष्पाणि कृत्वा पुटकं वामहस्तेनादाय दक्षिणेन मोटकादीन्यादाय नमः अद्यामुकगोत्र पितः अमुकशर्मन् अत्रावनेनिक्ष्व ते नमः । इति पितृ तीर्थेन छिन्नमूलकुशोपर्यवनेजनं दद्यात्। अत्र जलस्पर्शः ततस्तिल-घृतमधुसहितं बिल्वप्रमाणपिण्डं निर्माय दक्षिणहस्तेनादाय वामहस्ते धृत्वा दक्षिणेन मोटकादीन्यादाय नमः अद्यामुकगोत्र पितरमुकशर्मन्नेष पिण्डस्ते नमः। इति छिन्नमूलकुशोपरि पितृतीर्थेन पिण्डं दत्त्वा जलं स्पृशेत्। ततः पिण्डाधारकुशमूले करं प्रोञ्छय आचम्य हरिं स्मरेत्। ततः पिण्डपात्रप्रक्षालनजलं पुटके निधाय वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय नमः अद्यामुकगोत्र पितरमुकशर्मन्नत्र प्रत्यवनेनिक्ष्व ते नमः। इति पिण्डस्योपरि प्रत्यनेजनं दत्त्वा जलस्पर्शः। ततः उत्तराभिमुखः वामहस्तेन श्वासं धृत्वा पश्चिमाभिमुखः श्वासं त्यजेत्, ततो दक्षिणहस्तेन नीवीं विस्रंस्य पूर्वाभिमुख सव्येन करौ प्रक्षाल्य विष्णुं स्मरेत्। ततो दक्षिणाभिमुखः वामेण पाणिना सूत्रमादाय दक्षिणेन धृत्वा नमः एतत्ते पितर्वासः इति पिण्डोपरि सूत्रं दत्त्वा मोटकतिलजलान्यादाय–नमः अद्यामुकगोत्र पितरमुकशर्मन्नेतद्वासस्ते नमः। इत्युत्सृज्य जलस्पर्शः। ततः पुष्पाण्यादाय 'नमः वसन्ताय नमस्तुभ्यं नमस्ते शिशिराय च। माससंवत्सरेभ्यश्च दिवसेभ्यो नमः

सदा ।। वसन्तादिषड्ऋतुभ्यो नमः।' इति पठेत् । ततोऽन्नपात्रोपरि 'नमः शिवा आपः सन्तु' इति जलम् 'सौमनस्यमस्तु' इति पुष्पम् 'अक्षतञ्चारिष्टमस्तु' इत्यक्षतञ्च दद्यात् । ततः पुटके जलन्निधाय मोटकतिल-जलान्यादाय 'नमः अद्यामुकगोत्रस्य पितुरमुकशर्मणो दत्तैतदन्नपानादिकमुपतिष्ठताम्' इति जलं पिण्डोपरि दद्यात्। ततः 'नमः अघोरः पिताऽस्तु' इति पिण्डोपरि पूर्वाग्रां वारिधारां दद्यात्। ततः पूर्वाभिमुख 'नमः गोत्रन्नो वर्द्धताम्' इति पठेत्। ततः सपवित्रकुशत्रयेण सूत्रादिकं पिण्डादपनीय पिण्डोपरि सपवित्रं कुशत्रयं धृत्वा पुटके सघृतं जलं निधाय सपवित्रपिण्डोपरि दक्षिणाग्रां वारिधारां दद्यात्। ततो नम्रीभूय पिण्डमाघ्रायोत्थाप्य पिण्डाधारकुशान् वह्नौ क्षिपेत्। ततोऽर्घपात्रमुत्तानीकृत्य मोटकतिलजलान्यादाय नमः अद्यामुकगोत्रस्य पितुः अमुकशर्मणः कृतैतत्साँव्वत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकरजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे। इति दक्षिणां दद्यात्। ततः नमः दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च। श्राद्धो च नो मा व्यगमद् बहुदेयञ्च नोअस्तु। अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कञ्चन। एताः सत्याशिषस्सन्तु। ततः नमः देवताभ्यः इति त्रिर्जपेत्। ततः दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य नमः प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः।। विष्णुर्विष्णुर्हरिर्हरिः। ततः श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेदम्भसि वा क्षिपेत् । ततः पिण्डिकां छित्त्वा सूर्यं प्रणमेत्।

*।। इति छन्दोगानां स्त्री-कुमारकर्तृकैकोद्दिष्टविधिः ।।*

# अथ रुचिस्तवः

ब्रह्मा चाह रुचिं विप्रं श्रुत्वा तस्याभिवाञ्छितम्।[१] प्रजापतिस्त्वं भवता स्रष्टव्या भवता प्रजाः।। सृष्ट्वा प्रजाः सुतान् विप्र समुत्पाद्य क्रियास्तथा। कृताकृताधिकारस्त्वं ततः सिद्धिमवाप्स्यसि।। स त्वं यथोक्तं पितृभिः कुरु दारोपसंग्रहम्। कामं चेममनुध्याय कुरु तत् पितृपूजनम्।। एवं च तुष्टाः पितरः प्रदास्यन्ति तवेप्सितम्। पत्नीं सुतांश्च सन्तुष्टाः किं न दद्युः पितामहाः।।

**मार्कण्डेय उवाच**—इत्यृषेर्वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मः। नद्या विविक्ते पुलिने चकार पितृतर्पणम् ।। तुष्टाव च पितृन् विप्रस्तवैरेभिरथाऽऽदृतः। एकाग्रप्रयतो भूत्वा भक्तिनम्रात्मको रुचिः ।। नमस्येऽहं पितन् भक्त्या ये वसन्त्यधिदेवताः। देवैरपि हि तर्प्यन्ति ये श्राद्धेषु स्वधोत्तरैः ।। नमस्येऽहं पितृन्स्वर्गे ये तर्प्यन्ते महर्षिभिः । श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ।। नमस्येऽहं पितॄन् स्वर्ग्यान् ते च सन्तर्पयन्ति तान्। श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ।। नमस्येऽहं पितृन्

१. श्राद्धे रुचिस्तवपाठः प्रशस्तः ।

मर्त्यैरर्च्यन्ते भुवि ये सदा। धन्यैः श्राद्धैस्तथाहारैस्तपोर्धूतकिल्विषैः ।। नमस्येऽहं पितॄन् विप्रैर्नैष्ठिकव्रतचारिभिः । ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते समाधिभिः ।। नमस्येऽहं पितॄत् विप्रैर्नैष्ठिकव्रतचारिभिः । नमस्येऽद्यं पितॄन् श्राद्धे राजन्यास्तर्पयन्तियान्। कल्पैरशेषैर्विधिवत् लोकद्वयफलप्रदान् ।। नमस्येऽहं पितॄन् वैश्यैरर्च्यन्ते भुवि ये सदा। स्वकर्मनिरतैर्नित्यं पुष्पधूपान्नवारिभिः ।। नमस्येऽहं पितॄन् श्राद्धं ये शूद्रैरपि भक्तितः । सन्तर्प्यन्ते जगत्यत्र नाम्नाख्याताः सुकालिनः ।। नमस्येऽहं पितॄन् श्राद्धे पाताले ये महासुरैः। सन्तर्प्यन्ते सदाहारस्तबादम्भमदैः सदा ।। नमस्येऽहं पितन् श्राद्धे आर्च्यन्ते ये रसातले। भोगैरशेषैर्विविधैर्नागैः कामानभीप्सुभिः ।। नमस्येऽहं पितॄन् श्राद्धे सर्पैः सन्तर्पिताःसदा। स्तुत्वैवं विविधैर्मन्त्रैर्भोगसम्पत्समन्वितैः ।। पितॄन् नमस्ये निवसन्ति साक्षात् ये देवलोकेषु महीतले वा। तथान्तरिक्षे च सुरादिपूज्यास्ते सम्प्रतीच्छन्तु मयोपनीतम्। पितॄन् नमस्ये परमाणुभूता ये वै विमानेषु वसन्त्यमूर्ताः। यजन्ति यानस्तमलामनोभिर्योगीश्वराः क्लेशविमुक्तिहेतोः ।। पिंतॄन् नमस्ये दिवि ये च मूर्ताः स्वधाभुजः काम्यप-लाभिसन्धौ। प्रदानशक्ताःसकलेप्सितानां विमुक्तिदा येऽनभसंहितेषु ।। तृप्यन्तु तस्मिन् पितरः समस्ता इच्छावतां ये प्रदिशन्ति कामान्। सुरत्वमिन्द्रत्वमनोधिकत्वं वस्वात्मजान् नामबलंगृहाणि ।। सूर्यस्य ये रश्मिषु चन्द्रबिम्बे शुक्ले विमाने च सदा वसन्ति। तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैः ।। ये खड्गमांसेन सुरैरभीष्टैः कृष्णैस्तिलैर्दैत्यमहोरगैश्च। कालेन शाकेन महर्षिवर्यैः सम्प्रीणितास्तेमुदमत्र यान्तु ।। कव्यान्यशेषाणि च यान्यभीष्टान्यतीव तेषाममरार्चितानाम्। तेषां तु सान्निध्यमिहास्तु पुष्पगन्धाम्बुभोज्येषु मयाऽऽततेषु।। दिने दिने ये प्रतिगृह्णतेऽलं मांसानुभोज्यं भुवि येऽष्टकासु। ये वत्सरान्तेऽभ्युदयेषु पूज्याः प्रयान्तु ते मे पितरोऽद्य तृप्तिम् ।। पूज्या द्विजानां कुमुदेन्दुभासो ये क्षत्रियाणां च नावार्कवर्णाः। तथा विशां येह्यनलावभासा नीलीनिभाः शूद्रजनस्य ये च ।। तस्मिन्समस्ता मम पुष्पगन्धधूपान्नतोयादिनिवेदितेन। तथाग्निहोमेन च यान्तु तृप्तिं सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः।। ये देवपूर्वाणयपि तृप्तिहेतोरश्नन्ति कव्यानि शुभाहृतानि। तृप्तास्तु ये भूतिसृजो भवन्ति तृप्यन्तुतेऽस्मिन् प्रणतोऽस्मि तेभ्यम्।। रक्षांसि भूतान्यसुरास्तथेमान् निःसारयन्तस्त्वशिवं प्रजानाम्। आद्याः सुराणाममरैश्च पूज्याः तृप्यन्तु तेऽत्र प्रणतोऽस्मि तेभ्यः ।। अग्निष्वात्ताः वर्हिषद आज्यपाः सोमपास्तथा। व्रजन्तु तृप्तिं श्राद्धेऽस्मिन् पितरस्तर्पिता मया।। अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् । तथा वर्हिषदः पान्तु याम्यां ये पितरस्तथा ।। प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । रक्षोभूतपिशाचेभ्यः तथैवासुरदोषतः। अघ श्चाधिपस्तेषां यमो रक्षां करोतु मे। विश्वो विश्वभुगाराध्यो धन्यो धर्मः सनातनः ।। भूतिदो भूतिकद् भूतिः पितॄणां ये गणा नव । कल्याणं कल्यतां कर्ता

कल्पः कल्यतराश्रयः ।। कल्यतां हेतुरनष पिडप्येते गणाः स्मृताः । वरो वेरेभ्यो वरदः तुष्टिदः पुष्टिदस्तथा ।। विश्वपाता तथा धाता। सप्त चैते तथा गणाः । महामहा महातेजा मतिमाँश्च फलप्रदः ।। गणापश्च तथैवैते पितृणां पापनाशनाः । सुखदो धनदश्चान्यो धर्मदोऽन्यश्च भूतिदः ।। पितृणां कथ्यते चैव तथा गणचतुष्टयम् । एकत्रिंशत् पितृगणा यैर्व्याप्तमखिलं जगत् ।। ते मेऽत्र तुष्टाः तुष्यन्तु यच्छन्तु च सदा हितम्।

**मार्कण्डेय उवाच**–एवं च स्तुवतस्तस्य तेजसां राशिरुत्थितः। प्रादुर्बभूव सहसा गगनव्याप्तिकारकः ।। तं दृष्ट्वा सुमहत्तेजः समाच्छाद्य स्थितं जगत् । जानुभ्यामवनीं गत्वा रुचिस्तोत्रमिदं जगौ । मूर्त्तिभाजाममूर्तीनां पितृणाममितौजसाम्। नमस्यामि सदा तेषां ध्यायिनां दिव्यचक्षुषाम् ।। इन्द्रादीनां च नेतारो दक्षमारीचयोस्तथा । सप्तर्षीणां तथान्येषां चाश्रमस्याभिकामदान् ।। मन्वादीनां च नेतँश्च सूर्याचन्द्रमसोस्तथा। तान्नमस्याम्यहं सर्वान् पितरश्चार्णवेषु च ।। नक्षत्राणां ग्रहाणां च वाय्वग्निमसां तथा। द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ।। देवर्षीणां च नेतृंश्चसर्वदेवनमस्कृतान्। अभयस्य सदा दातन् नमस्येऽहं कृताञ्जलिः ।। प्रजापतेः कश्यपाय सोमाय वरुणाय च। योगेश्वरेभ्यश्च तथा नमस्यामि कृताञ्जलिः ।। नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु। स्वयम्भुवे नमस्यामि ब्रह्मणे योगचक्षुषे ।। यदाधाराः पितृगणा योगमूर्तिधरा हि ते। नमस्यामि ततः सोमं पितरं जगतामहम् । अग्नीषोममयं विश्वं यत एतदशेषतः। ये तु तेजोमयाश्चैते सोमसूर्याग्निमूर्तयः। जगत्स्वरूपिणश्चैव तथा ब्रह्मस्वरूपिणः ।। तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यतमानसः। नमो नमो नमस्ते मे प्रसीदन्तु स्वधाभुजः ।।

**मार्कण्डेय उवाच**–एवं स्तुता ततस्तेन तेजसो मुनिसत्तम । निश्चक्रमुस्ते पितरो भासयन्तो दिशो दश ।। निवेदितं च यत्तेन गन्धमाल्यानुलेपनम् । तद्भूषितानथ स तान् ददृशे पुरतः स्थितान् ।। प्रणिपत्य पुनर्भक्त्या पुरनेव कृताञ्जलिः । नमस्तुभ्यं नमस्तुभ्यमित्याह पृथगादृतः ।। ततः प्रसन्नाः पितरस्तमूचुर्मुनिसत्तम । वरं वृणीध्वेति स तानुवाचानतकन्धरः ।। साम्प्रतं सर्गकर्तृत्वमादिष्टं ब्रह्मणा मम। सोऽहं पत्नीमभीप्सामि धन्यां दिव्यां प्रजावतीम् ।।

**पितर ऊचुः**–अद्यैव सद्यः पत्नी ते भविष्यति मनोरमा । तस्यां च पुत्री भविता रुचिरा मुनिसत्तम ।। मन्वन्तराधिपो धीमांस्त्वन्नाम्नैवोपलक्षितः । रुचे रौच्य इति ख्यातिं प्रयास्यिति जगत्त्रये ।। तस्यापि बहवः पुत्रा भविष्यन्ति महात्मनः। महाबला महावीर्याः पृथिवीपरिपालकाः। त्वं च प्रजापतिर्भूत्वा प्रजाः सृष्ट्वा वतुर्विधाः। क्षोणाधिकारो धर्मज्ञः ततः सिद्धिमवाप्स्यति ।। स्तोत्रेणानेन हि रुचे

योऽस्मांस्तोष्यति भक्तितः । तस्य तुष्टा वयं भोगान् दास्यामो ज्ञानमुत्तमम् । शरीरारोग्यमैश्वर्यं पुत्रपौत्रादिकं तथा। वाञ्छद्भिः सततं स्वव्याः स्तोत्रेणानेन यत्नतः । श्राद्धे च य इमं भक्त्या अस्मत्प्रीतिकरस्तबम्। पठिष्यति द्विजाग्र्याणां भुञ्जतां पुरतः स्थितः ।। स्तोत्रश्रवणसम्प्रीत्या सन्निधाने परे कृते। अस्माकमक्षयं श्राद्धं तद्भविष्यत्यसंशयः ।। यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् । अन्यायोपात्तवित्तेन यदि वा कृतमन्यथा ।। अश्राद्धार्हैरुपहतैरुपहारैस्तथा कृतम् । अकालेऽप्यथवादेशे विधिहीनमथापि वा ।। अश्रद्दधानैः पुरुषैर्दम्भमाश्रित्य यत् कृतम् । अस्माकं जायते तृप्तिस्तथाप्येतदुदीरणात् । यत्रैतत्पठ्यते श्राद्धे स्तोत्रमस्मत्सुखावहम् । अस्माकं जायते तृप्तिस्तत्र द्वादश-वार्षिकी ।। हेमन्ते द्वादशाब्दानि तृप्तिमेतत् प्रयच्छति। शिशिरे द्विगुणाब्दानि तृप्तिं स्तोत्रमिदं श्रुतम् ।। वसन्ते षोडशसमास्तृप्तये श्राद्धकर्मणि। ग्रीष्मे च षोडशैवैतत् पठितं तृप्तिकारकम् ।। विकलेऽपि कृते श्राद्धे स्तोत्रेणानेन शोधिते । वर्षासु तृप्तिरस्माकमक्षया जायते रुचे ! ।. शरत्कालेऽपि पठितं श्राद्धकाले प्रयच्छति। अस्माकमेतत् पुरुषैस्तृप्तिः पञ्चदशाब्दिकी ।। यस्मिन् गृहेऽपि लिखितं एतत्तिष्ठति नित्यदा। सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति । तस्मादेतत्त्वया श्राद्धे विप्राणां भुञ्जतां पुरः । श्रावणीयं महाभाग ! अस्माकं प्रीतिहेतुकम् ।।

*।। इति मार्कण्डेयपुराणे रुचिस्तवः समाप्तः ।।*

# पुरुष सूक्त

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सभूमिꣳ सर्व्वतस्पृत्वाऽत्य-तिष्ठद्दशाङ्गुलम ।।१।। पुरुष एवेदꣳ सर्व्वं यद् भूतं यच्च भाव्यम् उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।२।। एतावानस्य महिमातो ज्यायाँश्च पूरुषः । पादोऽस्य व्विश्वा भूतानि त्रिपादस्यामृतं दिवि ।।३।। त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो व्विष्वङ्व्यक्रामत्साशनानशने अभि ।।४।। ततो व्विराडजायत व्विराजो अधिपूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथोपुरः ।।५।। तस्माद् यज्ञात्सर्व्वहुतः सम्भृतं पृषदाज्यम् पशूँस्तांश्चक्रे व्वायव्या नारण्या ग्राम्याश्च ये ।।६।। तस्माद् यज्ञात्सर्व्वहूत ऋचः सामानि यज्ञिरे । छन्दाꣳसि यज्ञिरे तस्माद् यजुस्तस्मादजायत ।।७।। तस्मादश्वा अजायन्त ये के चोभचादतः गावोह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ।।८।। तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः। तेन देवा अजयन्त साध्या ऋषयश्च ये ।।९।। यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्यासीत् किम्बाहू किमूरू पादा उच्येते ।।१०।। ब्राह्मणोऽस्य मुखमासीद बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्या ꣳ शूद्रो

अजायत ॥११॥ चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१२॥ नाभ्भ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथालोकाँ अकल्पयन् ॥१३॥ यत्पुरुषेण हविषा देवा यज्ञमंतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥१४॥ साप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञन्तन्वाना अबध्नन् पुरुषं पशुम् ॥१५॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ॐ ॥१६॥ इति पुरुषसूक्तम्ः।

# अथ मुमूर्षुकृत्यम्

## तत्र वैतरणीदाने कृष्णगवीदानम्

तत्र क्रमः प्राङ्मुख उपविष्टः शुचिराचान्तः कुशत्रयतिलजलान्यादायः–'ॐ कृष्णगव्यै'[१] नमः ॥३॥ ॐ ब्राह्मणाय नमः ॥३॥ इति गो-विप्रौ त्रिः सम्पूज्य–'ॐ इमां कृष्णां गां ददानि' इति द्विजकरे जलदानम्। 'ॐ ददस्व' इति तेनोक्ते गामभिषिच्य मन्त्रद्वयं पठेत्–

ॐ उष्णे वर्षति शीते वा मारुते वाति वा भृशम्। दातारं त्रायते यस्मात् तस्माद् वैतरणी स्मृता ॥१॥ यमद्वारे महाघोरे कृष्णा वैतरणी नदी। तां सन्तर्तुं ददाम्येनां कृष्णां वैतरणीं च गाम् ॥२॥

इति पठित्वा कुशत्रयतिलजलान्यादाय–ॐ अद्य अमुके मासि अमुके पक्षे अमुकतिथौ अमुकगोत्रस्य पितु अमुकशर्मणः यमद्वारस्थित-वैतरणीनदी-सुखसन्तरण-काम इमाँकृष्णगवीं रुद्रदैवतां अमुकगोत्राय ब्राह्मणाय दातुमहमुत्सृज्ये।

इति दद्यात् । ततो दक्षिणा 'ॐ तत् सत्' इति सिक्त्वा कुशत्रयतिलजलान्यादाय–ॐ अद्य कृतैतत् कृष्णगवीदानप्रतिष्ठार्थम् एतावद् द्रव्यमूल्यकहिरण्यमग्निदैवतम् यथानामगोत्राय[२] ब्राह्मणाय दक्षिणां दातुमहमुत्सृज्ये।

ततः ब्राह्मणसत्त्वे प्रतिगृहीता–'ॐ स्वस्ति' इत्युक्त्वा गोपुच्छं गृह्णन् यथाशाखं कामस्तुतिं पठेत्। तत्र यजुर्वेदी–ॐ को दात् कस्मा अदात् कामो दात् कामायादात्। कामो दाता कामः प्रतिगृहीता कामेत्तते॥

---

१. सवत्सगवीसत्व–'ओं सवत्सकृष्णगव्यै नमः' इत्यूह्यम्।

२. ब्राह्मणसत्वे तु–'अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' इति-दान-दक्षिणयोर्वाक्ये ऊह्यम्।

सामनेदी तु–ॐ क इदं कस्मा अदात् कामाय। कामो दाता कामः प्रतिगृहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते।। इति पठेत् ।।

## अथ वैतरणीदाने गोमूल्यदानम्

प्राङ्मुख उपविष्टः शुचिराचान्तः कुशत्रयपुष्पाक्षतैः गामूल्यदेयद्रव्योपरि–'ओं एतावद्द्रव्यमूल्यकसवत्सकृष्णगव्यै नमः ।।३।। कुशोपरि–'ॐ ब्राह्मणाय नमः ।।३।। इति त्रिः सम्पूज्य जलेन सिक्त्वा–'ॐ उष्णे वर्षति शीते वा०' इति पूर्वोक्तं मन्त्रद्वयं पठित्वा कुशत्रयतिलजलान्यादाय–

ॐ अद्य अमुके मासि अमुके पक्षे अमुकतिथौ अमुकगोत्रस्य पितुः अमुकशर्मणः यमद्वारावस्थितवैतरणीनदीसुखसन्तरणकाम एतावद्द्रव्यमूल्यकसवत्सकृष्णगवीं रुद्रदैवतां यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृज्ये। इत्युत्सृज्य दक्षिणां[१] दद्यात्। कुशत्रयतिलजलान्यादाय–ॐ अद्य कृतैतत् सवत्सकृष्णगवीदानप्रतिष्ठार्थम् एतावद् द्रव्यमूल्यकहिरण्यमग्निदेवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृज्ये।

## अव मुमूर्षोः भूमियोगविधिः

अथ मुमूर्षुः गोपीचन्दनलिप्ताङ्गो नवयज्ञोपवीत-वस्त्रमाल्यादिभिः अलङ्कृतो मुखनिःक्षिप्तकांस्यमणि-प्रवाल-हिरण्यशकलः तुलसीवृक्षनिकटे[२] कुशास्तृतभूमौ दक्षिणशिराः (व्यवहाराद् उत्तरशिराः) पुरुषसूक्तादिकम् उच्चैः श्रावयितव्यः। तत्र तुलसीशालग्रामसन्निधानम्। ततो धनञ्जय (प्राण) निःसरणपर्यन्तं दण्डद्वय[३] वाससाच्छन्नः शाययितव्यः। द्विजशवं शूद्रो न स्पृशेत्[४]। ततः शवं वनं नयेत्[५]।

---

१. गोमूल्यदानपक्षे दक्षिणादानोत्तरमत्र 'कोऽदादिति' कामस्तुतिर्न कर्तव्या। (सवत्सगोमूल्यं रजत रु० २ पै० ५०, तदधिकं वा)।

२. व्यासः–तुलसीनिकटे जन्तोर्यदि मृत्युर्भवेत् क्वचित्। स निर्भर्त्स्य यमं पापो लीलयैव हरिं विशेत् ।। प्रयाणकाले यस्यास्ये दीयते तुलसीदलम्। निर्वाणं याति पक्षीन्द्र पापकोटियुतोऽपि सः।।

३. अत एव वैशखण्डद्वयनिर्मितमञ्च–(ठठरी) उपरि वाससाच्छन्नं शवं नयन्ति जनाः।

४. शूद्रशवं ब्राह्मणोऽपि न स्पृशेत्। तथाहि–पञ्चत्वं तु गते शूद्रे यः काष्ठं नयते चिताम्। अनुव्रजेत् तथा विप्रस्त्रिरात्रमशुचिर्भवेत्। त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्। प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ।। इति ग०।

५. नारदः–शवस्तु नीयमानस्तु भूमौ निपतते यदि। कुटुम्बमरणं तत्र धनधान्यपरिक्षयः ।। तत्र रुद्रेति मन्त्रेण जुहुयात् सर्पिषाहुतिम्। आहुतिर्द्वे सहस्रे च होमश्च कथितो भवेत् । वृषभं दक्षिणां दद्यात् ततः सम्पद्यते शुभम्।

मयूरचित्रे–मृतः श्मशानं नीतो यः प्रत्युज्जीवति मानवः। स्वस्थो वा भवति क्षिप्रं पुनरायाति मन्दिरम्। स देशः क्षीयते क्षिप्रं परचक्रेण हन्यते। यमदृष्ट्या ततः शान्तिः सक्षाराः समिधः शतम्। घृताक्ता जुहुयाद् विप्रो हुताग्नौ भूरिदक्षिणाम् ।।

## अथ दाहसंस्कारविधिः

शुचिः स्नातः कर्ता शुचिवस्त्रादिधरः कुशहस्तः पूर्वाऽभिमुख उपविष्टः नूतनमृन्मयभाण्डे जलं कृत्वा शवं दक्षिणशिरसं कृत्वा–

ॐ गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः। कुरुक्षेत्रं च गङ्गां च यमुनां च सरिद्वराम् ॥

कौशिकीं चन्द्रभागां च सर्वपापप्रणाशिनीम्। भद्रावकाशां सरयूं गण्डकीं तमसां तथा ॥

धैनवं च वराहं च तीर्थं पिण्डारकं तथा। पृथिव्यां यानि तीर्थानि चतुरः सागराँस्थिता ॥

एतानि तीर्थानि मनसा ध्यायन् जले आवाह्य तेन जलेन शवं संस्नाप्य नूतनवस्त्र-यज्ञोपवीतपुष्प-चन्दनैः अलंकृत्य दारुमयरचितचितायाम् आस्तृतकुशोपरि उत्तरशिरसम् अधोमुखं पुरुषं, स्त्रियं च उत्तानमुखीं शाययेत्। ततोऽपसव्यं कृत्वा दक्षिणाऽभिमुखः पाणिना उल्मुकं[१] गृहीत्वा–

ॐ कृत्वा सुदुष्करं कर्म जानता वाप्यजानता। मृत्युकालवशं प्राप्तं नरं पञ्चत्वमागतम् ॥१॥

धर्माधर्मसमायुक्तं लोभमोहसमावृतम्। दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु ॥२॥

इति मन्त्रद्वयं पठित्वा त्रिः प्रदक्षिणीकृत्य ज्वलदुल्मुकं शिरोदेशे दद्यात्। (स्त्रीदाहेऽपि मन्त्रश्चाऽयमविकृत एव पठनीयः।) ततः तृण-काष्ठ-घृतादिकं चितायां निःक्षिप्य कपोतावशेषं[२] दहेत्।

ततः प्रादेशमात्र-सप्तकाष्ठिकाभिः सह प्रदक्षिणसप्तकं विधाय कुठारेण उल्मुकोपरि प्रहारसप्तकं विधाय–'ॐ क्रव्यादाय नमस्तुभ्यम्' इत्युक्त्वा एकैकां काष्ठिकां क्षिपेत्।

ततो बालपुरःसराः वृद्धपश्चिमाः पादेन पादस्पर्शम् अकुर्वाणाः शवानुगमनकर्तारः जलाशयं गच्छेयुः[३]।

---

१. पञ्चग्रन्थिसमन्वितं सप्तग्रन्थिसमन्वितं वा। गंगातटे काश्यां वा दाहानन्तरं तत्क्षण एव अस्थिसंचयः।

२. आदित्यपुराणे–निश्शेषस्तु न दग्धव्यः शेषं किञ्चित् त्यजेत् ततः। **अत्रावसरे** कालक्रियां कुर्यात्। तथाहि–अर्धे दग्धेऽथवा पूर्णे स्फोटयेत् तस्य मस्तकम्। गृहस्थानान्तु काष्ठेन यतीनां श्रीफलेन च ॥

३. दिवसे शवस्पर्शे दाहानन्तरं रात्रौ ग्रामप्रवेशः । रात्रौ शवस्पर्शादिकरणे सूर्योदयानन्तरं ग्रामप्रवेशः। कर्तव्यः। इत्येव सर्वनिबन्धस्वरसः।

## अथ तिलाञ्जलि विधिः

तत्र जलाशये शवानुगमनकर्तारः सचेलस्नानं कृत्वा निमज्जनात् प्रागेव कृतापसव्याः दक्षिणाऽभिमुखाः प्रक्षालितैकवस्त्रधराः–'ॐ आपोनः शोशुचदध्वम्' इति वामहस्ताऽनामिकया जलं दक्षिणतो नीत्वा सकृत् निमज्जयेयुः। ततो मोटक-तिल-जलान्यादाय मृतं मनसा ध्यायन्तः तिलाञ्जलिं दद्युरनेन–

ॐ अद्यामुकगोत्र (पितः) अमुकप्रेत एष तिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठताम्।

ततः पुनः स्नात्वा बालपुरस्सराः वृद्धपश्चिमाः पादेन पादस्पर्शम् अकुर्वाणाः गृहं गच्छेयुः।

तत्र प्राङ्गणद्वारे–ॐ लौहवद् दृढकायोऽस्तु, इति लौहं, ॐ अश्वमेव स्थिरो भूयासम्, इत्यश्मानं, ॐ अग्निर्नः शर्म यच्छतु, इत्यग्निं स्पृशेत्। अत्र प्रत्येकं जलं स्पृशेत्। ततः यथाचारात् निम्बपत्रादिकं प्राश्य स्व-स्वगृहं गच्छेत्।

## अथ पर्णनरदाहविधिः

दाहशरीराऽभावे तदस्थि घृतेन अभ्युक्ष्य वस्त्रैराच्छाद्य पूर्ववद् दहेत्। अस्थ्नामप्यलाभे षष्ट्यधिकपलाशपत्रशतत्रयेण (टिप्पण्योक्तविधिना) मनुष्याकृतिं[1] विन्यस्य शिरसः स्थाने नारिकेलफलं दत्त्वा–'ॐ असौ स्वर्गाय लोकाय स्वाहा' इत्युक्त्वा एवं पर्णनरं पूर्ववद् दग्ध्वा तद्भस्म जले क्षिप्त्वा त्रिरात्रमशुचिर्भवेत् ।

॥ इति ॥



१. मनुष्याकृतिविन्यासप्रकारस्तु–
शिरस्यशीत्यर्धं दद्यात् ग्रीवायां तु दशैव तु। बाह्वोश्चैव शतं दद्यादङ्गुलीषु तथा दश ॥
उरसि त्रिशतं दद्यात् विंशतिं जठरे तथा। शिश्ने द्वादशान् दद्यात् त्रिशतं जानुजङ्घयोः ॥
पादाङ्गुलिषु दश दद्यादेतत् प्रेतस्य कल्पनम्। ऊर्णासूत्रेण बध्वा तु प्रलेप्तव्यस्तथा यवैः ॥
सुपिष्टैर्जलमिश्रैस्तु दग्धव्यश्च तथाऽग्निना। असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा विधानतः ॥

# वर्षकृत्ये शुद्धिपत्रम्

## ( कृपया पुस्तकं संशोध्य व्यवह्रियताम् )

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| II | १ | पुत्रेण पं० | पौत्रेण पं० |
| VII | ३० | मुद्रा | मुद्र |
| VIII | २१ | ३२पणाः | ३२ पणाः, |
| XI | १२ | ब्राह्मणा | ब्राह्मेण |
| ,, | २७ | 2 दण्डाः | ४ दण्डाः |
| ,, | २८. | प्रदोषो | प्रदोषः |
| ,, | २९ | 2 | ४ |
| १२ | ३१ | रो ण्यसि | रोहिण्यसि |
| १३ | ४ | बाध्वा | बद्ध्वा |
| १६ | ११ | नैद्यानि | नैवेद्यानि |
| २१ | २३ | कुयानयन | कुशानयन |
| २२ | ७ | वास्यां | वास्यायां |
| २४ | १९ | योजितराः | योजिताः |
| २५ | २४ | शवकाय | शावकाय |
| २६ | २५ | द्विजोत्मम् | द्विजोत्तमम् |
| २७ | १५ | पुण्येननैव | पुण्येनैव |
| ,, | २० | त सदा | ते सदा |
| २८ | ३ | व्रतरात | व्रतराज |
| ,, | १४ | कुर्य्यः | कुर्य्युः |
| ,, | १६ | महा | मह |
| ,, | २५ | घ्राणा | घ्राणप्राणा |
| ३१ | १४ | वबहुभि | बहुभि |
| ३२ | १४ | परंशु | परशु |
| ,, | १८ | रजाता | राजता |
| ३३ | २८ | एतान | एतानि |
| ३४ | १८ | एकविंशति | द्वाविंशति |
| ३५ | २८ | सृह | सुह |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३६ | २ | पमिद्धद | प्रसिद्ध्य |
| ३६ | ८ | पृत्र | पुत्र |
| ३६ | २१ | शतिरंव | शतिमेव |
| ३७ | १९ | तद्यो | तद्दो |
| ३७ | २४ | भासित | भाषित |
| ३७ | २८ | जलान्दाय | जलान्यादाया |
| ३८ | १० | शष्कुलो | शष्कुली |
| ३८ | २६ | कार्यो | कार्यं |
| ३९ | १ | आद्यादि | अद्यादि |
| ,, | ४ | मुक्ति | भुक्ति |
| ,, | १९ | पुष्ह | पुष्पह |
| ,, | २७ | मन्त्रिम | मन्त्रितम् |
| ४० | २२ | महीमालः | महीपालः |
| ४१ | १३ | भूपाला | भुपालो |
| ४३ | १६ | यानतं | यान्तं |
| ,, | २२ | विप्रहः | विग्रहः |
| ,, | २४ | शङ्का | शङ्कां |
| ,, | २५ | सौभग्याय | सौभाग्याय |
| ,, | २८ | क्षिपनतीं | क्षिपन्तीं |
| ,, | २९ | डालोक | डोलकं |
| ४४ | १३ | करिष्यनित | करिष्यन्ति |
| ,, | १८ | र्षया | र्ष्यया |
| ४८ | १९ | प्रणामामि | प्रणमामि |
| ४९ | २९ | कालाकाष्ठा | कलाकाष्ठा |
| ,, | २९ | स्थाया | स्थया |
| ५१ | ४ | नैवेद्यः | नैवेद्यैः |
| ,, | ९ | चान्तो | चान्ते |

# शुद्धि-पत्रम्

| पृष्ठम् | पंक्ति: | अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्ति: | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ५१ | २३ | दतो | दते | ८५ | १७ | व्राह्मणे | ब्रह्मणे |
| ५२ | ९ | कह्वार | कह्लार | ८८ | १६ | लोलाया | लोलया |
| ,, | १५ | नूनंबु | नूनं | ८९ | ३ | दत्ता | दत्त |
| ,, | १५ | ब्दु | द्बु | ८९ | १५ | शोभानायां | शोभनायां |
| ,, | १६ | वास्य | बोस्य | ९० | २ | ज्यो:ति | ज्योति |
| ,, | २२ | सवैं | सर्वैं | ९० | १९ | वाश्या | वास्या |
| ,, | २८ | कौणिड | कौण्डि | ,, | २६ | न्निं सरयेयु: | निस्सारयेयु: |
| ५४ | १३ | यतुर्दशीम् | चतुर्दशीम् | ९१ | ६ | पूर्वाह्वे | पूर्वाह्ने |
| ५४ | २२ | वा: | वा | ,, | २२ | अदित्य | आदित्य |
| ५५ | २ | सवय | स्वय | ,, | २६ | नाशस्तो | नाशस्ततो |
| ५७ | १८ | प्येक: | प्येक | १०१ | १५ | यज्ञा | यज्ञो |
| ६० | ११ | सृतेत् | सृजेत् | ,, | २६ | उषा | उष: |
| ६२ | १० | अन्तरिक्षा | आन्तरिक्षा | १०३ | ५ | तवं | त्वं |
| ६३ | ७ | विसृत | विसृज | ,, | १७ | ख्याता | ख्यात |
| ६५ | ७ | स्मिरण | स्मरणा | १०६ | १४ | तं | तद् |
| ६९ | ५ | ध्यसमदा | ध्यस्मदा | १०७ | ११ | यित्री | भगिनीं |
| ,, | ९ | मिपि | मपि | ,, | २८ | वप्नोति | वाप्नोति |
| ६९ | २९ | ततो: | तत: | ११० | १४ | शुचन्द्र | चन्द्र |
| ७० | २८ | सृतेज्ञलं | सृजेज्ञलं | ११३ | ३ | वेलायम् | वेलायाम् |
| ७१ | ४ | सोम | सौम | ,, | १६ | प्रमादिक | प्रामादिक |
| ७१ | २१ | पिण्डा | पित्रा | ११४ | १६ | प्रसिद्धाम् | प्रसिद्धम |
| ७५ | २ | शन्या | शान्या | ,, | १८ | नात्र | नान्यत्र |
| ७९ | ८ | कल्प | कल्य | ११७ | १३ | प्रिय | प्रिय: |
| ,, | १३ | शौल | शील | ,, | २२ | भ्रमस्त | भ्रमतस्त |
| ८१ | २२ | कायं | कायां | ११९ | २५ | ब्रह्न | ब्रह्म |
| ,, | २३ | भण | भरण | १२६ | १८ | देवोदास | दिवोदास |
| ,, | ३० | तम् | तत् | १२७ | १२ | जूषता | जुषता |
| ८३ | २९ | तभ्यन्तर | तदभ्यन्तर | १३० | १४ | समाप्त: | समाप्तं |
| ८४ | १४ | देवानं | देवानां | १३१ | ६ | ठत्व | ठत्वं |

# शुद्धि-पत्रम्

| पृष्ठम् | पंक्ति: | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३३ | ९ | पाद्ये | पाद्मे |
| १३५ | २ | भक्त | भक्ति |
| १३७ | १० | ब्राह्मणा | ब्रह्मणा |
| ,, | २० | प्थुका | पृथुका |
| १३८ | १० | जलिन | जलिना |
| १४२ | १८ | कारा | मारा |
| १४४ | १० | ग्रामद् | ग्रामाद् |
| १४६ | २ | सग्गन्ध | सगन्ध |
| १४८ | २३ | सवै | सर्वै |
| १५१ | २६ | भूर | भूरि |
| १५३ | ९ | गृह्य | गुह्य |
| १५६ | २४ | वसांसि | वासांसि |
| १५८ | १४ | कर्त्तव्यै | कर्त्तव्य |
| १५९ | २३ | त्तम् | त्तम |
| ,, | ३० | न्यज | न्यजं |
| १६० | २८ | रूत्वसं | रूत्सवं |
| १६१ | १ | नित्यो | नित्य |
| ,, | १३ | मर्तये | भूतये |
| १६२ | १० | ब्राह्मण: प्रीण | ब्रह्मण: प्रीण |
| ,, | २६ | धबव्यव | व्यव |
| १६४ | ९ | व्रत | बत |
| ,, | १२ | नुन्ति | न्नन्ति |
| १६५ | १० | धर्माद | धर्मा |
| ,, | २० | श्रमाना | श्रमाणा |
| १७२ | ३० | यद्देभ्यो | यद्देवेभ्यो |
| ,, | ३० | पित्रदि | पित्रादि |
| १७३ | ९ | होमर्चने | होमार्चने |
| १७५ | २७ | पद्मपु.........नात् | × |
| ,, | २८ | वैशा.........मिति तक | × |
| १७८ | १२ | शूद्रति | शूद्राति |
| १८० | ४ | कार्या-कार्या | ॐ अनन्तोसि, |
| १८० | २८ | वञ्चेत् | पिञ्चेत् |
| ,, | ३० | नामो | नामतो |
| १८५ | ९ | चितिथौ | चित्तिथौ |
| ,, | २४ | भोजनवृत्ति | भोजननिवृत्ति |
| १८६ | २६ | सम्भानव्य | सम्भाव्य |
| १८८ | ७ | वासैर्ये | वासैर्यै: |
| १९१ | ९ | तदां | तदा |
| ,, | ३२ | चान्य | चान्यत् |
| १९२ | ३ | चदि | यदि रोचते |
| १९२ | १० | बन्धुभि | बन्धुभि: |
| १९३ | २५ | वाण्ज्यिं | वाणिज्यं |
| ,, | २५ | श्रीमत: | श्रीमता |
| १९४ | ५ | सस्त्य | सत्य |
| ,, | ८ | तच्छ्रू | तच्छ्रू |
| १९५ | २ | गतस्दा | गतस्तदा |
| ,, | ५ | स्ततो | ततो |
| ,, | १२ | मारुह्या | मारुह्य |
| ,, | १५ | मासं | मास |
| ,, | २० | नायञ्च | नाय च |
| ,, | ,, | प्रसादञ्च च | प्रसादञ्च |
| ,, | २१ | रित्यज्य | परित्यज्य |
| १९६ | १ | चायति | चायाति |
| ,, | १५ | सत्देवस्य | सत्यदेवस्य |
| १९७ | ७ | हर्ष्मन्त: | हविष्मन्त: |
| १९८ | १५ | आयमान: | जायमान: |
| १९९ | ९ | षिचन्तु | षिञ्चन्तु |
| २०० | १५ | परिपूर्णा | परिपूर्णं |

# शुद्धि-पत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २०० | ३० | पूषाम | पूषा | २१३ | २० | कायी | कादी |
| ,, | ३२ | धर्मरश्मि | घर्मरश्मि | २१४ | १६ | शेपन्नं | शेपान्नं |
| २०१ | ४ | मध्य: | मध्यत: | २१४ | २१ | अद्योर: | अघोर: |
| ,, | ६ | नारन्य | नान्य | २१५ | ८ | वसस्था | वस्था |
| २०२ | ६ | तरण्ये | तरणये | २१६ | १३ | त्वा | धृत्वाजलेन |
| ,, | ७ | सुमहोरण्ये | सुमहोरंणये | २१७ | १२ | श्राद्धो | श्रद्धा |
| ,, | ३० | साध | सार्ध | ,, | २७ | पितन् | पितृन् |
| ,, | ३२ | वचं | वचनं | २१८ | १ | पोर्धूत | पोनिर्धूत |
| २०३ | २० | दाय: | दय: | ,, | ५ | श्राद्धं | श्राद्धे |
| २०५ | १५ | प्रमाण | प्रमाणा: | ,, | २४ | पूर्वाणय | पूर्वाण्य |
| ,, | २५ | आगिन्त: | अग्नित: | ,, | ३१ | अधत | सर्वत |
| ,, | २८ | उत्तरागे | उत्तराग्रे | ,, | ३२ | कद् | कृद् |
| २०६ | ४ | तृष्णी | तूष्णी | २१९ | १ | रनषपिड | रनघ: षड |
| ,, | २४ | दुर्भि | दुर्मि | ,, | ३ | गणा | गण |
| ,, | २५ | कारणम् | करणम् | ,, | ९ | रुचि | रुचि: |
| २०७ | ८ | तरहं | तृरहं | ,, | ११ | नेतँ | नेतृँ |
| २०८ | १७ | भात्रा | भ्रात्रा | ११९ | १२ | मसां | नभसां |
| ,, | १८ | भावो | भावे | ११९ | १४ | दातन् | दातृन् |
| ,, | २४ | उत्सव | उत्सवा | ११९ | २५ | ध्वेति | ष्वेति |
| २१० | १० | हव्य | कव्य | ,, | २९ | स्यिति | स्यति |
| ,, | १४ | प्रति | प्रपिता | ,, | ३१ | क्षोणा | क्षीणा |
| ,, | १६ | इदन्न | इदमन्न | ,, | ,, | स्यति | स्यसि |
| ,, | २४ | गोत्राय | गोत्राया: | २२१ | १८ | पितु | पितु: |
| २११ | १५ | गोत्र: | गोत्र | २२२ | २३ | वैश | वंश |
| ,, | १६ | वृद्धि | वृद्धि: | २२४ | २ | चेल | चैल |
| ,, | १७ | वरि | परि | ,, | ३ | दध्वम् | दद्यम् |
| २१२ | ७ | इत्येन्ने | इत्यन्ने | ,, | १० | अश्वमेव | अश्मेव |
| ,, | १७ | पञ्चनाम् | पञ्चानाम् | ,, | २१ | त्रिशतं | त्रिंशतं |
| २१३ | ३ | पादित | पातित | | | * | |